THE

# KÂSHI-SANSKRIT-SERIES

( *HARIDÂS SANSKRIT GRANTHAMĀLĀ* )

**123.**

( Sāṅkhya Section, No. 2. )



॥ श्रीः ॥

श्रीईश्वरकृष्णविरचिता

## साङ्ख्यकारिका

षड्दर्शनटीकाकृद्वाचस्पतिमिश्रविरचित-

# साङ्ख्यतत्त्वकौमुदी-

सहिता ।

सुषमाख्य-कौमुदीव्याख्यया समलङ्कृता ।



PUBLISHED & SOLD BY

JAYA KRISHNADAS—HARIDAS GUPTA,

*The Chowkhamba Sanskrit Series Office,*

*BENARES.*

THE

# KASHI SANSKRIT ṢERIES

( *HARIDĀS SANSKRIT GRANTHAMĀLĀ* )

## NO. 123.

( Sāṅkhya Section No. 2. )

THE

# SĀṄKHYA KĀRIKĀ

OF

The Great Sage Iśwara Kriśna

*With a commentary called*

# Sāṅkhya Tattva Kaumudī

BY

S'RĪ VĀCHASPATI MIS'RA

*Edited with*

THE SUS'AMĀ COMMENTARY

BY

*Nyāyāchārya*

PANDIT S'RĪ HARIRAM S'ŪKLA

PUBLISHED BY

JAYA KRISHNA DAS HARIDAS GUPTA

*The Chowkhamba Sanskrit Series Office.*

Benares City

1937.

हरिदाससंस्कृतग्रन्थमालासमाख्य-
काशी-संस्कृत-सीरिज़पुस्तकमालायाः
१२३
सांख्यविभागे (२) द्वितीयं पुष्पम् ।

---

श्री
श्रीईश्वरकृष्णविरचिता

# साङ्ख्यकारिका

षड्दर्शनटीकाकृद्वाचस्पतिमिश्रविरचित-

# साङ्ख्यतत्त्वकौमुदी-

सहिता ।

श्रीपूज्यपाद गुरुवर पण्डितराज श्रीराजेश्वरशास्त्रिद्राविड-
महोदयानामन्तेवासिन्यायाचार्य श्रीहरिरामशुक्ल विरचितया

## सुषमाख्य-

कौमुदीव्याख्यया समलङ्कृता ।
पृथक् मुद्रिताभिः कारिकाभिः अकारादिक्रमोपन्यस्तया कारिकासूच्या
विषयसूच्या च सह टीकाकर्त्रा संशोधिता ।

---

प्राप्तिस्थानम्—
जयकृष्णदास हरिदास गुप्तः—
चौखम्बा संस्कृत सीरिज़ आफिस,
बनारस सिटी ।

---

सं० १९९२ वै०

# भूमिका

## श्रीगुरुः शरणम् ।

अथेयमुपस्थाप्यते विदुषां पुरतः सुपमाख्यव्याख्यासनाथा साङ्ख्यतत्त्वकौमुदी । अनधिगतसाङ्ख्यशास्त्राणां बालानां सुविशदं साङ्ख्यसिद्धान्तप्रतिपादने यथेयं प्रभवति न तथाऽन्यः कोपि साङ्ख्यग्रन्थ इति विदितमेव साङ्ख्यशास्त्ररसिकानाम् । कौमुदीकृतो वाचस्पतिमिश्रमहोदयास्तावत् षड्दर्शनटीकाकृत्त्वादेव सर्वेषां दार्शनिकानां सुविदिता एवेति तेषां ग्रन्थानां महिमविषये नात्र किञ्चिद्वक्तव्यमवशिष्यते । वाचस्पतिमिश्रमहोदयानां समयस्तावत् तत्कृतन्यायसूचीनिबन्धस्य "न्यायसूचीनिबन्धोऽयमकारि सुधियां मुदे । श्रीवाचस्पतिमिश्रेण वस्वङ्कवसु ( ८९८ ) वत्सरे ॥ इति श्लोके स्वयमेव तैर्निर्दिष्ट इत्यपि न तिरोहितं तद्ग्रन्थद्रष्टॄणाम् ।

साङ्ख्यकौमुदीमूलभूतानां श्रीईश्वरकृष्णविरचितानां साङ्ख्यकारिकाणां साङ्ख्यशास्त्रीयत्वेनोपलब्धेषु ग्रन्थेषु सर्वापेक्षया प्रमाणमूर्धन्यत्वमस्तीत्यपि श्रीमच्छङ्करभगवत्पादाचार्यविरचितशारीरकमीमांसाभाष्याद्यवलोकनेन सुविशदं विशदीभवति । तत्र खलु मतान्तरखण्डनावसरे वैशेषिकादिसूत्राण्युपदर्शयन्तोपि श्रीमदाचार्याः साङ्ख्यशास्त्रविषये साङ्ख्यकारिका एव प्रमाणत्वेनोपन्यस्तवन्त इति तथोपदर्शनं सांख्यकारिकाणां सूत्रवदेव प्रामाण्यमनुपाययति । सम्प्रत्युपलभ्यमानसाङ्ख्यसूत्राणां कापिलत्वे तु सदेह एव दृश्यते विदुषाम् । साङ्ख्यसूत्रे हि 'अविवेकनिमित्तो वा पञ्चशिखः' ( अ० ६–सू० ६८ ) इत्येतस्मिन् कपिलादनन्तरभावित्वेन प्रसिद्धस्य पञ्चशिखाचार्यस्य नामोल्लेखादिकमेव उक्तस्य संशयस्य प्रयोजकमिति ।

तदेवं विधमहामहिमशालिनोऽस्य ग्रन्थरत्नस्य श्रीजयकृष्णदासगुप्तमहोदयस्य प्रार्थनया छात्राणां लीलया सांख्यसिद्धान्तबोधायातिसरलां सुषमाख्यां व्याख्यां निरमासम् । आशासे चायं श्रमः छात्राणां सुखेन कौमुदीबोधं कुर्वन् सफलीभविष्यतीति । प्रार्थये च मादृशाल्पजनमतिमान्द्यात् प्रमादात् दृष्टिदोषात् सीसकाक्षरसंयोजकदोषाद्वा संजाता अशुद्धीः स्वयं शोधयित्वा माननीयतमा पण्डितवरेण्या एनमध्यापयेयुरिति ।

विदुषां विधेयः

हरिरामशर्मा शुक्लः

# साङ्ख्यकारिका ।



दुःखत्रयाभिघाताज्जिज्ञासा तदपघातके हेतौ ।
दृष्टे साऽपार्था चेन्नैकान्तात्यन्ततोऽभावात् ॥ १ ॥
दृष्टवदानुश्रविकः स ह्यविशुद्धिक्षयातिशययुक्तः ।
तद्विपरीतः श्रेयान् व्यक्ताव्यक्तज्ञविज्ञानात् ॥ २ ॥
मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त ।
षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुषः ॥ ३ ॥
दृष्टमनुमानमाप्तवचनं च सर्वप्रमाणसिद्धत्वात् ।
त्रिविधं प्रमाणमिष्टं प्रमेयसिद्धिः प्रमाणाद्धि ॥ ४ ॥
प्रतिविषयाध्यवसायो दृष्टं त्रिविधमनुमानमाख्यातम् ।
तल्लिङ्गलिङ्गिपूर्वकमाप्तश्रुतिराप्तवचनं तु ॥ ५ ॥
सामान्यतस्तु दृष्टादतीन्द्रियाणां प्रतीतिरनुमानात् ।
तस्मादपि चाऽसिद्धं परोक्षमाप्तागमात्सिद्धम् ॥ ६ ॥
अतिदूरात्सामीप्यादिन्द्रियघातान्मनोऽनवस्थानात् ।
सौक्ष्म्याद्व्यवधानादभिभवात्समानाभिहाराच्च ॥ ७ ॥
सौक्ष्म्यात्तदनुपलब्धिर्नाऽभावात् कार्यतस्तदुपलब्धेः ।
महदादि तच्च कार्यं प्रकृतिसरूपं विरूपं च ॥ ८ ॥
असदकरणादुपादानग्रहणात्सर्वसम्भवाभावात् ।
शक्तस्य शक्यकरणात् कारणभावाच्च सत्कार्यम् ॥ ९ ॥
हेतुमदनित्यमव्यापि सक्रियमनेकमाश्रितं लिङ्गम् ।
सावयवं परतन्त्रं व्यक्तं विपरीतमव्यक्तम् ॥ १० ॥
त्रिगुणमविवेकि विषयः सामान्यमचेतनं प्रसवधर्मि ।
व्यक्तं तथा प्रधानं तद्विपरीतस्तथा चपु मान् ॥ ११ ॥
प्रीत्यप्रीतिविषादात्मकाः प्रकाशप्रवृत्तिनियमार्थाः ।
अन्योन्याभिभवाश्रयजननमिथुनवृत्तयश्च गुणाः ॥ १२ ॥
सत्त्वं लघु प्रकाशकमिष्टमुपष्टम्भकं चलं च रजः ।
गुरु वरणकमेव तमः प्रदीपवच्चाऽर्थतो वृत्तिः ॥ १३ ॥

अविवेक्यादेः सिद्धिस्त्रैगुण्यात्तद्विपर्ययाभावात् ।
कारणगुणात्मकत्वात् कार्यस्याऽव्यक्तमपि सिद्धम् ॥ १४ ॥
भेदानां परिमाणात् समन्वयात् शक्तितः प्रवृत्तेश्च ।
कारणकार्यविभागादविभागाद्वैश्वरूप्यस्य ॥ १५ ॥
कारणमस्त्यव्यक्तं प्रवर्तते त्रिगुणतः समुदयाच्च ।
परिणामतः सलिलवत् प्रति प्रतिगुणाश्रयविशेषात् ॥ १६॥
सङ्घातपरार्थत्वात्त्रिगुणादिविपर्ययादधिष्ठानात् ।
पुरुषोऽस्ति भोक्तृभावात् कैवल्यार्थं प्रवृत्तेश्च ॥ १७ ॥
जननमरणकरणानां प्रतिनियमादयुगपत्प्रवृत्तेश्च ।
पुरुषबहुत्वं सिद्धं त्रैगुण्यविपर्ययाच्चैव ॥ १८ ॥
तस्माच्च विपर्यासात्सिद्धं साक्षित्वमस्य पुरुषस्य ।
कैवल्यं माध्यस्थ्यं द्रष्टृत्वमकर्तृभावश्च ॥ १९ ॥
तस्मात्तत्संयोगादचेतनं चेतनावदिव लिङ्गम् ।
गुणकर्तृत्वेऽपि तथा कर्तेव भवत्युदासीनः ॥ २० ॥
पुरुषस्य दर्शनार्थं कैवल्यार्थं तथा प्रधानस्य ।
पङ्ग्वन्धवदुभयोरपि संयोगस्तत्कृतः सर्गः ॥ २१ ॥
प्रकृतेर्महांस्ततोऽहङ्कारस्तस्माद्गणश्च षोडशकः ।
तस्मादपि षोडशकात् पञ्चभ्यः पञ्च भूतानि ॥ २२ ॥
अध्यवसायो बुद्धिर्धर्मो ज्ञानं विराग ऐश्वर्यम् ।
सात्त्विकमेतद्रूपं तामसमस्माद्विपर्यस्तम् ॥ २३ ॥
अभिमानोऽहङ्कारस्तस्मात् द्विविधः प्रवर्तते सर्गः ।
एकादशकश्च गणस्तन्मात्रपञ्चकश्चैव ॥ २४ ॥
सात्त्विकः एकादशकः प्रवर्तते वैकृतादहङ्कारात् ।
भूतादेस्तन्मात्रः स तामसस्तैजसादुभयम् ॥ २५ ॥
बुद्धीन्द्रियाणि चक्षुःश्रोत्रघ्राणरसनत्वगाख्यानि ।
वाक्पाणिपादपायूपस्थानि कर्मेन्द्रियाण्याहुः ॥ २६ ॥
उभयात्मकमत्र मनः सङ्कल्पकमिन्द्रियं च साधर्म्यात् ।
गुणपरिणामविशेषान्नानात्वं बाह्यभेदाश्च ॥ २७ ॥
शब्दादिषु पञ्चानामालोचनमात्रमिष्यते वृत्तिः ।
वचनादानविहरणोत्सर्गानन्दाश्च पञ्चानाम् ॥ २८ ॥
स्वालक्षण्यं वृत्तिस्त्रयस्य सैषा भवत्यसामान्या ।
सामान्यकरणवृत्तिः प्राणाद्या वायवः पञ्च ॥ २९ ॥
युगपच्चतुष्टयस्य तु वृत्तिः क्रमशश्च तस्य निर्दिष्टा ।

दृष्टे तथाऽप्यदृष्टे त्रयस्य तत्पूर्विका वृत्तिः ॥ ३० ॥
स्वां स्वां प्रतिपद्यन्ते परस्पराकूतहेतुकां वृत्तिम् ।
पुरुषार्थ एव हेतुर्न केनचित्कार्यते करणम् ॥ ३१ ॥
करणं त्रयोदशविधं तदाहरणधारणप्रकाशकरम् ।
कार्यं च तस्य दशधाऽऽहार्यं धार्यं प्रकाश्यं च ॥ ३२ ॥
अन्तःकरणं त्रिविधं दशधा बाह्यं त्रयस्य विषयाख्यम् ।
साम्प्रतकालं बाह्यं त्रिकालमाभ्यन्तरं करणम् ॥ ३३ ॥
बुद्धीन्द्रियाणि तेषां पञ्च विशेषाविशेषविषयाणि ।
वाग्भवति शब्दविषया शेषाणि तु पञ्चविषयाणि ॥ ३४ ॥
सान्तःकरणा बुद्धिः सर्वं विषयमवगाहते यस्मात् ।
तस्मात्त्रिविधं करणं द्वारि द्वाराणि शेषाणि ॥ ३५ ॥
एते प्रदीपकल्पाः परस्परविलक्षणा गुणविशेषाः ।
कृत्स्नं पुरुषस्याऽर्थं प्रकाश्य बुद्धौ प्रयच्छन्ति ॥ ३६ ॥
सर्वं प्रत्युपभोगं यस्मात्पुरुषस्य साधयति बुद्धिः ।
सैव च विशिनष्टि पुनः प्रधानपुरुषान्तरं सूक्ष्मम् ॥ ३७ ॥
तन्मात्राण्यविशेषास्तेभ्यो भूतानि पञ्च पञ्चभ्यः ॥
एते स्मृता विशेषाः शान्ता घोराश्च मूढाश्च ॥ ३८ ॥
सूक्ष्मा मातापितृजाः सह प्रभूतैस्त्रिधा विशेषाः स्युः ।
सूक्ष्मास्तेषां नियता मातापितृजा निवर्तन्ते ॥ ३९ ॥
पूर्वोत्पन्नमसक्तं नियतं महदादिसूक्ष्मपर्यन्तम् ।
संसरति निरुपभोगं भावैरधिवासितं लिङ्गम् ॥ ४० ॥
चित्रं यथाऽऽश्रयमृते स्थाण्वादिभ्यो विना यथा छाया ।
तद्वद्विना विशेषैर्न तिष्ठति निराश्रयं लिङ्गम् ॥ ४१ ॥
पुरुषार्थहेतुकमिदं निमित्तनैमित्तिकप्रसङ्गेन ।
प्रकृतेर्विभुत्वयोगान्नटवद्व्यवतिष्ठते लिङ्गम् ॥ ४२ ॥
सांसिद्धिकाश्च भावाः प्राकृतिका वैकृताश्च धर्माद्याः ।
दृष्टाः करणाश्रयिणः कार्याश्रयिणश्च कललाद्याः ॥ ४३ ॥
धर्मेण गमनमूर्ध्वं गमनमधस्ताद्भवत्यधर्मेण ।
ज्ञानेन चाऽपवर्गो विपर्ययादिष्यते बन्धः ॥ ४४ ॥
वैराग्यात्प्रकृतिलयः संसारो भवति राजसाद्रागात् ।
ऐश्वर्यादविघातो विपर्ययात्तद्विपर्यासः ॥ ४५ ॥
एष प्रत्ययसर्गो विपर्ययाशक्तितुष्टिसिद्ध्याख्यः ।
गुणवैषम्यविमर्दात्तस्य च भेदास्तु पञ्चाशत् ॥ ४६ ॥

पञ्च विपर्ययभेदा भवन्त्यशक्तिश्च करणवैकल्यात् ।
अष्टाविंशतिभेदा तुष्टिर्नवधाऽष्टधा सिद्धिः ॥ ४७ ॥
भेदस्तमसोऽष्टविधो मोहस्य च दशविधो महामोहः ।
तामिस्रोऽष्टादशधा तथा भवत्यन्धतामिस्रः ॥ ४८ ॥
एकादशेन्द्रियवधाः सह बुद्धिवधैरशक्तिरुद्दिष्टा ।
सप्तदश वधा बुद्धेर्विपर्ययात्तुष्टिसिद्धीनाम् ॥ ४९ ॥
आध्यात्मिक्यश्चतस्रः प्रकृत्युपादानकालभाग्याख्याः ।
बाह्या विषयोपरमात् पञ्च नव तुष्टयोऽभिमताः ॥ ५० ॥
ऊहः शब्दोऽध्ययनं दुःखविघातास्त्रयः सुहृत्प्राप्तिः ।
दानं च सिद्धयोऽष्टौ सिद्धेः पूर्वोऽङ्कुशस्त्रिविधः ॥ ५१ ॥
न विना भावैर्लिङ्गं न विना लिङ्गेन भावनिर्वृत्तिः ।
लिङ्गाख्यो भावाख्यस्तस्मात् द्विविधः प्रवर्तते सर्गः ॥ ५२ ॥
अष्टविकल्पो दैवस्तैर्यग्योनश्च पञ्चधा भवति ।
मानुषकश्चैकविधः समासतो भौतिकः सर्गः ॥ ५३ ॥
ऊर्ध्वं सत्त्वविशालस्तमोविशालश्च मूलतः सर्गः ।
मध्ये रजोविशालो ब्रह्मादिस्तम्बपर्यन्तः ॥ ५४ ॥
तत्र जरामरणकृतं दुःखं प्राप्नोति चेतनः पुरुषः ।
लिङ्गस्याऽविनिवृत्तेस्तस्मात् दुःखं स्वभावेन ॥ ५५ ॥
इत्येष प्रकृतिकृतो महदादिविशेषभूतपर्यन्तः ।
प्रतिपुरुषविमोक्षार्थं स्वार्थ इव परार्थ आरम्भः ॥ ५६ ॥
वत्सविवृद्धिनिमित्तं क्षीरस्य यथा प्रवृत्तिरज्ञस्य ।
पुरुषविमोक्षनिमित्तं तथा प्रवृत्तिः प्रधानस्य ॥ ५७ ॥
औत्सुक्यनिवृत्त्यर्थं यथा क्रियासु प्रवर्तते लोकः ।
पुरुषस्य विमोक्षार्थं प्रवर्तते तद्वदव्यक्तम् ॥ ५८ ॥
रङ्गस्य दर्शयित्वा निवर्तते नर्तकी यथा नृत्यात् ।
पुरुषस्य तथाऽऽत्मानं प्रकाश्य विनिवर्तते प्रकृतिः ॥ ५९ ॥
नानाविधैरुपायैरुपकारिण्यनुपकारिणः पुंसः ।
गुणवत्यगुणस्य सतस्तस्याऽर्थमपार्थकं चरति ॥ ६० ॥
प्रकृतेः सुकुमारतरं न किञ्चिदस्तीति मे मतिर्भवति ।
या दृष्टाऽस्मीति पुनर्न दर्शनमुपैति पुरुषस्य ॥ ६१ ॥
तस्मान्न बध्यतेऽद्धा न मुच्यते नाऽपि संसरति कश्चित् ।
संसरति बध्यते मुच्यते च नानाश्रया प्रकृतिः ॥ ६२ ॥
रूपैः सप्तभिरेव तु बध्नात्यात्मानमात्मना प्रकृतिः ।

सैव च पुरुषार्थं प्रति विमोचयत्येकरूपेण ॥ ६३ ॥
एवं तत्त्वाभ्यासान्नाऽस्मि न मे नाहमित्यपरिशेषम् ।
अविपर्ययाद्विशुद्धं केवलमुत्पद्यते ज्ञानम् ॥ ६४ ॥
तेन निवृत्तप्रसवामर्थवशात्सप्तरूपविनिवृत्ताम् ।
प्रकृतिं पश्यति पुरुषः प्रेक्षकवदवस्थितः स्वच्छः ॥ ६५ ॥
दृष्टा मयेत्युपेक्षक एको दृष्टाऽहमित्युपरमत्यन्या ।
सति संयोगेऽपि तयोः प्रयोजनं नाऽस्ति सर्गस्य ॥ ६६ ॥
सम्यग्ज्ञानाधिगमाद्धर्मादीनामकारणप्राप्तौ ।
तिष्ठति संस्कारवशाच्चक्रभ्रमिवत् धृतशरीरः ॥ ६७ ॥
प्राप्ते शरीरभेदे चरितार्थत्वात्प्रधानविनिवृत्तौ ।
ऐकान्तिकमात्यन्तिकमुभयं कैवल्यमाप्नोति ॥ ६८ ॥
पुरुषार्थज्ञानमिदं गुह्यं परमर्षिणा समाख्यातम् ।
स्थित्युत्पत्तिप्रलयाश्चिन्त्यन्ते यत्र भूतानाम् ॥ ६९ ॥
एतत्पवित्रमग्र्यं मुनिरासुरयेऽनुकम्पया प्रददौ ।
आसुरिरपि पञ्चशिखाय तेन च बहुधा कृतं तन्त्रम् ॥ ७० ॥
शिष्यपरम्परयाऽऽगतमीश्वरकृष्णेन चैतदार्याभिः ।
सङ्क्षिप्तमार्यमतिना सम्यग्विज्ञाय सिद्धान्तम् ॥ ७१ ॥
सप्तत्यां किल येऽर्थास्तेऽर्थाः कृत्स्नस्य षष्टितन्त्रस्य ।
आख्यायिकाविरहिताः परवादविवर्जिताश्चाऽपि ॥ ७२ ॥

॥ इतीश्वरकृष्णविरचिता सांख्यकारिका समाप्ता ॥



## साङ्ख्यकारिकाया अकारादिक्रमेण--

# सूची।



इति ।

॥ श्रीः ॥

# साङ्ख्यतत्त्वकौमुदीस्थविषयसूची ।

## कारिका. १.

## कारिका. २.

## कारिका० ३.

## कारिका. ४.



## कारिका. ५.

## कारिका. ६.

## कारिका. ९.

## कारिका॰ १०॰

## कारिका. २४.



## कारिका. २५.



## कारिका. २६.



## कारिका. २७.

विषयः पृ. पं.

* ॐतत्सत् *

॥ श्रीकृष्णार्पणमस्तु ॥



॥ श्रीः ॥

# साङ्ख्यतत्त्वकौमुदी



**अजामेकां लोहितशुक्लकृष्णां वह्वीः प्रजाः सृजमानां नमामः ।**

तत्रभवान् विपश्चिदपश्चिमो वाचस्पतिमिश्रः साङ्ख्यसूत्रभूतां कारिकावलीं व्याचिख्यासुः प्रारिप्सितग्रन्थस्य निर्विघ्नपरिसमाप्तिकारणेन कियद्वर्णान्यथाकारेण अजामेकामिति श्रौतेनैव मङ्गलेन 'ईक्षतेर्नाशब्दम्' इति सूत्रोक्ताशब्दत्वहेतुं श्लथयन्प्रधानस्य वैदिकत्वं च व्यवस्थापयन् सांख्यसिद्धान्तसूचनपूर्वकं प्रकृतिं पुरुषांश्च ग्रन्थादौ प्रणमति । अजामेकामिति। न जायते इत्यजा मूलप्रकृतिरित्यर्थः। ननु 'तस्मादव्यक्तमुत्पन्नं त्रिगुणं द्विजसत्तम। (महा० शा० मो० अ० ३३ श्लो० ३१) 'यतः प्रधानपुरुषौ' 'प्रधानं पुरुषश्चैव लीयेते परमात्मनि । इत्यादिवचनैः प्रकृतेः पुरुषाणाञ्च उत्पत्तिविनाशयोः प्रतिपादितत्वेन प्रकृतेः अजाशब्देन साक्षाच्छ्रूयमाणमनादित्वं, तस्याश्चानादिभावतयाऽनुमीयमानमविनाशित्वं, एवं अग्रिमेण अजा ये इत्यादिग्रन्थेन पुरुषेषु बोध्यमानं अनादित्वमविनाशित्वं च कथं संगच्छते । इति चेत्, अत्राहुः अजामेकामित्यादिश्वेताश्वतरश्रुतिप्रामाण्यानुरोधेन पूर्वोक्तवचनेषु प्रकृतिप्रधानशब्दयोः सर्गोत्पत्त्यनुकूलशक्तिविशिष्टप्रकृतिपरत्वेन एवं पुरुषशब्दस्य बुद्धिप्रतिबिम्बितपुरुषपरतया विशेषणयोः शक्तिप्रतिबिम्बयोः उत्पत्तिविनाशशालित्वादेव विशिष्टे तत्प्रयोग उपपादनीयः ।

विज्ञानभिक्षवस्तु 'संयोगलक्षणोत्पत्तिः कथ्यते कर्मजानयोः । वियोजयति अन्योन्यं प्रधानपुरुषावुभौ ॥ प्रधानपुंसोरनयोरेष संहार ईरितः। इति मात्स्यकौर्मवचनयोः प्रामाण्यानुरोधेन तयोस्संयोगवियोगयोरेव उत्पत्तिविनाशपदार्थत्वात् न पूर्वोक्तवचनासङ्गतिरित्याहुः ।

तां नमाम इति सम्बन्धः। ननु कथं प्रत्यक्षाविषयायाः प्रकृतेस्सत्त्वं येन नमस्कारः सविषयः स्यादिति चेत्, कार्यलिङ्गकानुमानेन तस्याः सत्त्वं साधयति । वह्वीः प्रजाः सृजमानामिति ।

केचित्तु प्रकृतेः श्रुतिसिद्धत्वेपि दार्ढ्याय कार्यलिङ्गकानुमानं सूचयितुमाह । वह्वीः प्रजाः सृजमानां नमाम इतीत्येवमवतारयन्ति,तन्मन्दम् 'तस्मादपि चासिद्धं परोक्षमाप्तागमात्सिद्धमित्यग्रिमकारिकायामनुमानासिद्धपदार्थस्यैव श्रुतिसिद्धत्वप्रतिपादनात् 'संघातपरार्थत्वात्त्रिगुणादिविपर्ययादधिष्ठानात्' इत्यादिवक्ष्यमाणकारिकोक्तरीत्या प्रधानस्यानुमानसिद्धत्वेन तस्य श्रुतिसिद्धत्वासम्भवात् ।

वह्वीः अनेकविधाः प्रजाः प्रजायन्ते इति प्रजा इति व्युत्पत्त्या प्रजापदं कार्यमात्रपरं, ताः सृजमानाम् उत्पादयन्तीम् । तथा चायं अनुमानप्रकारः, विमताः प्रजाः सुखदुःखमोहात्मकवस्तुप्रकृतिकाः तत्स्वभावान्वितत्वात् यो यत्स्वभावान्वितः स तदात्मकव-

अजा ये तां जुषमाणां भजन्ते जहत्येनां भुक्तभोगां नुमस्तान् ॥१॥

स्तुप्रकृतिकः यथा मृत्त्वभावान्वितो घटः मृदात्मकवस्तुप्रकृतिक इति सामान्यव्याप्त्या प्रधानसिद्धिः।

अनवस्थापरिहाराय परमाणूनां निराकरणाय च एकामित्युक्तम् । स्वसजातीयद्वितीयरहितामित्यर्थः। साजात्यं च विकृतित्वानधिकरणत्वे सति उपादानत्वरूपेण उभयोपादानात् एकैकमविकृतित्वमुपादानत्वमादाय तेन रूपेण सजातीययोः पुरुषबुद्धयोः सत्त्वेपि न क्षतिः। केचित्तु साजात्यशरीरे तत्त्वान्तरोपादानत्वस्य प्रवेशमाहुः। तत्र तत्त्वान्तरपदस्य निष्प्रयोजनकत्वं दुर्निवारमेव।

ननु 'मायान्तु प्रकृतिं विद्यात्' 'सत्त्वं रजस्तम इति प्राकृतं तु गुणत्रयम् ।' एतन्मयी च प्रकृतिर्माया या वैष्णवी मता ॥ इति वचनाभ्यां मायाया एव प्रकृतिपदार्थत्वेन 'इन्द्रो मायाभिः पुरुरूपमीयते' इति श्रुत्या मायायाः बहुत्वावगमात्, कथं तस्यां सजातीयद्वितीयरहितत्वमिति वाच्यम्। पूर्वोक्तानुमित्या लाघवज्ञानसहकृतया 'मायान्तु प्रकृतिं विद्यात्'अजामेकामिति' श्रुत्या च मायाया एकत्वस्यावगतत्वेन मायाभिरित्यादौ बहुवचनस्य सत्त्वरजस्तमोरूपगुणत्रयाभिप्रायकत्वात्। यत्तु कैश्चित् 'अजामेकामिति' श्रौतश्रुत्या मायाभिरिति लैङ्गिकस्य बहुत्वस्य बाध इत्युक्तम्, तत्तु मायाभिरित्यत्र तृतीयाबहुवचनश्रुत्या बहुत्वस्य श्रौतत्वात्तस्य लैङ्गिकत्वाभिधानं अविद्याविलसितमेव।

यच्च गर्भोपनिषदि 'अष्टौ प्रकृतयः षोडश विकाराः' इति श्रूयते यदपि 'भिन्ना प्रकृतिरष्टधा इति भगवद्वाक्यम्, तयोः प्रकृतिपदं तत्त्वान्तरोपादानत्वार्थकम्। तथाच प्रकृतिमहत्तत्त्वाहंकारपञ्चतन्मात्राष्टकानां तत्त्वान्तरोपादानतया प्रकृतित्वेन तयोरष्टविधत्वोक्तिः साधु संगमनीया।

एकस्या अपि गुणवैचित्र्याद्विचित्रकार्यकर्तृत्वद्योतनायाह। लोहितशुक्लकृष्णामिति। लोहिता चासौ शुक्ला च लोहितशुक्ला लोहितशुक्ला चासौ कृष्णा च लोहितशुक्लकृष्णा इति कर्मधारयः, असति बाधके कर्मधारयसमासस्य निपादस्थपत्यधिकरणन्यायेन लक्षणाविरहेण औत्सर्गिकत्वात्, तत एव च लोहितादिशब्दस्य पुंवद्भावोपि 'पुंवत्कर्मधारयजातीयदेशीयेषु' इति सूत्रात्, तत्र लोहितशुक्लकृष्णशब्दाः यद्यपि शक्त्या रूपविशेषवाचका एव, तथापि लक्षणया क्रमेण रजस्सत्त्वतमोगुणान्बोधयन्ति। यद्यपि सत्त्वस्य सुखात्मकतया प्राधान्यात् तस्यैव प्रथमं उपादानमुचितम्, तथापि रजसः प्रवर्तकतया सृष्टिक्रियाप्रवृत्तेः प्राथमिकतया तस्य प्रथममुपदेशः, स्थितिदशायां च कार्याणां प्रकाशमानत्वेन तदनन्तरं सत्त्वोल्लेखः, तमसश्च विनाशहेतुत्वात् एतन्मते विनाशस्य च स्वरूपावरणरूपत्वात् तदनन्तरं तदुल्लेखः। एतेन प्रकृतेरेव सृष्टिस्थितिविनाशहेतुत्वं न तु ब्रह्मणः तस्य एतन्मतेऽलीकत्वादिति ध्वनितम्।

ननु अचेतनायाः प्रकृतेः कथं सर्वकार्योत्पादकत्वमित्याशङ्कायां भोगापवर्गरूपपुरुषार्थस्यैव हेतुत्वं तद्भिन्नस्य चेतनस्य कर्तृत्वे प्रमाणाभावात् इत्याशयं मनसि निधाय येषां पुरुषाणां भोगापवर्गरूपपुरुषार्थमुत्पादयितुं अस्याः प्रवृत्तिस्तानपि प्रणमति। अजा ये तामिति। ये सङ्घातपरार्थत्वादित्यादिना सिद्धाः, अजाः प्रागभावाप्रतियोगिनः, अत्र प्रकृतेरजात्वेपि बहुवचनसामर्थ्यात् पुरुषाणामेव बोधः।

कपिलाय महामुनये मुनये शिष्याय तस्य चासुरये ॥
पञ्चशिखाय तथेश्वरकृष्णायैते नमस्यामः ॥ २ ॥

इह खलु प्रतिपित्सितमर्थं प्रतिपादयन् प्रतिपादयिताऽवधेयव-

---

जुपमाणां स्वकार्यभोगादिभिः सेवमानाम् । भजन्ते तामेव आत्मत्वेन गृहीत्वा तद्धर्मान् आत्मन्यध्यस्यन्ति, त एव उत्पन्नविवेकज्ञानाः भुक्तभोगां सम्पादितभोगापवर्गरूपपुरुषार्थाम्, एतेन अनागतावस्थस्य भोगापवर्गरूपपुरुषार्थस्य प्रवर्त्तकतया भोगस्य च विवेकाग्रहेणैवोत्पत्तेः विवेकख्यात्यनन्तरं अपवर्गस्यापि सम्पादिततया न तदनन्तरं प्रकृतिविचेष्टितमिति ध्वनितम्। जहति परित्यजन्ति, तान्नुम इति सम्बन्धः॥

'यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ। तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः॥ इति सिद्धान्तानुसारेण प्रकृतिपुरुषान्प्रणम्य गुरुवन्दनमपि करोति। कपिलायेत्यादिना। यद्यपि कपिलादीनां साक्षान्नाध्यापकत्वं, तथापि स्वीयग्रन्थद्वारा उपदेशकत्वात्तद्बोध्यम्। अत्र नमस्याम इति उत्तमपुरुषबहुवचनानुरोधात् वयमिति कर्तृपदमध्याहार्यम्। एते इत्यस्य च वयमित्यनेनान्वयः। कपिलशब्दस्यानेकार्थकतया प्रकृतशास्त्रप्रवर्तकस्यैव बोधनायाह। महामुनय इति। मुनित्वं च तपस्वित्वं, महत्त्वं च अप्रतिहतज्ञानवत्त्वम्, एतेन प्रकृतशास्त्रप्रवर्त्तककपिलस्य तपस्वित्वेन विप्रलिप्साकरणापाटवरूपदोषराहित्यस्य अप्रतिहतज्ञानवत्त्वेन च भ्रमप्रमादराहित्यस्य प्रतिपादनेन तद्वाक्यस्य सकलदोषाशंकारहितत्वात् निरंकुशं प्रामाण्यमित्यपि सूचितम्।

साक्षात् कपिलशिष्यमासुरिमपि प्रणमति। मुनय इत्यादिना। आसुरेः कपिलशिष्यत्वं च 'पंचमे कपिलो नाम सिद्धेशः कालविप्लुतम्। प्रोवाचासुरये सांख्यं तत्त्वग्रामविनिर्णयम्॥ (भाग०प्र०स्कं०अ०३श्लो०१०) इति वाक्येन बोध्यम्। अत्रापि आसुरेः कपिलशिष्यत्वोक्त्या अप्रतिहतज्ञानवत्त्वं मुनित्वोक्त्या च तद्वाक्यानामपि कपिलवाक्यवदेव प्रामाण्यमित्याशयः। तस्य कपिलस्य, 'आसुरेः प्रथमं शिष्यं यमाहुश्चिरजीविनम्। पञ्चस्रोतसि निष्णातः पञ्चरात्रविशारदः। इत्यादिना बोधितासुरिशिष्यताकं पञ्चशिखमपि प्रणमति। पञ्चशिखायेति। तथेत्यनेन आसुरिशिष्यत्वमुनित्वयोः प्रख्यापनात् तद्वाक्यस्यापि तथैव प्रामाण्यमिति भावः। प्रकृतग्रन्थकर्तारमपि प्रणमति। ईश्वरकृष्णायैत इत्यादिना।

ननु 'नमःस्वस्तिस्वाहा' इत्यादिसूत्रेण नमःशब्दयोगे कर्मणः सम्प्रदानविधानात् अत्र च तादृशान्यतमशब्दयोगाभावात् कथं सम्प्रदानत्वं कुतश्च तदधीना कपिलायेत्यादि चतुर्थी। न च नमस्याम इति वाक्यघटकनमःशब्दस्य योगसत्त्वात् सा युक्तेति वाच्यम्। नमस्यामशब्दघटकीभूतनमःशब्दस्य नमस्यशब्दैकदेशतया तस्य अर्थवत्त्वाभावेन तद्योगस्य अकिञ्चित्करत्वात्। अत एवाह भाष्यकारः 'अर्थवतो नमःशब्दस्य ग्रहणम् न च नमस्यशब्दे नमः शब्दो अर्थवानिति। इति चेत् उच्यते कपिलायेतिशब्दघटकचतुर्थ्याः कपिलं प्रीणयितुमित्यर्थः। तथा च 'क्रियार्थोपपदस्य च कर्मणि स्थानिनः' इति सूत्रेण अप्रयुज्यमानस्य क्रियोपपदस्य तुमुनः कर्मणि चतुर्थ्याः विधानेन अत्र तादृशस्य प्रीणयितुमिति तुमुनः कर्मणि चतुर्थ्याः साधुत्वात् कपिलायेत्यादिचतुर्थ्याः प्रयोगो युक्त एवेति॥

सम्प्रति प्रकृतशास्त्रस्य विशिष्टप्रयोजनवत्तां बोधयितुं भूमिकामारचयति। इह

चनो भवति प्रेक्षावताम् । अप्रतिपित्सितमर्थं तु प्रतिपादयन् 'नायं लौकिको नापि परीक्षकः' इति प्रेक्षावद्भिरुन्मत्तवदुपेक्ष्येत । स चैषां प्रतिपित्सितोऽर्थो यो ज्ञातः सन् परमपुरुषार्थाय कल्पते, इति प्रारिप्सितशास्त्रविषयज्ञानस्य परमपुरुषार्थसाधनहेतुत्वात् तद्विषयजिज्ञासामवतारयति—

दुःखत्रयाभिघाताज्जिज्ञासा तदपघातके हेतौ ॥
दृष्टे साऽपार्था चेन्नैकान्तात्यन्ततोऽभावात् ॥ १ ॥

---

खल्वित्यादिना। इह उपदेशकाले, खल्विति वाक्यालङ्कारे, प्रतिपित्सितं प्रतिपित्सागोचरं जिज्ञासाविषयमिति यावत्। तेन सन्दिग्धत्वसप्रयोजनत्वयोर्लाभः जिज्ञासाविषयत्वस्य तद्व्याप्यत्वात्, तथाभूतं अर्थं अभिधेयम्, प्रतिपादयन् बोधयन्, प्रतिपादयिता उपदेष्टा, अवधेयवचनः अवधेयं चित्तैकाग्र्यपुरस्सरशुश्रूषाविषयं वचनं वाक्यं यस्य एवंभूतः, प्रेक्षावताम् प्रकृष्टफलोद्देशमन्तरेणाप्रवर्तमानानाम्, एतद्वैपरीत्ये त्वाह। अप्रतिपित्सितमिति। अप्रतिपित्सितं जिज्ञासाऽविषयीभूतम्, लौकिकः शब्दतदुपजीविप्रमाणातिरिक्तप्रमाणजन्यबुद्धिप्रकर्षः, परीक्षकः शब्दतदुपजीविप्रमाणजन्यबुद्धिप्रकर्षः, तथा नेति प्रेक्षावद्भिः उन्मत्तवत् भ्रान्तचित्तवत्, उपेक्ष्येत उपेक्षाविषयवचनः स्यादित्यर्थः। ननु कः प्रेक्षावतां जिज्ञासितोर्थः इत्याशङ्कायामाह। स चेति। यो ज्ञातः सन् परमपुरुषार्थो मोक्षः पुरुषार्थस्य चतुर्विधत्वेपि नित्यनिरतिशयत्वरूपस्य परमत्वस्य तत्रैव सत्त्वात्। तस्मै कल्पते समर्थो भवति, मोक्षसाधनीभूतज्ञानविषय इति यावत्। तथा च मोक्षसाधनीभूतज्ञानविषयीभूतार्थस्यैव प्रेक्षावदपेक्षितार्थत्वेन प्रकृतशास्त्रार्थस्य तादृशत्वमाह। प्रारिप्सितेति। प्रारब्धुमिष्टं यच्छास्त्रं तस्य यो विषयः पञ्चविंशतितत्त्वानि तज्ज्ञानस्य परमपुरुषार्थो मोक्षः तस्य साधनं यत्सत्त्वपुरुषान्यताज्ञानं तस्य हेतुत्वात्। तद्विषयजिज्ञासां शास्त्रविषयजिज्ञासाम्, अवतारयति साधयतीत्यर्थः ॥

दुःखत्रयाभिघातादिति। अत्र अनुमानप्रकारस्तु शास्त्रप्रतिपाद्यो विषयः मुमुक्षुणा जिज्ञास्यः दुःखत्रयनिवृत्तिरूपप्रयोजनोपायत्वेन मुमुक्षुज्ञानविषयीभूतार्थजनकत्वात् यत् प्रयोजनोपायत्वेन यज्ज्ञानविषयीभूतार्थजनकं तत्तेन जिज्ञास्यं यथा धर्मादिकं, अत्र शास्त्रविषयजिज्ञासामन्तरेणापि दृष्टोपायेनैव प्रयोजनवत्त्वसिद्धौ शास्त्रजिज्ञासा न सम्भवतीति शङ्कते। दृष्टे साऽपार्थेति। तत्खण्डयति। नैकान्तेति। एकान्तो दुःखनिवृत्तेरवश्यं भावः अर्थाद्दुःखनिवृत्तिरूपफलोपधायकत्वं, अत्यन्तो निवृत्तस्य दुःखस्य पुनरनुत्पादः स्वसमानाधिकरणदुःखप्रागभावासमानकालीनत्वं, तथा च इदमत्रानुमानशरीरं मुमुक्षुणा दृष्टोपायो न जिज्ञास्यः स्वसमानाधिकरणदुःखप्रागभावासमानकालीनदुःखत्रयनिवृत्तिरूपफलोपधायकत्वाभावात्, अत एतादृशदुःखनिवृत्तिरूपफलसाधनत्वं शास्त्रीयज्ञानस्यैवेति तद्विषय एव मुमुक्षुणा जिज्ञास्यः। एतेन यथाश्रुते दुःखापघातकहेतुरूपपक्षे आत्मनिष्ठस्य दुःखत्रयापघातस्य हेतोरसत्त्वात् कथमत्र साध्यहेतुभाव इति शंका निरस्ता ।

एवं हि शास्त्रविषयो न जिज्ञास्येत यदि दुःखं नाम जगति न स्यात्, सद्वा न जिहासितम्, जिहासितं वा अशक्यसमुच्छेदम्। अशक्यसमुच्छेदता च द्वेधा दुःखस्य नित्यत्वात्, तदुच्छेदोपायापरिज्ञानाद्वा, शक्यसमुच्छेदत्वेऽपि च शास्त्रविषयस्य ज्ञानस्यानुपायत्वाद्वा, सुकरस्योपायान्तरस्य सद्भावाद्वा।

तत्र न तावद्दुःखं नास्ति नाप्यजिहासितमित्युक्तम्—"दुःखत्रयाभिघातात्" इति। दुःखानां त्रयं दुःखत्रयम्। तत् खलु आध्यात्मिकम्, आधिभौतिकम्, आधिदैविकञ्च।

तत्राध्यात्मिकं द्विविधम्, शारीरं मानसं च। शारीरं वातपित्तश्लेष्मणां वैषम्यनिमित्तम्।

मानसं काम—क्रोध-लोभ-मोह-भयेर्ष्या-विषाद-विषयविशेषादर्शननिबन्धनम्। सर्वञ्चैतदान्तरोपायसाध्यत्वादाध्यात्मिकं दुःखम्।

---

पूर्वोक्तानुमानप्रतिबन्धकीभूतान्निश्चयान्क्रमेण दर्शयति। एवं हीति। एवं एतादृशनिश्चयसत्त्वे, शास्त्रविषयः शास्त्रप्रतिपाद्यविषयः, न जिज्ञास्येत जिज्ञासाविषयो न स्यात् शास्त्रप्रतिपाद्यविषयपक्षकमुमुक्षुजिज्ञास्यत्वसाध्यकानुमितिर्न स्यादिति,यावत्।

यदि दुःखं नाम जगति न स्यादिति। तथा च दुःखत्रयनिवृत्तिरूपप्रयोजनोपायत्वेनेत्यादिहेतुघटकीभूतस्य दुःखस्याप्रसिद्ध्या साधनाप्रसिद्धिरिति भावः। सद्वेति। तथाच तत्र जिहासाभावे दुःखत्रयनिवृत्तेः प्रयोजनत्वाभावात्पुनरपि साधनाप्रसिद्धिरेव। जिहासितं वेति। तथाच तादृशदुःखनिवृत्तेरशक्यत्वेन चन्द्रमण्डलानयनोद्देश्यकचिकीर्षाभाववदत्रापि तस्याः प्रयोजनत्वासंभवात् पुनरपि साध्याप्रसिद्धिरेव। नित्यत्वादिति। तथाच दुःखत्रयनिवृत्तेरप्रसिद्ध्या तद्घटितसाधनाप्रसिद्धिरेव। तदुच्छेदेति। दुःखत्रयनिवृत्तिरूपप्रयोजनोपायत्वेन मुमुक्षुज्ञानविषयस्याप्रसिद्ध्या तद्घटितसाधनाप्रसिद्धिरेवात्रापि दोषः। शक्येति। तथाच उक्तानुमाने स्वरूपासिद्धिरिति॥

आदिमनिश्चयद्वयं निराकरोति। तत्रेत्यादिना। यद्यपि दुःखस्यानेकविधत्वाद्दुःखत्रयाभिघातादित्यत्र दुःखत्रयस्यैवोपादानमसङ्गतमिति प्रतिभाति, तथापि त्रित्वं न दुःखे विवक्षितं किन्तु दुःखत्वव्याप्यधर्मे एव तथाच तेषां धर्माणां त्रित्वादत्र त्रयपदं त्रिविधपरं बोध्यम्, तथा च त्रिविधदुःखाघातादित्यर्थः। तानेव विधानाह। तत्खल्वित्यादिना। अत्र कायिकमानसिकयोः उभयोरपि आध्यात्मिकपदेन ग्रहणन्तयोः अहंकारास्पदनिष्ठोपायसाध्यत्वात्॥

मानसमिति। यद्यपि दुःखस्य मनोधर्मत्वेन कथं शारीरमानसेत्यादिभेदः, तथापि मानसपदं मनोमात्रजन्यपरं, तथाच शारीरदुःखस्य मनोमात्रजन्यत्वाभावादुक्तरीत्या विभागो युक्त एवेति केचित्।

अन्ये तु मानसपदं मनोनिष्ठोपायजन्यत्वपरं, तथाच कामक्रोधादीनां मनोनिष्ठत्वात्तज्जन्यदुःखस्यैव मानसपदेन बोधः। इतरदुःखानां च तादृशत्वाभावादुक्तविभागो युक्त एवेत्याहुः।

आन्तरोपायसाध्यत्वादिति। आन्तरः अहंकारास्पदनिष्ठो य उपायः कामक्रोधा-

बाह्योपायसाध्यं दुःखं द्वेधा, आधिभौतिकम्, आधिदैविकञ्च। तत्राधिभौतिकं मानुषपशुमृगपक्षिसरीसृपस्थावरनिमित्तम्। आधिदैविकं तु यक्षराक्षसविनायकग्रहाद्यावेशनिबन्धनम्। तदेतत् प्रत्यात्मवेदनीयं दुःखं रजःपरिणामभेदो न शक्यते प्रत्याख्यातुम्। तदनेन दुःखत्रयेणान्तःकरणवर्तिना चेतनाशक्तेः प्रतिकूलवेदनीयतयाऽभिसम्बन्धोऽभिघात इति। एतावता प्रतिकूलवेदनीयत्वं जिज्ञासाहेतुरुक्तः। यद्यपि न सन्निरुध्यते दुःखम्, तथापि तदभिभवः शक्यः कर्तुमित्युपरिष्टादुपपादयिष्यते।

---

दिः, तेन साध्यत्वात् जन्यत्वादित्यर्थः। केचित्तु साध्यत्वमत्र निवर्तनीयत्वं साध्यो रोग इत्यादौ तादृशार्थकस्य साध्यशब्दप्रयोगस्य दर्शनात्, एवं च आन्तराः शरीरेऽन्तःकरणे वा भवाः ये उपायाः अन्नजलभेषजयमादयः तैः साध्यत्वात् निवर्तनीयत्वात् इत्यर्थ इत्याहुः॥

आन्तरदुःखान्युक्त्वा बाह्यदुःखान्विभजते। बाह्योपायेत्यादिना। बाह्याः अहंकारास्पदनिष्ठभिन्नाः ये उपायाः यक्षराक्षसादयः तैः साध्यं तज्जन्यमिति यावत्। आधिभौतिकमिति। भूतानि मानुषपश्वादिरूपाणि अधिकृत्य निमित्तीकृत्य जायमानं यद्दुःखं तदाधिभौतिकमित्युच्यते। आधिदैविकमिति। देवान् 'विद्याधराप्सरोयक्षे-त्यादिकोशप्रतिपादितान्देवयोनीनधिकृत्य जायमानमित्यर्थः। केचित्तु देवपदेन दिवः प्रभवाणां वातवर्षादीनामपि ग्रहणं वदन्ति। भूतपदेनैव तेषां लाभसंभवात् देवपदेन ग्रहणं व्यर्थमेवेति प्रतिभाति।

पूर्वं यदि दुःखं नाम जगति न स्यादित्यनेन आशंकितं दोषं निराकरोति। तदेतदित्यादिना। प्रत्यात्मवेदनीयं आत्मानं आत्मानं प्रतीति प्रत्यात्मं वेदनीयं साक्षात्कारविषयं, एतेन दुःखे प्रत्यक्षमेव प्रमाणमस्तीति सूचितम्। सांख्यसिद्धान्तसिद्धपञ्चविंशतितत्त्वेषु दुःखस्यानुपादानात्कुत्र तस्यान्तर्भाव इत्याशंकायामाह। रजःपरिणामभेद इति। रजसः रजोगुणस्य परिणामभेदः कार्यविशेषः, लोभादेरपि रजः परिणामतया तद्व्यावर्तनाय विशेष इत्युक्तम्। प्रत्याख्यातुं अपलपितुं, सत्कार्यवादिनां सांख्यानां मते दुःखस्य नित्यत्वात्कथं तस्याभिघातसंभवः इत्याशंकायामाह। तदनेनेति। दुःखत्रयेण आध्यात्मिकादिपूर्वोक्तेनान्तःकरणवर्तिना महत्तत्त्वनिष्ठेन, एतेन दुःखस्यात्मधर्मत्वमिति नैयायिकमतमपास्तम्।

चेतनाशक्तेः पुरुषस्य, अभिसम्बन्धः अभि सम्मुखं सम्बन्धः बुद्धिवृत्तिप्रतिबिम्बे बुद्धिगतधर्माभासः, सुखादौ जिहासाभावादाह। प्रतिकूलेति। द्वेषविषयतयेत्यर्थः। तथाच एतन्मते कार्यमात्रस्यैव सत्त्वरजस्तमोगुणात्मकतयोद्रिक्तरजोगुणतया दुःखस्यैव जिहासा न सुखादेरिति फलितम्। तथाच नाप्यजिहासितमिति द्वितीयपक्षो निराकृत इति बोध्यम्।

'नासतो विद्यते भावो नाभावो विद्यते सतः' इति सिद्धान्तानुसारिसांख्यमते दुःखस्याविनाशित्वमाशंक्योत्तरयति। यद्यपीति। न संन्निरुध्यते न नैयायिकाद्यभिमतासत्त्वरूपविनाशवत्, तदभिभवः तस्य दुःखस्य अभिभवः सूक्ष्मरूपेणावस्थापनं। उप-

तस्मादुपपन्नम् "तदपघातके हेतौ" इति। तस्य दुःखत्रयस्य अपघातकः तदपघातकः। उपसर्जनस्यापि बुद्ध्या सन्निकृष्टस्य तदा परामर्शः। अपघातकश्च हेतुः शास्त्रप्रतिपाद्यो नान्य इत्याशयः।

अत्र शङ्कते—"दृष्टे साऽपार्था चेत्" इति।

अयमर्थः--अस्तु तर्हि दुःखत्रयम्, जिहासितं च तद्भवतु, भवतु च तच्छक्यहानम्, सहतां च शास्त्रगम्य उपायस्तदुच्छेत्तुम्। तथाऽप्यत्र प्रेक्षावतां जिज्ञासा न युक्ता, दृष्टस्यैवोपायस्य तदुच्छेदकस्य सुकरस्य विद्यमानत्वात्। तत्त्वज्ञानस्य तु अनेकजन्माभ्यासपरम्पराऽऽयाससाध्यतयाऽतिदुष्करत्वात्।

तथा च लौकिकानामाभाणकः—

अक्के चेन्मधु विन्देत किमर्थं पर्वतं व्रजेत्॥

इष्टस्यार्थस्य संसिद्धौ को विद्वान् यत्नमाचरेत्॥ इति।

सन्ति चोपायाः शतशः शारीरदुःखप्रतीकारायेषत्करा भिषजां

---

रिष्टादिति। 'तेन निवृत्तप्रसवामर्थवशात्सप्तरूपविनिवृत्ताम्' इत्यादिकारिकाव्याख्यानावसर इत्यर्थः। एतेन दुःखस्य नित्यत्वादिति तृतीयविकल्पोऽपि निराकृतो बोध्यः, तस्य नित्यत्वेऽपि तदभिभवरूपस्य अभिघातस्य कर्तुं शक्यत्वात्॥

तस्मात् दुःखस्य शक्याभिभवत्वात। उपसर्जनस्यापि दुःखत्रयाभिघातरूपसमासे अभिघाते गुणभूतस्यापि, दुःखत्रयस्य बुद्ध्या संनिकृष्टस्य बुद्धिविषयस्य, तदा तच्छब्देन परामर्शः। अयं भावः तदादिसर्वनाम्नां विशेष्यपरामर्शकत्वं इति नास्ति नियमः, किन्तु बुद्धिविषयतावच्छेदकत्वोपलक्षितधर्मावच्छिन्नबोधकत्वमेवेति विशेषणीभूतस्यापि दुःखस्य बुद्धिस्थत्वात् तत्पदेन ग्रहणं सम्भवतीति। परे तु घटोऽस्ति स नित्यः इत्यादौ तच्छब्देन विशेषणीभूतघटत्वस्याऽपरामर्शात् कथमत्र तच्छब्देन विशेषणीभूतदुःखत्रयस्य परामर्श इत्यत आह। उपसर्जनस्यापीति। तथाच 'दर्शिते राजमातङ्गास्तस्यैवामी तुरङ्गमा' इत्यादौ तच्छब्देन विशेषणीभूतराजपरामर्शवदत्रापि पूर्वोक्तापत्तिवारणाय पूर्वोपक्रान्तशब्दशक्यतावच्छेदकापरामर्शकत्वस्यैव तत्राङ्गीकारादिति वदन्ति।

तदुच्छेदोपायापरिज्ञानाद्वा, शास्त्रविषयस्य ज्ञानस्य अनुपायत्वाद्वा, इति विकल्पद्वयं निराकरोति। अपघातकश्चेत्यादिना। तथाच शास्त्रविषयस्य ज्ञानस्य दुःखनिवृत्तिकारणत्वात् शास्त्रविषयो जिज्ञास्य एवेति भावः।

सुकरस्य उपायान्तरस्य सद्भावाद्वेति अन्तिमं पक्षं निराकरोति। नान्य इति।

दृष्ट इति। दृष्टे लोकप्रसिद्धे दुःखोच्छेदके सुकरे उपाये सति, सा शास्त्रविषयिणी जिज्ञासा, अपार्था न सम्भवतीत्यर्थः।

एतदेव विशदयति। अयमर्थ इत्यादिना। अनेकजन्म इति। अनेन शास्त्रविषये जिज्ञासाविषयत्वाभावानुमापकं बलवदनिष्टसाधनताज्ञानं सूचितम्। दुष्करोपायं परित्यज्य सुकर एव उपाये प्रवृत्तिरित्यत्र लौकिकानामपि सम्मतिरस्तीत्याह। तथाचेति। आभाणकः प्रवाद इत्यर्थः। अक्के इति। अक्के गृहकोणे, अर्के इति पाठे अर्कवृक्षे, वि-

वरैरुपदिष्टाः । मानसस्यापि सन्तापस्य प्रतीकाराय मनोज्ञस्त्री–पान–भोजन–विलेपन–वस्त्रालङ्कारादिविषयसम्प्राप्तिरुपायः सुकरः । एवमाधिभौतिकस्यापि दुःखस्य नीतिशास्त्राभ्यास—कुशलता–निरत्ययस्थानाध्यसनादिः प्रतीकारहेतुरीषत्करः । तथाऽऽधिदैविकस्यापि दुःखस्य मणिमन्त्रौषधाद्युपयोगः सुकरः प्रतीकारोपाय इति

निराकरोति—"न" इति । कुतः ? "एकान्तात्यन्ततोऽभावात्" । एकान्तो—दुःखनिवृत्तेरवश्यम्भावः, अत्यन्तो—निवृत्तस्य दुःखस्य पुनरनुत्पादः, तयोः एकान्तात्यन्तयोरभावः एकान्तात्यन्ततोऽभावः । षष्ठीस्थाने सार्वविभक्तिकस्तासिः ।

एतदुक्तं भवति यथाविधि रसायनादिकामिनीनीतिशास्त्राभ्यासमन्त्राद्युपयोगेऽपि तस्य तस्याध्यात्मिकादेर्दुःखस्य निवृत्तेरदर्शनात् अनैकान्तिकत्वम्, निवृत्तस्यापि पुनरुत्पत्तिदर्शनात् अनात्यन्तिकत्वम्, इति सुकरोऽपि ऐकान्तिकात्यन्तिकदुःखनिवृत्तेर्न दृष्ट उपाय इति नापार्था जिज्ञासेत्यर्थः ।

यद्यपि दुःखममङ्गलम्, तथाऽपि तत्परिहारार्थत्वेन तदपघातो मङ्गलमेवेति युक्तं शास्त्रादौ तत्कीर्तनमिति ॥ १ ॥

---

न्देत लभ्येत, लौकिकान् दुःखाभिघातकान् सुकरानुपायान् क्रमेण आह । सन्ति चेति । भिषजां वरैः चरकभावप्रकाशकारादिभिः । मानसदुःखप्रतीकारोपायानाह । मानसस्यापीत्यादिना । आधिभौतिकदुःखनिवर्त्तकानुपायानाह । एवमिति । नीतिशास्त्राणि चाणक्यबृहस्पतिशुक्रनारदादिप्रणीतानि तेषां यः अभ्यासः विचारातिशयः तेन या कुशलता दृढतरसंस्कारः. 'निरत्ययं निरुपद्रवं, स्थानं स्थलं, तत्र अध्यसनं उपवेशनं, आदिपदात् शयनादिपरिग्रहः । उपयोगो मणेः धारणादिकं मन्त्रस्य पाठादिः औषधादेः पानादिरूपो द्रष्टव्यः । औषधादीत्यादिपदेन यन्त्रादिपरिग्रहः । लौकिकोपायस्य एकान्तिकात्यन्तिकदुःखत्रयनिवृत्तिरूपमोक्षसाधनत्वाभावात् न मुमुक्षुजिज्ञास्यत्वमिति निराकरोतीत्यादिना दर्शयति । निवृत्तस्येति । निवृत्तजातीयस्येत्यर्थः । तेन निवृत्तस्य पुनरुत्पत्त्यसम्भवात् कथमेतदिति निरस्तमिति केचित् ।

परे तु एतन्मते कार्यमात्रस्य सद्रूपतया 'नासतो विद्यते भावः' इति नियमानुसारेण त्रिकालेऽपि वर्तमानतयाऽत्र निवृत्तिर्न ध्वंसः अपि तु सूक्ष्मरूपेणावस्थानं तथाच यस्यैव सूक्ष्मरूपेणावस्थानं तस्यैवाभिव्यक्तिरूपायाः उत्पत्तेः सम्भवेन यथोक्तमेव सम्यगित्याहुः ।

फलितार्थमाह । एतदुक्तं भवतीत्यादिना । इति इत्यतः, दृष्टोपायः सुकरोपि एकान्तिकात्यन्तिकदुःखनिवृत्तेः उपायो न इति उपायपदमावर्तनीयम् ।

ननु शास्त्रादौ मङ्गलाचरणस्यावश्यकत्वादत्रामङ्गलभूतस्य दुःखस्योच्चारणमसङ्गतमित्याशङ्कां निराकरोति । यद्यपीत्यादिना । तथाच दुःखपदस्य अमङ्गलार्थत्वेपि दुःखत्रयाभिघातपदस्य मङ्गलार्थत्वाद्युक्तमेव ग्रन्थादौ तदुच्चारणमिति भावः ।

स्यादेतत्। मा भूद्दृष्ट उपायः, वैदिकस्तु ज्योतिष्टोमादिः सहस्रसम्वत्सरपर्यन्तः कर्मकलापस्तापत्रयमैकान्तमत्यन्तञ्चापनेष्यति। श्रुतिश्च, "स्वर्गकामो यजेत" इति। स्वर्गश्च—

यन्न दुःखेन सम्भिन्नं न च ग्रस्तमनन्तरम्।
अभिलाषोपनीतं च तत्सुखं स्वःपदास्पदम्॥ १॥

इति। (तन्त्रवा०)

दुःखविरोधी सुखविशेषश्च स्वर्गः। स च स्वसत्तया समूलघा-

---

दृष्टवदित्यादिकारिकामवतारयितुं मीमांसकमतमुत्थापयति। स्यादेतदिति। एतत् वक्ष्यमाणदूषणं स्यादित्यर्थः। सहस्रसम्वत्सरपर्यन्त इति। सहस्रदिनपर्यन्त इत्यर्थः। 'पञ्चपञ्चाशतस्त्रिवृतः सम्वत्सराः पञ्चपञ्चाशतः पञ्चदशाः सप्तदशाः पञ्चपञ्चाशत एकविंशाः विश्वसृजामयनं सहस्रसम्वत्सरं' इति वाक्यमुद्धृत्य 'सहस्रसम्वत्सरं तदायुषामसम्भवान्मनुष्येषु' (पू० मी० अ० ६ पा० ७ अ० १३) इत्यारभ्य 'अहानि वाऽभिसङ्ख्यत्वात्' इत्यन्तेन सूत्रनिचयेन सम्वत्सरशब्दो दिनवाचक इति मीमांसायां निर्णीतत्वात्। तथा च ज्योतिष्टोमादेः वैदिकस्योपायस्य मुमुक्षुप्रयोजनीभूतैकान्तिकात्यन्तिकदुःखनिवर्त्तकस्य अल्पायाससाध्यस्य विद्यमानत्वेन तद्व्यतिरिक्तस्य तु अनेकजन्माभ्यासपरम्परायाससाध्यतया न तद्विषयिणी जिज्ञासा सम्भवतीति भावः।

ननु कथं वैदिकस्योपायस्यात्यन्तिकदुःखनिवर्त्तकत्वमित्याशंकायामाह। श्रुतिश्चेति। ननु 'स्वर्गकामो यजेत' इत्यादिश्रुत्या स्वर्गसाधनत्वमेव यागे बोध्यते, न तु ऐकान्तिकात्यन्तिकदुःखनिवर्त्तकत्वं यागे बोध्यते इत्यतः स्वर्गपदार्थमाह। स्वर्गश्चेति। इति दुःखविरोधी सुखविशेष इत्यग्रिमेणान्वयः, इतिशब्दार्थश्च इत्याकारकश्रुत्यभिहितः। श्रुतिमाह। यन्नेति। अत्रासम्भिन्नत्वं नासहचरितत्वं, स्वर्गरूपसुखस्यापि तत्पूर्वकालीनदुःखसहचरितत्वात्। नच सहचरितत्वं विशेषणविधया विवक्षितम्, स्वसमानकालीनत्वस्वसामानाधिकरण्योभयसम्बन्धेन दुःखविशिष्टान्यत्वमिति यावत्। तथा सति ऐहिकसुखस्यापि उक्तदुःखासम्भिन्नत्वापत्तेः। अपि तु स्वावच्छेदकशरीरवृत्तिजातीयत्वसम्बन्धेन दुःखाधिकरणे अवच्छेदकत्वसम्बन्धेनावृत्तित्वरूपमसहचरितत्वं विवक्षितम्। शरीरवृत्तिजातिश्च एककाले व्यक्तिद्वयावृत्तित्वेन विवक्षणीया। तेन द्रव्यत्वादिजातिमादाय नासम्भवः। न च ग्रस्तमिति। ग्रस्तं अपकृष्टं नेत्यर्थः। अनन्तरं अविच्छिन्नं मध्ये विच्छेदो नास्तीत्यर्थः। अभिलाषोपनीतं इच्छामात्रजन्यमित्यर्थः। तेन प्रयत्नव्यवच्छेदः इच्छामात्रेण सुखोत्पत्तिः न प्रयत्नस्य आवश्यकतेति भावः। एतादृशं यत्सुखं तत्स्वःपदास्पदं स्वःपदवाच्यमित्यर्थः। तथा च स्वःपदस्वर्गपदयोः पर्यायत्वेन स्वर्गपदस्य तादृशसुखार्थकतया 'स्वर्गकामो यजेत'इत्यादिवाक्येन तथाविधसुखसाधनत्वेन यागो बोध्यते इति वैदिकस्योपायस्य तथाविधसुखसाधनत्वात् तथाविधसुखस्य च ऐकान्तिकात्यन्तिकदुःखनिवृत्तिव्याप्यत्वात् तादृशसुखसाधनत्वहेतुना यागादौ तादृशदुःखनिवृत्तिसाधनत्वसिद्धौ एतच्छास्त्रविषयिणी जिज्ञासा अनर्थिकेति भावः।

ननु एतादृशस्वर्गरूपसुखोत्पत्त्यनन्तरमपि यदि दुःखसाधनस्य विद्यमानत्वं तदा अग्रे दुःखोत्पत्तिर्दुर्वारा इत्याशंकां निराकरोति। स चेति। स च स्वर्गश्च, स्वस्य आत्मनः, सत्तया सामर्थ्येन। समूलघातमिति। दुःखस्य यन्मूलं कारणमदृष्टादिरूपं तस्य

तमपहन्ति दुःखम् । न चैप क्षयी । तथा हि श्रूयते—"अपाम सोम·
ममृता अभूम" इति । तत्क्षये कुतोऽस्यामृतत्वसम्भवः ? तस्माद्वै·
दिकस्योपायस्य तापत्रयप्रतीकारहेतोर्मुहूर्तयामाहोरात्रमाससम्वत्स·
रनिर्वर्तनीयस्यानेकजन्मपरम्पराऽऽयाससम्पादनीयात् विवेकज्ञाना·
दीषत्करत्वात् पुनरपि व्यर्था जिज्ञासा इत्याशङ्क्याह—

**दृष्टवदानुश्रविकः स ह्यविशुद्धिक्षयातिशययुक्तः ॥**
**तद्विपरीतः श्रेयान् व्यक्ताव्यक्तज्ञविज्ञानात् ॥ २ ॥**

---

घातसहितं यथा स्यात्तथा दुःखमपहन्ति, तथा च तादृशस्वर्गस्य दुःखकारणनाशं
प्रति हेतुतया तदनन्तरं दुःखकारणाभावान्न तदुत्पत्तिसम्भावनेति भावः ।

नन्तु स्वर्गसुखमनित्यं उत्पत्तिमत्त्वे सति भावत्वात् इत्यनुमानेन तस्यानित्य·
त्वावगमात् कथं तस्य अनन्तरत्वमित्याशङ्कां परिहरति । न चैप क्षयीत्यादिना । तस्य
क्षयित्वाभावे श्रुतिरूपं प्रमाणमाह । अपामेति । तथा च उक्तश्रुत्या भूतकालीनसो·
मपानकर्तॄणाममृतत्वबोधनात् उक्तानुमानस्य नरशिरःकपालं शुचीत्याद्यनुमानव·
च्छ्रुतिविरुद्धत्वेनाप्रयोजकत्वमिति भावः । नन्तु पूर्वोक्तश्रुत्या सोमपानकर्तॄणां अमृ·
तत्वप्रतिपादनेपि कथं स्वर्गस्याक्षयित्वमित्याशङ्कामपहरति । तत्क्षय इत्यादिना ।
उपसंहरति । तस्मादिति । ईषत्करत्वात् अल्पायाससाध्यत्वात्, एतेन शास्त्रीयोपायस्य
बलवदनिष्टानुबन्धित्वं दर्शितम् । व्यर्था असम्भवीत्यर्थः ॥

दृष्टवदिति । आनुश्रविकोपि उपायो मुमुक्षुणा न जिज्ञास्यः, मुमुक्षुप्रयोजनीभूतै·
कान्तिकात्यन्तिकदुःखत्रयनिवृत्त्यजनकत्वात् । यत् यत्प्रयोजनाजनकं तत् तेन न जिज्ञा·
स्यमिति सामान्यव्याप्तिः । तत्र च पक्षीभूतानुश्रविकोपाये हेतुभूतैकान्तिकात्यन्तिक
दुःखानिवर्त्तकत्वं साधयति । स हीति । तथा च आनुश्रविकोपायः ऐकान्तिकात्यन्तिक·
दुःखत्रयनिवृत्त्यजनकः अविशुद्धियुक्तत्वात्, क्षययुक्तत्वात्, अतिशययुक्तत्वात् दृष्टवत्
इत्यनुमानं तत्र प्रमाणम् । यद्यपि क्षयातिशयौ फलनिष्ठौ उपायनिष्ठं क्षयातिशययु·
क्तत्वं न ऐकान्तिकात्यन्तिकदुःखत्रयनिवर्तकत्वाभावप्रयोजकं क्षयिष्णुना सातिशयेन
च उपायेन नित्यनिरतिशयफलजननसम्भवात् अतः क्षयिष्णुफलजनकत्वात् सातिशय·
फलजनकत्वादिति हेतुः परिष्करणीयः, अविशुद्धियुक्तत्वादिति हेतुना च ज्योतिष्टो·
मादेः कर्मणः सुखजनकापूर्वजनकत्ववद्दुःखजनकापूर्वजनकत्वमपि द्योतितम् । तेन
दुःखसम्भिन्नसुखजनकत्वादिति हेतुः पर्यवसितः । तथा च मधुविषसंपृक्तान्नमिव वैदि·
कमपि ज्योतिष्टोमादिकर्म मुमुक्षुणा हेयमिति भावः ।

एवं च यन्न दुःखेन सम्भिन्नमित्यादिना स्वर्गलक्षणमुपवर्ण्य तादृशस्वर्गसाधन·
त्वेन आनुश्रविकोपायस्य ऐकान्तिकात्यन्तिकदुःखत्रयनिवर्त्तकत्वं पूर्वपक्षिणा साधितं
खण्डितं भवति । तथाहि अविशुद्धियुक्तत्वेन पापजनकत्वाज्ज्योतिष्टोमादेः कर्मणः
दुःखासम्भिन्नत्वरूपविशेषणस्यासिद्धिर्दर्शिता । एवं क्षयिष्णुफलजनकत्वादित्यनेन
'न च ग्रस्तमनन्तरं' इतिविशेषणस्य सातिशयफलजनकत्वहेतुना चाभिलाषोपनीतं
इतिविशेषणस्यासिद्धिर्दर्शिता ।

नच तथा सति यन्न दुःखेन संभिन्नमित्यादिश्रुतेरप्रामाण्यापत्तिः स्वर्गपदार्थस्य

"दृष्ट" इति। गुरुपाठादनु श्रूयते इत्यनुश्रवो वेदः।

एतदुक्तं भवति—श्रूयत एव परं न केनापि क्रियत इति। तत्र भव आनुश्रविकः तत्र प्राप्तो ज्ञात इति यावत्। आनुश्रविकोऽपि कर्मकलापो दृष्टेन तुल्यो वर्तते, ऐकान्तिकात्यान्तिकदुःखत्रयप्रतीकारानुपायत्वस्योभयत्रापि तुल्यत्वात्।

यद्यपि च "आनुश्रविकः"इति सामान्याभिधानम्, तथाऽपि कर्मकलापाभिप्रायं द्रष्टव्यम्, विवेकज्ञानस्याप्यानुश्रविकत्वात्। तथा च श्रूयते—"आत्मा वाऽरे ज्ञातव्यः" प्रकृतितो विवेक्तव्यः (२।२४।५); "न स पुनरावर्तते" (छा० ८।१५) इति॥

---

तादृशश्रुतिप्रतिपादितस्य स्वीकारे च 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इत्यादिश्रुतेरप्रामाण्यापत्तिरिति चेन्न। तादृशश्रुतेः अर्थवादरूपतया तस्य स्वार्थे प्रामाण्याभावेन स्वर्गस्तुतिमात्रपरत्वादिति।

कारिकास्थकानुश्रविकपदार्थं व्याचष्टे। गुरुपाठादित्यादिना। अनुशब्दस्यानन्तर्यार्थकतया किन्निरूपितमानन्तर्यमत्र विवक्षितमित्याकाङ्क्षायामाह। गुर्विति। भारतादेरपि गुरुकर्तृकोच्चारणानन्तरकालीनश्रवणविषयत्वात् तस्याप्यनुश्रवत्वापत्तिः इत्याशङ्कां परिहरति। एतदुक्तं भवतीत्यादिना। तथाच गुरुपाठानन्तरकालीनश्रवणविषयत्वे सति अकर्तृकत्वरूपमनुश्रवत्वमत्र विवक्षितम्। तथाच भारतादेरतथात्वान्न दोषः। भवशब्दस्य जन्यार्थकत्वे बाधः स्यादत आह। प्राप्त इति। वेदादर्थस्य प्राप्तेरभावादाह। ज्ञात इति। आनुश्रविकोपायमात्रस्य उक्तरूपेण दृष्टतुल्यत्वाभावेनाह। कर्मकलाप इति। केन रूपेण तुल्यत्वं तदाह। ऐकान्तिकेति। ऐकान्तिकात्यन्तिकदुःखनिवृत्त्यनुपायत्वस्य साध्यत्वे आनुश्रविकोपायस्य पक्षत्वे स ह्यविशुद्धीत्यादिवक्ष्यमाणस्य हेतुत्वे पक्षतावच्छेदकावच्छेदेनानुमितौ बाधभागासिद्धी, तत्सामानाधिकरण्येनानुमितौ च सिद्धसाधनम्, अतः आनुश्रविककर्मकलापस्य पक्षत्वं, तथा च पक्षतावच्छेदकावच्छेदेनानुमितौ न बाधभागासिद्धीत्याशयेनाह। यद्यपीति। ननु विवेकज्ञानस्य अविवेकनिवृत्तिद्वारा दुःखनिवृत्ति हेतुत्वं लोकत एव सिद्धम्। तथा च कथं आनुश्रविकत्वं तस्य इत्यत आह। तथा च श्रूयत इति। तथा च प्रकृतिपुरुषविवेकज्ञानस्य उक्तैकान्तिकात्यन्तिकदुःखत्रयनिवर्तकत्वं न लोकसिद्धम्। अपि तु वेदैकगम्यमिति तस्यानुश्रविकत्वं निराबाधमेवेति पक्षकोटौ कर्मकलापप्रवेश आवश्यक इति भावः।

ज्ञातव्य इत्येतस्य साङ्ख्यमतेन व्याख्या 'प्रकृतितो विवेक्तव्य' इति न तु अयं श्रौतः पाठः। ननु उक्तश्रुत्या भवतु विवेकज्ञानस्यानुश्रविकत्वम्, तथापि तस्य दृष्टोपायसाम्यत्वे को दोष इत्यत आह। न स इति। सः उत्पन्नविवेकज्ञानः, न पुनरावर्तते पुनः अनन्तरं, आवृत्तिर्भोगः तद्वान्न भवतीत्यर्थः। तथा च उक्तश्रुत्या विवेकज्ञाने ऐकान्तिकात्यन्तिकदुःखनिवृत्तिजनकत्वस्य अर्थात्प्राप्ततया तस्य पूर्वोक्तरूपेण दृष्टसाम्यत्वाभावात् न क्षतिरिति भावः।

अस्यां प्रतिज्ञायां हेतुमाह—"स ह्यविशुद्धिक्षयातिशययुक्तः" इति । "अविशुद्धिः" सोमादियागस्य पशुबीजादिवधसाधनता । यथाऽऽह स्म भगवान् पञ्चशिखाचार्यः—"स्वल्पः सङ्करः सपरिहारः सप्रत्यवमर्षः" इति । 'स्वल्पः सङ्करो' ज्योतिष्टोमादिजन्मनः प्रधानापूर्वस्य पशुहिंसादिजन्मनाऽनर्थहेतुनाऽपूर्वेण सङ्करः । 'सपरिहारः" कियताऽपि प्रायश्चित्तेन परिहर्तुं शक्यः ।

अथ च प्रमादतः प्रायश्चित्तमपि नाचरितम्, प्रधानकर्मविपाकसमये स पच्यते । तथाऽपि यावदसावनर्थं सूते तावत् प्रत्यवमर्षेण

---

अस्यां प्रतिज्ञायां आनुश्रविकोपायस्य ऐकान्तिकात्यन्तिकदुःखत्रयानिवर्तकत्वेन रूपेण दृष्टतुल्यत्वप्रतिज्ञायाम् । स हीति । हि यतः, सः आनुश्रविकोपायः, अविशुद्धिक्षयातिशययुक्तः अतो दृष्टवदित्यर्थः। तत्र अविशुद्धिपदार्थमाह । अविशुद्धिरिति । पशुबीजादिवधः साधनं यस्य तत्त्वमित्यर्थः, तेन यथाश्रुते सोमादियागे पशुबीजादिवधनिरूपितकारणत्वाभावात् नासङ्गतिरिति बोध्यम् । तथाच सोमादियागस्य पशुबीजादिवधजन्यत्वेन तत्र सुखजनकपुण्यापूर्वजनकत्ववद्दुःखजनकपापापूर्वजनकत्वस्यापि सत्त्वेन न ऐकान्तिकात्यन्तिकदुःखत्रयनिवर्तकत्वम् । दुःखजनकपापापूर्वजनकत्वमेव चात्र अविशुद्धियुक्तत्वम् ।

अविशुद्धियुक्तत्वांशे पूर्वाचार्यसम्मतिमाह । यथाऽऽह स्म इति । सङ्करशब्दस्य संबन्धिनिरूपणाधीननिरूपणत्वात् तस्य सम्बन्धिनमाह । स्वल्प इत्यादिना । स्वल्पत्वं च मुख्यफलाधिकरणकालापेक्षया अल्पकालावच्छिन्नफलजनकत्वं, सङ्करः ज्योतिष्टोमादिजन्यप्रधानापूर्वस्य पशुहिंसादिजन्याप्रधानीभूतापूर्वसामानाधिकरण्यम् । तच्च विशेषणविधया बोध्यम् । तेन प्रधानफलाधिकरणकालवृत्तिदुःखरूपफलजनकत्वं पशुहिंसादिजन्यापूर्वे सूचितमिति ।

नच प्रधानापूर्वं प्रति अङ्गापूर्वस्य हेतुत्वात् प्रधानापूर्वोत्पत्त्यनन्तरं अङ्गापूर्वस्य विनाशेन प्रधानापूर्वफलाधिकरणकालेऽङ्गापूर्वस्याभावेन कथं तस्य तत्कालवृत्तिदुःखजनकत्वमिति वाच्यम् । अपूर्वस्य यावत्फलनाश्यत्वेन 'मा हिंस्यात्सर्वा भूतानि' इति श्रुत्या हिंसाया अनर्थहेतुत्वावगमेन पशुहिंसाजन्यापूर्वस्य दुःखोत्पत्तिं विना विनाशासम्भवात् । ननु तथा सति प्रायश्चित्तवैयर्थ्यम्, प्रायश्चित्तेन तन्नाशासम्भवादित्यत आह । सपरिहार इति । तथा च फलवत्प्रायश्चित्तस्यापि तन्नाशकत्वमिति भावः । दुरदृष्टस्य स्वल्पत्वात् स्वल्पेन प्रायश्चित्तेन तत्परिहारः कर्तुं शक्य इत्याह । कियतापीति । अल्पेनेत्यर्थः ।

ननु यदि प्रायश्चित्तेन तन्नाशः तदा कथं तेन ज्योतिष्टोमादिजन्यप्रधानापूर्वस्य सङ्कर इत्याशंकायामाह । अथ चेति । प्रायश्चित्तमपीत्यपिः नाचरितमित्यनेन सम्बध्यते प्रायश्चित्तं नाचरितमपीत्यर्थः, अपिना प्रायश्चित्ताचरणपरिग्रहः। एतेन यथा प्रायश्चित्तानाचरणे पशुहिंसादिजन्यानर्थस्य विनाशो न भवति तथा प्रायश्चित्ताचरणेऽपि बीजादिवधस्यावश्यकत्वेन पुनरपि दुरदृष्टं आपतितं भवेदिति ध्वनितम् । प्रधानकर्मविपाकसमय इति । विपाकः फलं, ज्योतिष्टोमादिकर्मजन्यापूर्वारब्धफलसमय इत्यर्थः । पच्यते दुःखरूपफलोपधायको भवतीत्यर्थः ।

**सहिष्णुतया सह वर्तत इति सप्रत्यवमर्षः। मृष्यन्ते हि पुण्यसम्भारोपनीतस्वर्गसुधामहाह्रदावगाहिनः कुशलाः पापमात्रोपपादितां दुःखवह्निकणिकाम्।**

**न च—"न हिंस्यात् सर्वा भूतानि" इति सामान्यशास्त्रं विशेषशास्त्रेण "अग्नीषोमीयं पशुमालभेत" इत्यनेन बाध्यते इति युक्तम्, विरोधाभावात्। विरोधे हि बलीयसा दुर्बलं बाध्यते। न चेहास्ति कश्चिद्विरोधः, भिन्नविषयत्वात्।**

---

नच तथा सति मधुविषसम्पृक्तान्नभोजने प्रवृत्त्यभाववत् अत्रापि लोकानां प्रवृत्तिर्न स्यादित्यत आह। तथापीति। यावदिति। यावत्कालपर्यन्तमसौ अङ्गापूर्वसङ्करः, अनर्थं वृत्रासुरभयादिरूपस्वकार्यं दुःखं, सूते उत्पादयति, तावत्कालपर्यन्तं प्रत्यवमर्षः सहनमित्यर्थः। एतदेव दर्शयति। मृष्यन्ते हीति। हि यस्मात्, मृष्यन्ते सहन्ते, पापस्य पशुहिंसादिजन्यापूर्वस्य, मात्रया लेशेन, उपपादितां उत्पन्नाम्। तथा च तादृशानिष्टस्य बलवत्त्वाभावात् ज्योतिष्टोमादौ बलवदनिष्टाननुबन्धित्वनिश्चयेन तत्र प्रवृत्तिर्युक्तैव, मधुविषसम्पृक्तान्नभोजनादौ तु मरणरूपबलवदनिष्टस्यानुबन्धित्वेन न तत्र प्रवृत्तिरिति भावः।

ननु यथा 'आहवनीये जुहोति' इति सामान्यशास्त्रं 'पदे जुहोति' इति विशेषशास्त्रेण बाध्यते, एवमेव मा हिंस्यात्सर्वा भूतानीति सामान्यशास्त्रं विशेषशास्त्रेण बाध्यते इत्याशङ्क्ते। न चेति। सामान्यशास्त्रं प्रति विशेषशास्त्रस्य समानविषयत्वादेव बाधः, प्रकृते च अग्नीषोमीयं पशुमालभेत इति विशेषशास्त्रस्य मा हिंस्यात्सर्वा भूतानीति सामान्यशास्त्रस्य च समानविषयत्वाभावेन न विरोधः इति समाधत्ते। विरोधाभावादिति। नच विधेः इष्टसाधनत्वविशिष्टबलवदनिष्टाननुबन्धित्वविशिष्टकृतिसाध्यत्वमर्थः निषेधस्य च बलवदनिष्टसाधनत्वमर्थः, तथाच 'अग्नीषोमीयं पशुमालभेत' इत्यादौ पशुहिंसायां बलवदनिष्टाननुबन्धित्वविशिष्टकृतिसाध्यत्वविशिष्टेष्टसाधनत्वं बोध्यते। 'मा हिंस्यात्सर्वा भूतानि' इति निषेधशास्त्रेण च हिंसामात्रे बलवदनिष्टानुबन्धित्वं बोध्यते इति विरोधेन दुर्बलस्य सामान्यशास्त्रस्य 'अग्नीषोमीयं पशुमालभेत' इति विशेषशास्त्रेण बाधो युक्त एवेति चेदत्र केचित्। प्रवृत्तिर्द्वेधा रागतः वैधी च उभयविधापि विधिवाक्यतो भवति। तत्र आद्या बलवदनिष्टाननुबन्धित्वविशिष्टकृतिसाध्यत्वविशिष्टेष्टसाधनत्वज्ञानाधीना, द्वितीया च क्रतूपकारकत्वज्ञानाधीना इति विधेः अर्थद्वयं इष्टसाधनत्वविशिष्टकृतिसाध्यत्वविशिष्टबलवदनिष्टाननुबन्धित्वं क्रतूपकारकत्वं च तत्र स्वर्गकामो यजेतेत्यादौ विधेः आद्यो अर्थः, इडो यजति बर्हिर्यजतीत्यदौ तु क्रतूपकारकत्वमेव, एवं च 'अग्नीषोमीयं पशुमालभेत' इत्यादौ विधिना क्रतूपकारकत्वमेव बोध्यते मा हिंस्यादित्यादिनिषेधेन च हिंसायामनर्थहेतुत्वमेव बोध्यते। इति तयोर्भिन्नविषयत्वान्न विरोध इति। परे तु अग्नीषोमीयपशुहिंसायामपि प्रधानज्योतिष्टोमोपकारद्वारा इष्टसाधनत्वमस्त्येवेति तत्रापि पूर्वोक्तेष्टसाधनत्वादिज्ञानादेव प्रवृत्तिरिति विधेरर्थद्वयकल्पनायां मानाभावः। अथ तर्हि उभयवाक्ययोः समानविषयकत्वाद्विरोधो दुर्वारः। नच बलवदनिष्टाननुबन्धित्वं इष्टोत्पत्तिनान्तरीयकदुःखा-

तथा हि—"न हिंस्यात्" इति निषेधेन हिंसाया अनर्थहेतुभावो ज्ञाप्यते, न त्वक्रत्वर्थत्वमपि, "अग्नीषोमीयं पशुमालभेत" इ-

---

धिकदुःखाजनकत्वरूपमवश्यं वाच्यम्। अन्यथा यागादेर्बहुवित्तव्ययायाससाध्यत्वेनानिष्टानुबन्धितया तत्र प्रवृत्त्यनापत्तेः। तथा च अग्नीषोमीयपशुहिंसाजन्यानिष्टस्य इष्टोत्पत्तिनान्तरीयकतया ज्योतिष्टोमादेः तथाविधदुःखाधिकदुःखजनकत्वाभावात्तत्प्रवृत्तिर्युक्तैव। 'मा हिंस्यात्सर्वा भूतानि' इति निषेधेन च हिंसाया नरकजनकत्वप्रतिपादनेन अग्नीषोमीयपशुहिंसाया नरकसाधनत्वेऽपि नरकस्य इष्टोत्पत्तिनान्तरीयकतया तस्यां इष्टोत्पत्तिनान्तरीयकदुःखाधिकदुःखाजनकत्वसत्त्वात् न विरोध इति वाच्यम्। तथा सति अगम्यागमनादावपि प्रवृत्त्यापत्तेः। तत्र उक्तबलवदनिष्टाननुबन्धित्वस्य इष्टसाधनत्वस्य कृतिसाध्यत्वस्य च सत्त्वादिति चेन्न। विधिमात्रस्य बलवदनिष्टाननुबन्धित्वविशिष्टसाधनत्वविशिष्टकृतिसाध्यत्वार्थकत्वेऽपि तद्घटकबलवदनिष्टाननुबन्धित्वं इष्टापेक्षयाऽधिकदुःखाजनकत्वमेव, तथा च अगम्यागमनादेः स्वल्पकालीनेन्द्रियसुखादिरूपेष्टापेक्षया बहुकालीननरकादिरूपाधिकदुःखजनकत्वेन न तत्र प्रवृत्त्यापत्तिः। वैधहिंसायान्तु स्वर्गादिरूपेष्टापेक्षयाऽधिकदुःखजनकत्वाभावात् तत्र प्रवृत्तिर्निराबाधैवेत्याहुः।

ननु क्रतुप्रकरणान्तर्गतस्यैव क्रत्वर्थत्वं यस्य तु न तदन्तर्गतता तस्य पुरुषार्थता इति नियमेन न हिंस्यात्सर्वा भूतानीति निषेधस्य क्रतुप्रकरणानन्तर्गतत्वेन पुरुषार्थतया 'यदर्थो निषेधस्तदर्थमेव निषेध्यम्' इति नियमेन पूर्वोक्तवचननिषेध्या हिंसा पुरुषार्थहिंसैव, तथा च न हिंस्यात्सर्वा भूतानीति निषेधेन पुरुषार्थहिंसाया एवाऽनर्थहेतुत्वावगमात् अग्नीषोमीयपशुहिंसायास्तु क्रत्वर्थतया कथं तस्यामनर्थहेतुत्वसंभवः। न च यदर्थो निषेध्य इत्यादिनियमाङ्गीकारे प्रमाणाभावेन पुरुषार्थनिषेधस्यापि हिंसामात्रविषयत्वाङ्गीकारे बाधकाभाव इति वाच्यम्। क्रतुप्रकरणानन्तर्गतस्य नानृतं वदेदित्यादिस्मार्तनिषेधस्य विद्यमानत्वेऽपि क्रतुप्रकरणे नानृतं वदेदिति वाक्यवैयर्थ्यापत्तेरेव तादृशनियमे प्रमाणत्वादिति चेन्न। तथा सति मांसभक्षणादिनिषेधस्य पुरुषार्थतया क्रत्वर्थत्वानुपपत्तिप्रसक्त्या उक्तनियमानङ्गीकारात्। अत एवोक्तम् 'क्रत्युपायमांसभक्षादिपुरुषार्थमपि श्रितः प्रतिषेधः क्रतोरङ्गमितः प्रकरणाश्रयात्। न च उक्तनियमानङ्गीकारे पूर्वोक्तस्य 'नानृतं वदेदिति' दर्शपौर्णमासप्रकरणे निषेधस्य वैयर्थ्यमिति वाच्यम्। स्मार्तनिषेधेन हि अनृतवदनमात्रस्य अनर्थहेतुत्वमेव बोध्यते, क्रतुप्रकरणपठितस्य निषेधवाक्यस्य अनर्थहेतुत्वं नार्थः येन तस्य अनर्थकता स्यात्, अपि तु क्रतुवैगुण्यसम्पादकत्वमेव, तथा च अनृतवदने क्रतुफलमेव न भवेदिति बोधनाय तादृशनिषेधवाक्यमिति भावः।

किंच 'मा हिंस्यात्सर्वा भूतानीति निषेधस्य यदि क्रत्वर्थहिंसाविषयता नाङ्गीक्रियेत तदा मा हिंस्यात् इति शास्त्रमुत्सर्गः अग्नीषोमीयं पशुमालभेत इति च अपवाद' इति मीमांसकोक्तिरसंगता स्यात्। बाध्यबाधकभावस्थल एव उत्सर्गापवादत्वयोः सम्भवात्।

विरोधाभावसाधकं भिन्नविषयत्वमेव दर्शयति। तथा हीत्यादिना। निषेधवाक्येन हिंसा पुरुषानर्थकरीत्येव बोध्यते न तु हिंसा यागापकारिणीत्येवमपि, एवं पशुमालभेत इति वाक्येनापि हिंसा यागोपकारिणी इत्येव ज्ञाप्यते, न तु हिंसा नानर्थकरी इति।

ष्यनेन तु पशुहिंसायाः क्रत्वर्थत्वमुच्यते, नानर्थहेतुत्वाभावः, तथा सति वाक्यभेदप्रसङ्गात्। न चानर्थहेतुत्वक्रतूपकारकत्वयोः कश्चिद्विरोधोऽस्ति। हिंसा हि पुरुषस्य दोषमावक्ष्यति, क्रतोश्चोपकरिष्यतीति।

क्षयातिशयौ च फलगतावप्युपाय उपचरितौ। क्षयित्वं च स्वर्गादेः 'सत्त्वे सति कार्यत्वात्' अनुमितम्। ज्योतिष्टोमादयः स्वर्गमात्रस्य साधनम्, वाजपेयादयस्तु स्वाराज्यस्येत्यतिशययुक्तत्वम्। परसम्पदुत्कर्षो हि हीनसम्पदं पुरुषं दुःखाकरोति॥

---

एवं च भिन्नार्थबोधकत्वान्न विरोधः। न च 'न हिंस्यादि'त्यस्य हिंसा अनर्थकरी अक्रत्वर्था च इत्यर्थद्वयं एवं पशुमालभेत इत्यस्यापि पश्वालभनं क्रतूपकारकं पश्वालभनं नानर्थहेतुरिति अर्थद्वयं तथा च समानविषयतया विरोधोऽस्त्येवेत्यत आह। तथा सतीति। उक्तरीत्या अर्थद्वयस्वीकारे चेत्यर्थः। वाक्यभेदप्रसंगादिति। 'अन्याय्यश्चानेकार्थः' इति मीमांसकनियमादिति भावः। उक्तैकैकार्थकत्वे तु न दोष इत्याह। न चेति। दोषं पापम्, आवक्ष्यति जनयिष्यति।

अविशुद्धियुक्तत्वरूपेण आनुश्रविकोपायस्य दृष्टतुल्यत्वं प्रसाध्य इदानीं रूपान्तरेण तदाह। क्षयातिशयेत्यादिना। ननु उपायनिष्ठस्य अविशुद्धियुक्तत्वस्य दोषत्वेऽपि तन्निष्ठं क्षयातिशययुक्तत्वं न दोषाय, अन्यथा सत्त्वपुरुषान्यथाख्यातेरपि क्षयित्वेन तस्या अपि तेन रूपेण दृष्टतुल्यतया ऐकान्तिकात्यन्तिकदुःखनिवर्त्तकत्वानुपपत्तेः इत्यत आह। क्षयातिशयौ चेति। केचित्तु क्षयातिशयदोषयोः फले सत्वेपि उपाये विरहात् कथमानुश्रविकोपायस्य क्षयातिशययुक्तत्वाभिधानमित्यत आह। क्षयातिशयौ चेतीत्येवमवतारयन्ति। तत्तु यागादिरूप उपाये क्षयित्वस्य सर्वसिद्धतया तद्विरहाभिधानमसङ्गतमित्युपेक्षितम्। क्षयो विनाशः, तद्युक्तत्वम्प्रतियोगितासम्बन्धेन विनाशप्रतियोगित्वं तदर्थः। अतिशयः उत्कृष्टफलं, तद्वत्वात्। स्वापेक्षया उत्कृष्टफलान्तरकत्वादित्यर्थः। स्वर्गादेः नाशप्रतियोगित्वे प्रमाणमाह। क्षयित्वं चेति। स्वर्गादिकं क्षयि सत्त्वे सति कार्यत्वात् घटवदित्यनुमानेन स्वर्गादेर्विनाशित्वसिद्धिः। परमते ध्वंसे व्यभिचारवारणाय सत्त्वे सतीति। एवं च स्वर्गादिफलस्य क्षयित्वेन ऐकान्तिकात्यन्तिकदुःखनिवृत्तिजनकत्वं आनुश्रविकोपाये न सम्भवतीति ध्वनितम्।

स्वर्गादिफलस्य क्षयित्वं प्रसाध्य अतिशयवत्त्वं साधयति। ज्योतिष्टोमादय इति। मात्रपदेन स्वाराज्यव्यवच्छेदः। स्वाराज्यं स्वर्गाधिपत्यम्। ननु उक्तरीत्या स्वर्गादिफलादेः अतिशययुक्तत्वे का क्षतिरित्यत आह। परसम्पदिति। तथा च तत्र दुःखासम्भिन्नसुखस्याभावात् आनुश्रविकोपाये दुःखासम्भिन्नसुखजनकत्वं नास्तीत्यर्थः। नच तथा सति यन्न दुःखेन सम्भिन्नमितिश्रुतिविरोधः। तादृशश्रुतौ दुःखपदस्य मानसातिरिक्तदुःखपरतया मानसातिरिक्तदुःखासम्भिन्नत्वमेव स्वर्गसुखस्य न तु सामान्यतो दुःखासम्भिन्नत्वमिति ईर्ष्यापातभयादिजन्यदुःखं तत्रापि वर्तत एवेति। नच तत्र दुःखपदस्य अर्थसंकोचे प्रमाणाभाव इति वाच्यम्। 'स्वर्गेपि पातभीतस्य क्षयिष्णोर्नास्ति निर्वृतिः' इत्यादिवचनस्यैव तत्र प्रमाणत्वात्॥

"अपाम सोममसृता अभूम" इति चामृतत्वाभिधानं चिरस्थेमानमुपलक्षयति। यदाहुः—

"आभूतसम्प्लवं स्थानममृतत्वं हि भाष्यते" इति॥ अत एव च श्रुतिः—

"न कर्मणा न प्रजया धनेन त्यागेनैकेऽमृतत्वमानशुः।
परेण नाकं निहितं गुहायां विभ्राजते यद्यतयो विशन्ति" इति।
तथा "कर्मणा मृत्युमृषयो निषेदुः प्रजावन्तो द्रविणमीहमानाः।
तथा परे ऋषयो ये मनीषिणः परं कर्मभ्योऽमृतत्वमानशुः" इति च॥

---

न च तथापि उक्तक्षयित्वानुमानं 'अपाम सोममसृता अभूम' इति श्रुतिविरुद्धत्वान्नरशिरःकपालशौचानुमानवदप्रयोजकमिति वाच्यम्। 'तद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते इति श्रुतिसिद्धव्याप्त्या उक्तश्रुतौ अमृतपदस्य चिरस्थायित्वार्थकत्वमेव न तु विनाशाप्रतियोगित्वार्थकत्वमित्याह। अपामेति। चिरस्थेमानं चिरस्थायित्वं, तथाच अमृता इत्यत्र मृतं मरणं नञर्थो अल्पत्वं, मनुष्यापेक्षयाऽल्पमरणवन्त इत्यर्थः। तथाच चिरकालस्थायित्वे तात्पर्यम्। क्षीणे पुण्ये मर्त्यलोके विशन्तीत्यादिवचनप्रामाण्यात्। अमृतत्वशब्दस्य उक्तार्थकत्वे विष्णुपुराणवचनं प्रमाणयति। यदाहुरिति। भूतसम्प्लवः प्रलयः, तत्पर्यन्तं स्थानं स्थितिः, तदेवामृतत्वमित्यर्थः।

मोक्षरूपममृतत्वं न यागादिसाध्यमित्यत्र श्रुतिमपि प्रमाणयति। अत एव चेति। न कर्मणेति। कर्मणा ज्योतिष्टोमादिना, न अमृतत्वमानशुः इति परेण सम्बन्धः। एवं प्रजया सन्तत्या गार्हस्थ्यधर्मेणेति यावत्। धनेन तत्साध्यदानादिनेत्यर्थः। एके विरक्ताः, त्यागेन कर्मादित्यागेन, अमृतत्वं मोक्षं, आनशुः प्राप्ताः। त्यागेनैकेनेति पाठे तु त्यागमात्रेणेत्यर्थः। किं तदमृतत्वमित्यत आह। नाकं परेणेति। स्वर्गात्परमित्यर्थः।

ननु प्राप्यस्य देशकालव्यवहितत्वे अनित्यत्वं दृष्टं यथा ग्रामादेः उक्तामृतत्वस्य प्राप्यत्वे तस्यापि अनित्यत्वं स्यादित्यत आह। निहितं गुहायामिति। गुहायां बुद्धौ, निहितं पुरुषरूपेण स्थितं। ननु तथापि परिच्छिन्नत्वस्य वर्तमानत्वेन तदधीनं अनित्यत्वमपि तत्र स्यादिति चेन्न। यथा घटाकाशे परिच्छिन्नत्वं न स्वाभाविकं किन्तु घटरूपोपाधिकृतमेव एवमेव आत्मनि परिच्छिन्नत्वं सोपाधिकमेवेति आकाशनित्यत्ववत् तस्यापि नित्यत्वे बाधकाभावात्। विभ्राजते स्वयं प्रकाशत्वेन दीप्यते। तस्य बुद्धिस्थत्वे कुतो न। सर्वेषां तत्प्राप्तिरित्यत आह। यद्यतय इति। यतयः यत्नशीलाः दृष्टानुश्रविकविषयवितृष्णाः, यत बुद्धिविविक्तं आत्मस्वरूपं, विशन्ति साक्षात्कुर्वन्तीत्यर्थः। ननु कर्मधनादेः दुःखानिवर्त्तकत्वे कथं तत्र लोकप्रवृत्तिरित्यत आह। तथा कर्मणा इति। ये प्रजावन्तः गृहस्थाः द्रविणं सुवर्णादि, आदिना पश्वादिपरिग्रहः, ईहमाना अभिलपन्तः। एवं भूताः ऋषयः वानप्रस्थाः, कर्मणा मृत्युं मरणं, निषेदुः प्रापुः। ये परे पूर्वोक्तभिन्नाः, मनीषिणः पशुपुत्रादिसुखे दुःखसंभिन्नत्वक्षयित्वादिदर्शनेन विरक्ताः, कर्मभ्यः कर्मफलेभ्यः, परं उत्कृष्टं, अमृतत्वं मोक्षरूपं प्रापुरित्यर्थः।

तदेतत् सर्वमभिप्रेत्याह–"तद्विपरीतः श्रेयान् व्यक्ताव्यक्तज्ञवि-
ज्ञानात्" इति । तस्मात् आनुश्राविकात् दुःखापघातकोपायात् सो-
मपानादेरविशुद्धात् अनित्यसातिशयफलात् विपरीतः विशुद्धः हिं-

---

न च तथा सति यन्न दुःखेन सम्भिन्नमित्यादिस्वर्गलक्षणे यागजन्यस्वर्गेऽव्याप्तम्
पूर्वोक्तरीत्या तस्य दुःखसम्भिन्नत्वात् । अत्र केचित्, यन्न दुःखेन सम्भिन्नमित्यत्र दुः-
खासम्भिन्नत्वं न सामान्यतो दुःखसम्भिन्नत्वाभावः, अपि तु शरीरजन्यदुःखसम्भिन्न-
त्वाभावः।तथा च स्वर्गे यद्दुःखं तन्मानसरूपमेवेति तस्य शरीरजन्यत्वाभावान्नाव्याप्तिः।
नन्च 'क्षीणे पुण्ये मर्त्यलोके विशन्तीति' वाक्यप्रामाण्यानुरोधेन स्वर्गेपि मरणस्यावश्य-
कतया मरणस्य च दुःखनियतत्वेन तत्रापि मरणकाले शरीरजन्यदुःखं वर्तत एवेति वाच्यम्।
मरणकाले विशेष्यीभूतसुखाभावात् तस्योक्ततत्काले स्वर्गत्वं नेष्टमेव । न च पूर्वोक्तं
स्वावच्छेदकशरीरवृत्तिजातिमत्त्वसम्बन्धेन दुःखाधिकरणे अवच्छेदकत्वसम्बन्धेन वृ-
त्तित्वरूपं दुःखसम्भिन्नत्वं तादृशमरणकालपूर्वकालीनसुखे वर्तत एवेति कदापि स्वर्ग-
त्वानुपपत्तिरिति वाच्यम् । 'ते नराः सुखमृत्यवः' इतिवचनप्रामाण्यात्तत्र मरणकाले
दुःखाभावेन सहजत एव तस्य दुःखासम्भिन्नत्वसम्भवात् । अस्तु वा मरणस्य दुःखनै-
यत्यं, तथापि मरणजन्यदुःखातिरिक्तशरीरजन्यदुःखासम्भिन्नत्वस्य दुःखासम्भिन्नत्व-
पदेन विवक्षणान्न दोषः । एवं अग्रस्तत्वे न अपकृष्टत्वसामान्याभावः, किन्तु ऐहिक-
सुखापेक्षया अपकृष्टत्वाभाव एव । एवं अनन्तरत्वं चिरकालस्थायित्वं । न च योग्यवि-
भुविशेषगुणानां स्वोत्तरवर्तिगुणनाश्यत्वमिति नियमेन कथं सुखस्य चिरकालस्थायित्वं,
धारावाहिकत्वस्यैव अत्र तच्छब्दार्थत्वात् । यद्यपि पूर्वोक्तरीत्या पातभयादिदुःखस्य
तत्र वर्तमानत्वेन कथं धारावाहिकसुखसम्भवः । किंच ऐहिकसुखस्यापि कदाचिद्धारा-
वाहिकत्वसम्भवात्तत्रातिव्याप्तिः । तथापि धारावाहिकत्वमत्र दुःखाजनकस्वावच्छे-
दकजातीयशरीरवृत्तियावद्विषयेन्द्रियसंयोगकत्वरूपमेव बोध्यम् । अभिलाषोपनीतं
इच्छामात्रजन्यं । यद्यपि कार्यमात्रं प्रति अदृष्टस्यापि कारणत्वेन इच्छेतराजन्यत्वरूपे-
च्छामात्रजन्यत्वमप्रसिद्धमेव । तथापि प्रयत्नाजन्यत्वरूपं तद्विवक्षितमिति नानुपपत्ति-
रित्याहुः । वस्तुतस्तु पूर्वोक्तरीत्या अस्यार्थवादतया स्वर्गस्तुतिमात्रे तात्पर्यम् । यद्यपि
दुःखासम्भिन्नत्वादिपूर्वोक्तैकैकधर्मविशिष्टसुखस्य स्वर्गपदाभिधेयत्वेपि न काप्यनुपप-
त्तिः सम्भवति । तथापि अस्य न स्वर्गलक्षणत्वं अपि तु तत्स्वरूपकथनमात्रमेतदिति ।
पूर्वोक्तरीत्या आनुश्राविकोपायस्यैकान्तिकात्यन्तिकदुःखत्रयानिवर्तकत्वं प्रसा-
ध्य इदानीं शास्त्रीयोपायस्यैकान्तिकात्यन्तिकदुःखत्रयनिवर्तकतया तस्यैव मुमुक्षुजि-
ज्ञास्यत्वं इत्यभिप्रायकं कारिकास्थं तद्विपरीतः श्रेयानित्यादि व्याचष्टे । तदेतदित्या-
दिना । एतत्सर्वं आनुश्रविकाद्युपाये तादृशदुःखत्रयानिवर्तकत्वस्य श्रुतियुक्त्यादि-
सिद्धत्वं । तस्माद्विपरीतः तद्विपरीतः इति समासाश्रयणेन तदिति पदं व्याचष्टे । त-
स्मादित्यादिना । वैपरीत्यस्य वैधर्म्यरूपतया केन रूपेण अत्र वैधर्म्यं विवक्षितमित्या-
शङ्कामपनेतुमविशुद्धादनित्यसातिशयफलादित्युक्तम् । तथा च आनुश्रविकोपायावृत्ति-
विशुद्धत्वरूपधर्मवत्त्वरूपं वैधर्म्यं शास्त्रीयोपाये बोधितम् । तत्र विशुद्धत्वस्यानुश्र-
विकोपायावृत्तित्वं ज्ञापयितुं अविशुद्धादित्युक्तम् । एवं तदवृत्तिनित्यनिरतिशयफल-
वत्त्वरूपवैधर्म्यज्ञापनार्थं आनुश्रविकोपायस्यानित्यसातिशयफलत्वमुक्तम्, शास्त्रीयो-

सादिसङ्कराभावात्, नित्यनिरतिशयफलः असकृत् अपुनरावृत्ति-श्रुतेः। न च कार्यत्वेनानित्यता फलस्य युक्ता, भावकार्यस्य तथा-त्वात्, दुःखप्रध्वंसस्य तु कार्यस्यापि तद्वैपरीत्यात्। न च दुःखा-न्तरोत्पादः, कारणाप्रवृत्तौ कार्यस्यानुत्पादात्, विवेकज्ञानोपजनन-पर्यन्तत्वाच्च कारणप्रवृत्तेः। एतच्चोपरिष्टादुपपादयिष्यते।

अक्षरार्थस्तु—तस्मात्—आनुश्रविकात् दुःखापघातकात् हेतोः विपरीतः सत्त्वपुरुषान्यताप्रत्ययः (साक्षात्कारो) दुःखापघातको हेतुः, अत एव श्रेयान्। आनुश्रविको हि वेदविहितत्वात् मात्रया

---

पायस्य च तादृशधर्मवत्तां ज्ञापयितुं तस्य विशुद्धत्वं नित्यनिरतिशयफलत्त्वमुक्तम्। शास्त्रीयोपायस्य विशुद्धत्वे हेतुमाह। हिंसादीति। नित्यनिरतिशयफलत्वे हेतुमाह। असकृदिति। असकृदनेकवारं, न स पुनरावर्तते न स पुनरावर्तते इत्यादि बहुत्र श्रुतौ अनावृत्तिश्रवणादिति भावः।

ननु पूर्वं यथा स्वर्गादेः कार्यत्वेन क्षयित्वं साधितं तथा विवेकज्ञानकार्यस्य मो-क्षस्यापि कार्यत्वेनानित्यत्वं सेत्स्यति, तथा च कथं तस्य नित्यत्वमित्यत आह। न-चेति। फलस्य मोक्षस्य कार्यत्वहेतुना अनित्यत्वं न युक्तमित्यर्थः। अत्रैव हेतुमाह। भावकार्यस्येति। भावत्वविशिष्टकार्यत्वस्येत्यर्थः। तथात्वात् अनित्यत्वसाधकत्वादि-त्यर्थः। तथा च कार्यत्वमात्रस्य न विनाशित्वसाधकत्वं ध्वंसे व्यभिचारात्, किन्तु भावत्वविशिष्टकृतकत्वस्यैव, तथा च आत्यन्तिकदुःखध्वंसरूपमोक्षस्य कार्यत्वेपि भावत्वाभावेन न तत्र विनाशित्वसिद्धिरित्याह। दुःखध्वंसस्येति। तद्वैपरीत्यात् वि-नाशित्ववैपरीत्यात् नित्यत्वादिति यावत्। तथा च पूर्वोक्तकार्यत्वहेतुकानुमाने भावत्वमुपाधिः, तस्य जन्यत्वरूपसाधनावच्छिन्नसाध्यव्यापकत्वात् कार्यत्वरूपसा-धनाव्यापकत्वाच्च। नच पूर्वदुःखविनाशेपि विवेकख्यात्यनन्तरं दुःखान्तरोत्पत्तिर्दुर्वारा इत्याशंक्याह। नचेति। उत्पन्नदुःखस्य पुनरुत्पादासम्भवादाह। अन्तरेति। अत्रैव हेतुमाह। कारणेति। कारणं प्रकृतिः तस्याः अप्रवृत्तौ कृतप्रयोजनत्वात्प्रवृत्त्यभावे सति दुःखरूपकार्यासम्भवादित्यर्थः।

ननु एतन्मते दुःखस्य प्रकृतिधर्मत्वात्प्रकृतेश्च नित्यत्वात्कुतः कारणाप्रवृत्तिः इत्यत आह। विवेकज्ञानेति। न च विवेकज्ञानोत्तरमपि कुतो न प्रकृतेः प्रवृत्तिरत आह। ए-तच्चेति। उपरिष्टात् "औत्सुक्यनिवृत्त्यर्थमित्यादिकारिकाव्याख्यानावसर इत्यर्थः।

तद्विपरीत इत्यादेस्तात्पर्यार्थमुक्त्वा अक्षरार्थमाह। अक्षरार्थस्त्विति। आनुश्रवि-कदुःखापघातकहेतुवैपरीत्यस्य लौकिकदुःखापघातकहेतावपि सत्त्वात्तस्य च श्रेयस्त्वा-भावादाह। सत्त्वपुरुषान्यताप्रत्यय इति। शास्त्राधीनस्य शाब्दबोधात्मकसत्त्वपुरु-षान्यताप्रत्ययस्य दुःखापघातकत्वाभावेन श्रेयस्त्वाभावादाह। साक्षात्कार इति। ननु 'द्विवचनविभज्योपपदे तरबीयसुनौ' इति सूत्रेण द्वयोरेकस्यातिशयबोधने ईयसुन्प्र-त्ययो विधीयते, अत्र च प्रशस्यशब्दादीयसुन्प्रत्यये कृते 'प्रशस्यस्य श्रः' इत्यनेन श्रा-देशे श्रेयः शब्दः सिध्यति। तथा च वैदिकोपाये किमपेक्षया प्रशस्यतरत्वं इत्याकाङ्क्षा-यामाह। आनुश्रविक इति। तस्य प्रशस्यत्वे हेतुमाह। वेदविहितत्वादिति। प्रशस्यत्वं

दुःखापघातकत्वाच्च प्रशस्यः । सत्त्वपुरुषान्यताप्रत्ययोऽपि प्रशस्यः । तदनयोः प्रशस्ययोर्मध्ये सत्त्वपुरुषान्यताप्रत्ययः श्रेयान् ।

कुतः पुनरस्योत्पत्तिः ? इत्यत आह—"व्यक्ताव्यक्तज्ञविज्ञानात्' इति । व्यक्तं च अव्यक्तं च ज्ञश्च व्यक्ताव्यक्तज्ञाः, तेषां विज्ञानं विवेकेन ज्ञानम्, व्यक्ताव्यक्तज्ञविज्ञानम् । व्यक्तज्ञानपूर्वकमव्यक्तस्य तत्कारणस्य ज्ञानम् । तयोश्च पारार्थ्येनात्मा परो ज्ञायते, इति ज्ञानक्रमेणाभिधानम् ।

एतदुक्तं भवति—श्रुतिस्मृतीतिहासपुराणेभ्यो व्यक्तादीन् विवेकेन श्रुत्वा, शास्त्रयुक्त्या च व्यवस्थाप्य दीर्घकालादरनैरन्तर्यस-

---

हि इष्टसाधनत्वे सति बलवदनिष्टाननुबन्धित्वम्, एवं च श्येनादौ वेदविहितत्वस्य सत्त्वेऽपि पूर्वोक्तप्रशस्यत्वाभावाच्च तस्य हेतुतासम्भवः । इत्यतो हेत्वन्तरमाह । मात्रयेति । मात्रया लेशेन । तथा च स्वजन्यफलाधिकदुःखाजनकत्वे सति यत्किञ्चिद्दुःखध्वंसजनकत्वात् इति हेतुः पर्यवसितः । श्येनादौ शत्रुजन्यदुःखध्वंसजनकत्वेऽपि तदपेक्षया अधिकदुःखजनकत्वात् न व्यभिचारः । प्रशस्यस्यापि तस्य सत्त्वपुरुषान्यताप्रत्ययप्रशस्ततापेक्षया अपकृष्टप्रशस्ततावोधनार्थम् मात्रयेति ।

ननु एतादृशं सत्त्वपुरुषान्यताज्ञानमसम्भवि तत्कारणाभावात् इत्याशयेन पृच्छति । कुतः पुनरिति । व्यक्ताव्यक्तौ जानातीति व्यक्ताव्यक्तज्ञः इति समासभ्रमं निराकर्तुं विशिष्य समासमाह । व्यक्तेति । ननु अव्यक्तस्य प्रकृतिरूपस्य व्यक्तं प्रति कारणत्वात्पूर्वं अव्यक्ताभिधानमनन्तरञ्च व्यक्तस्याभिधानं युक्तमिति कथमिह विपरीतक्रम आदृतः इत्याशङ्कायामाह । व्यक्तज्ञानपूर्वकमिति । तथाचाव्यक्तस्य व्यक्तं प्रति कारणत्वेऽपि व्यक्तस्य प्रत्यक्षविषयतया तज्ज्ञानेन तत्कारणस्याव्यक्तस्यानुमानं भवति इति इह ज्ञानस्य प्रधानत्वेन ज्ञानकार्यकारणभावमाश्रित्य क्रमाभिधानं न तु वस्तुकार्यकारणभावमाश्रित्य इति भावः । अव्यक्तस्य ज्ञानमिति । एतच्च 'कारणमस्त्यव्यक्तम्'मित्यादिकारिकायां व्यक्तम्भविष्यति । तयोः व्यक्ताव्यक्तयोः । पारार्थ्येनेति । एतच्च सङ्घातपरार्थत्वादित्यत्र स्फुटीभविष्यति ॥

ननु सत्त्वपुरुषान्यताप्रत्ययरूपोपायस्य सत्त्वपुरुषज्ञानाधीनत्वेऽपि व्यक्तज्ञानाधीनत्वं कथमित्यत आह । इति ज्ञानक्रमेण इति । तथा च अव्यक्तज्ञानं प्रति व्यक्तज्ञानस्य कारणत्वात्तस्यापि अव्यक्तज्ञानद्वारा प्रयोजकत्वमक्षतमेव । न च व्यक्तादिज्ञानस्य शास्त्रातिरिक्तश्रुत्यादिप्रमाणेनापि सम्भवेन एतच्छास्त्रस्य वैयर्थ्यं दुर्वारं इत्याशङ्कानिरासायाह । एतदुक्तमिति । तथा च श्रावणात्मकस्य शाब्दबोधरूपस्य व्यक्तादिज्ञानस्य श्रुत्यादिप्रमाणेन सम्भवेऽपि असम्भावनाविपरीतभावनानिरासोपयोगिमननात्मकं ज्ञानं शास्त्रेणैव सम्भवतीति न तस्य वैयर्थ्यमिति भावः । विवेकेन पुरुषभिन्नतया, श्रुत्वा शाब्दबोधानन्तरं, न तु श्रावणप्रत्यक्षानन्तरमित्यर्थ. शब्दशब्दत्वादेरेव श्रावणप्रत्यक्षविषयतया अव्यक्तादेस्तद्विषयत्वाभावात् । शास्त्रयुक्त्येति । साङ्ख्यशास्त्रप्रतिपादितसङ्घातपरार्थत्वादित्यादियुक्त्या व्यवस्थाप्य विनिश्चित्येत्यर्थः । ननु एतादृशस्य शास्त्रीयनिश्चयस्य सत्त्वेऽपि प्रत्यक्षात्मकस्य पुरुषबुद्ध्यभेदावगाहिज्ञानस्य कथं

त्कारासेवितात् भावनामयात् विज्ञानमिति । तथा च वक्ष्यति—

एवं तत्त्वाभ्यासान्नास्मि न मे नाहमित्यपरिशेषम् ।
अविपर्ययाद्विशुद्धं केवलमुत्पद्यते ज्ञानम् । (का० ६४) इति ॥

तदेवं प्रेक्षावदपेक्षितार्थत्वेन शास्त्रारम्भं समाधाय शास्त्रमारभमाणः श्रोतृबुद्धिसमवधानाय तदर्थं सङ्क्षेपतः प्रतिजानीते—

**मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त ॥**
**षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुषः ॥३॥**

सङ्क्षेपतो हि शास्त्रार्थस्य चतस्रो विधाः । काश्चिदर्थः प्रकृतिरेव,

---

अग्रे अनुत्पत्तिः प्रत्यक्षात्मकज्ञानं प्रति परोक्षज्ञानस्याप्रतिबन्धकत्वात् इत्यत आह । दीर्घकालेति । आदरः दृढतरप्रयत्नः, सत्कारः निर्दुष्टत्वविशिष्टगुणवत्त्वबुद्धिः, नैरन्तर्यं अविच्छेदः, तैः दीर्घकालं यथा स्यात्तथा आसेवितादनुष्ठितात्, भावनामयात् भावनारूपादित्यर्थः । अयं भावः 'आत्मा वाऽरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य' इति श्रुत्या प्रकृतिभिन्नतया आत्मदर्शनरूपस्य आत्मदर्शनस्य एतन्मते श्रवणमनननिदिध्यासनसाध्यत्वं बोध्यते, तत्र च श्रुतिस्मृतात्यादिना श्रवणमुक्त्वा शास्त्रयुक्त्या चेत्यादिना मननानन्तरं चित्तवृत्तिनिरोधरूपनिदिध्यासनं प्रति 'अभ्यासवैराग्याभ्यां तन्निरोधः' इत्यादियोगसूत्ररीत्या अभ्यासस्य कारणत्वावगमेन तस्य च दृढभूमित्वाभावे न तन्निरोधकत्वसम्भवः इति 'स तु दीर्घकालनैरन्तर्यसत्कारसेवितो दृढभूमिः' इति सूत्रोक्तरीत्या दीर्घकालनैरन्तर्याद्यासेवनेनैव दृढभूमिता प्रतीयते दृढभूमिनाऽभ्यासेन च निदिध्यासनमनन्तरं च तत्त्वसाक्षात्कारात्मकसत्त्वपुरुषान्यताज्ञानमुत्पद्यते तस्य च प्रत्यक्षात्मकतया अपरोक्षात्मकाविवेकग्रहप्रतिबन्धकत्वं युक्तमेवेति । अत्रैव मूलकृतोऽपि सम्मतिरस्तीत्याह । तथा च वक्ष्यतीति ।

व्यक्ताव्यक्तज्ञानां विज्ञानात्तत्त्वसाक्षात्कारो भवतीत्युक्तं तत्र च तेषां विज्ञानं तेषां अशेषविशेषज्ञानं विना असम्भवि इत्यतः तद्विशेषाभिधानप्रवृत्तां कारिकामवतारयति। तदेवमित्यादिना । एवमुक्तप्रकारेण, शास्त्रारम्भं समाधायेति । शास्त्रमारम्भणीयं प्रेक्षावदपेक्षितैकान्तिकात्यन्तिकदुःखत्रयनिवृत्तिजनकत्वात् इत्यादिना शास्त्रे आरम्भणीयत्वाऽनुमायेत्यर्थः । श्रोतृबुद्धीति । श्रोतुः बुद्धेः मनसः, यत्समवधानं श्रवणेन्द्रियसंयोगानुकूलो यत्नः तस्मै इत्यर्थः । प्रतिज्ञां विना गुरुकर्तृकोच्चारणस्य संदिग्धतया तादृशयत्नासम्भवादिति भावः । तदर्थं प्रकृतशास्त्राभिधेयं व्यक्ताव्यक्तादिरूपमित्यर्थः । न्यायवैशेषिकादिवत् अत्र न षोडशादिपदार्थाः अपि तु संक्षेप एव इत्याह । संक्षेपत इति । प्रतिजानीते बोधयतीत्यर्थः ।

कारिकां व्याचिख्यासुः शास्त्राभिधेयानां अवान्तरविशेषानाह । संक्षेपत इति । शास्त्रार्थस्य एतच्छास्त्राभिधेयवस्तुजातस्य, चतस्रो विधाः चत्वारोऽवान्तरपरस्परासंकीर्णप्रकारा इत्यर्थः । तानेव प्रकारानाह । कश्चिदर्थ इत्यादिना । प्रकृतिरेवेत्येवकारेण विकृतित्वव्यवच्छेदः, विकृतित्वानधिकरणत्वे सति प्रकृतित्वमिति यावत् ।

कश्चिदर्थो विकृतिरेव, कश्चित्प्रकृतिविकृतिः, कश्चिदनुभयरूपः।

तत्र का प्रकृतिः? इत्यत उक्तम्—"मूलप्रकृतिरविकृतिः" इति। प्रकरोतीति प्रकृतिः प्रधानम्, सत्त्वरजस्तमसां साम्यावस्था, सा अविकृतिः, प्रकृतिरेवेत्यर्थः। कुतः? इत्युक्तम्—, "मूलेति"। मूलञ्चासौ प्रकृतिश्चेति मूलप्रकृतिः। विश्वस्य कार्यसङ्घातस्य सा मूलम्, न त्वस्या मूलान्तरमस्ति, अनवस्थाप्रसङ्गात्। न चानवस्थायां प्रमाणमस्तीति भावः।

कतमाः पुनः प्रकृतिविकृतयः, कियत्यश्च? इत्यत उक्तम्—"महदाद्याः प्रकृतिविकृतयः सप्त" इति। प्रकृतयश्च विकृतयश्च ता इति प्रकृतिविकृतयः सप्त।

तथा हि—महत्तत्त्वमहङ्कारस्य प्रकृतिः, विकृतिश्च मूलप्रकृतेः। एवमहङ्कारतत्त्वं तन्मात्राणामिन्द्रियाणां च प्रकृतिः, विकृतिश्च महतः। एवं पञ्चतन्मात्राणि तत्त्वानि भूतानामाकाशादीनां प्रकृतयो विकृतयश्चाहङ्कारस्य।

अथ का विकृतिरेव, कियती च? इत्यत उक्तम्—"षोडशकस्तु

---

विकृतित्वानधिकरणत्वोक्त्या प्रकृतिविकृतौ प्रकृतित्वसत्त्वेऽपि तस्य तदसंकीर्णत्वलाभः, एवं विकृतिरेवेत्यत्राप्यूह्यम्। अनुभयरूप इति। प्रकृतिविकृतिभिन्न इत्यर्थः। प्रकरोतीति। कारणत्वे सति अविकृतित्वं मूलप्रकृतेर्लक्षणम्। साम्यावस्था अनभिव्यक्तावस्था, प्रधानस्याविकृतित्वे प्रमाणमाह। मूलञ्चेति। प्रधानं कस्य मूलमित्याशङ्कायामाह। विश्वस्येति। विश्वपदस्य वस्तुमात्रार्थकतया प्रधाने पुरुषकारणत्वाभावेन न वस्तुमात्रकारणत्वसम्भवः इत्यत आह। कार्यसङ्घातस्येति। ननु प्रकृतेः मूलान्तरमङ्गीक्रियते तथाच कथं तत्र कार्यसमूहमूलत्वम् एवं तादृशनित्यमूलान्तरविकृतित्वसत्त्वाच्च न तस्यामविकृतित्वसम्भवः इत्यत आह। न त्वस्या इति। तत्र हेतुमाह। अनवस्थेति। नच मूलान्तरस्य नित्यत्वाङ्गीकारेण नानवस्था, मूलान्तरस्यातिरिक्तस्य नित्यत्वाङ्गीकारापेक्षया तस्या एव नित्यत्वकल्पनौचित्यात्। ननु बीजाङ्कुरानवस्थावत् अत्रापि अनवस्थाया न दोषत्वमित्यत आह। न चेति। तथा च अनवस्थायाः प्रामाणिकत्वे एवादोषतया अत्र चानवस्थायां प्रमाणाभावेन दोषत्वमस्त्येव।

कतमाः किंरूपाः, कियत्यः कतिविधाः, प्रकृतेर्विकृतयः प्रकृतिविकृतयः इति षष्ठीसमासभ्रमेण षोडशविकाराणामपि परम्परया प्रकृतिजन्यत्वात् कथं सप्तविधा एव प्रकृतिविकृतयः इत्याशङ्कां कर्मधारयसमासमाश्रित्य षष्ठीतत्पुरुषभ्रमनिरासपूर्वकं निरस्यति। प्रकृतयश्चेति। महत्तत्त्वादिषु प्रकृतिविकृतित्वं विवृणोति। तथा हीति। महतत्त्वमहङ्कारस्य प्रकृतिरिति। अत्र प्रकृतित्वं तत्त्वान्तरोपादानत्वरूपं ग्राह्यं, न तु पूर्वोक्तं सत्त्वरजस्तमसां साम्यावस्थादिरूपं महत्तत्त्वादौ तदभावात्। तथा च तत्त्वान्तरोपादानत्वे सति कार्यत्वं प्रकृतिविकृतित्वम्।

विकारः" इति। षोडशसङ्ख्यापरिमितो गणः षोडशकः । तुशब्दो- ऽवधारणे भिन्नक्रमश्च। पञ्च महाभूतानि एकादश इन्द्रियाणि चेति षोडशको गणो विकार एव, न प्रकृतिरिति। यद्यपि च पृथिव्या- दीनां गोघटवृक्षादयो विकाराः, एवं तद्विकारभेदानां पयोबीजादी- नां दध्यङ्कुरादयः, तथाऽपि गवादयो बीजादयो वा न पृथिव्यादिभ्य- स्तत्त्वान्तरम्। तत्त्वान्तरोपादानत्वं च प्रकृतित्वम् इहाभिप्रेतमिति न दोषः । सर्वेषां गोघटादीनां स्थूलतेन्द्रियग्राह्यता च समेति न तत्त्वान्तरत्वम् ।

---

गण इति। नच 'संख्यायाः संज्ञासङ्घसूत्राध्ययनेषु' इति सूत्रेण तदस्य परिमाण- मित्यर्थे संघादौ वाच्ये संख्यावाचकशब्दात्कः प्रत्ययो विधीयते संघश्च प्राणिसमूह वाचक इति काशिकादौ व्याख्यातत्वात् कथमत्र कः प्रत्ययः इति चेन्न । एतत्सूत्र- घटकीभूतसंघशब्दस्य समूहमात्रार्थकत्वमेव अत एव "कामजो दशको गणः" क्रोध जोपि गणोऽष्टक' इत्यादिप्रयोगः साधु सङ्गच्छते। भिन्नक्रमेति। भिन्नः पाठस्थाना- दन्यः, क्रमः निवेशस्थानं यस्य तथाभूतः विकारशब्दोत्तरं निवेशनीयमिति भावः। षोडशविकारान्विशिष्य दर्शयति। पञ्चेत्यादिना। विकार एवेति। तथा च तुशब्द- स्यैवकारार्थकतया तादृशार्थलाभः। एवं च प्रकृतित्वानधिकरणत्वे सति विकृतित्वं विकारत्वमिति फलितम्। नच गोघटादिषु पयोबीजादिप्रकृतित्वसत्त्वात्तत्र पूर्वोक्तलक्ष- णाव्याप्तिरित्याशङ्क्ते। यद्यपीत्यादिना। तद्विकारभेदानां गोवृक्षादिविकारविशेषाणां, प्रकृतलक्षणे प्रकृतित्वं न कारणत्वरूपं इत्याशयेन समाधत्ते। तथापीति। ननु गवा- दीनां पृथिव्यादिभ्यः तत्त्वान्तरत्वानङ्गीकारेपि कुतो न प्रकृतित्वं इत्यत आह। तत्त्वान्तरेति। इह एतल्लक्षणे। ननु तत्त्वान्तरत्वं यदि स्वावृत्तिधर्मवत्त्वं तदा पयो- बीजादौ गोघटाद्यवृत्तिपयस्त्वबीजत्वादिरूपधर्मवत्त्वेन अतिव्याप्तिस्तदवस्थैव इत्यतः आह। सर्वेषामिति । तथा च गोघटादयः पृथिव्यादिभ्यस्तत्त्वान्तरं न भवन्ति स्थूलत्वेन्द्रियग्राह्यत्वयोस्तारतम्याभावात्, यत्र हि तत्त्वान्तरत्वं तत्र स्थूलत्वे- न्द्रियग्राह्यत्वयोः तारतम्यं अनुभूयते, यथा साङ्ख्यमते गुणगुणिनोरभेदात् आकाशः शब्दैकगुणः अत्यन्तं सूक्ष्मः ततो द्विगुणो वायुः स्थूलः ततस्त्रिगुणं तेजः स्थूलं ततोपि चतुर्गुणा आपः स्थूलतमाः ततोपि पञ्चगुणाः पृथिवी अत्यन्तं स्थूला ।अत एव पृथिवीतो जलं सूक्ष्मं तदपेक्षया किञ्चित्सूक्ष्मं तेजः एवं क्रमेण' सूक्ष्मत्वतारतम्यमनु- भूयते। यद्यपि अहंकारतत्त्वापेक्षया आकाशोपि स्थूल एव, तथापि पृथिवीतत्त्वाद्यपे- क्षया तस्य सूक्ष्मत्वं द्रष्टव्यम् ।

एवं च यादृशं पञ्चभूतानां प्रत्येकं स्थूलत्वतारतम्यमनुभवसिद्धं तादृशं गो- घटादीनां पयोबीजादीनां वा नानुभूयते । अपि तु सर्वेष्वेव समानं स्थूलत्व- मनुभूयते पृथिव्यां हि सर्वापेक्षया स्थूलत्वमनुभूयते यथा जले उन्मज्जननिम- ज्जनादिकं कर्तुं शक्यते न तथा पृथिव्यां एवमग्रेपि, एवं पृथिव्याः पञ्चगुणा- त्मकत्वात्पञ्चेन्द्रियग्राह्यता विद्यते जले एकस्य तस्य ह्रासात् चतुरिन्द्रियग्राह्यता तेजसि इन्द्रियत्रयग्राह्यता तस्य त्रिगुणत्वात् एवं वायोः द्विगुणत्वाद्वीन्द्रिय-

अनुभयरूपमुक्तं, तदाह—"न प्रकृतिर्न विकृतिः पुरुषः" इति । एतच्च सर्वमुपरिष्टादुपपादयिष्यते ॥ ३ ॥

तमिममर्थं प्रामाणिकं कर्तुमभिमताः प्रमाणभेदा लक्षणीयाः, न

---

ग्राह्यता शब्दात्मकस्याकाशस्यैकेन्द्रियग्राह्यतेति यत्र यत्र पञ्चभूतेषु तत्त्वान्तरत्वं तत्र तत्र स्थूलत्वेन्द्रियग्राह्यत्वयोस्तारतम्यं स्पष्टमनुभूयते, नैवं घटपयोबीजादिषु तत्र हि यादृशं स्थूलत्वमिन्द्रियग्राह्यत्वं च पृथिव्यां तादृशमेव घटादिषु, तेषां समानगुणत्वात् इति । तथाच तत्त्वान्तरत्वं स्वावृत्तिद्रव्यविभाजकोपाधिमत्त्वं विवक्षितम् । यद्यद॰पेक्षया स्थूलत्ववत् तत्तद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमत् एवं यद्यदपेक्षया सूक्ष्मं तत्तद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमत् इति तत् यद्यद्वृत्तिद्रव्यविभाजकोपाधिमत् तत्तदपेक्षया स्थूलत्वसूक्ष्मत्वान्यतरवत् इति व्याप्त्या व्यापकीभूतस्य तदवधि॰कस्थूलत्वसूक्ष्मत्वान्यतरस्याभावेन व्याप्यीभूतस्य स्वावृतिद्रव्यविभाजकोपाधि॰मत्त्वस्याभावः सिद्ध्यति । एतदभिप्रेत्याह स्थूलतेति । एवमेव पञ्चभूतकारणस्या काशस्य पञ्चभूतापेक्षया सूक्ष्मत्वं महत्तत्त्वापेक्षया स्थूलत्वं एवं अव्यक्तस्य च सर्वका॰रणत्वात्सर्वापेक्षया सूक्ष्मत्वं अत एव तस्याव्यक्तशब्दाभिधेयत्वं इत्येवं रीत्या यत्र यत्र त त्त्वान्तरत्वं तत्र तत्र स्थूलत्वसूक्ष्मत्वतारतम्यमस्त्येवेति पूर्वोक्तव्याप्तौ न व्यभिचार॰प्रसक्तिः। एतच्च 'सूक्ष्मविषयत्वं चालिङ्गपर्यवसानं' इतियोगसूत्रभाष्ये 'दश मन्वन्तरा॰णीह ति ष्ठन्तीन्द्रियचिन्तकाः' । इत्याद्यग्रिमग्रन्थे च स्पष्टम् । इन्द्रियग्राह्यत्वस्य महदादौ अभावेन तेषु तत्तारतम्यं न भवति पृथिव्यादिषु तु तदुभयमपि विद्यते इति तदुभयं हेतुत्वेनोपात्तम् । अत एव समुच्चयार्थश्चकारः एतच्च शारीरकमीमांसाभाष्यव्याख्याना॰वसरे द्वितीयाध्यायस्य द्वितीयपादे नैयायिकमतदूषणप्रक्रियायां 'उभयथा च दोषात्' (२-२-१६) इति सूत्रस्थभामत्यां स्पष्टम् ।

अनुभयरूपमिति । अत्र उभयं प्रकृतिविकृती तद्भिन्नमित्यर्थो न सम्भवति मूल॰प्रकृतेरपि प्रकृतिविकृतिभिन्नत्वादित्यत आह । मूले न प्रकृतिरिति । तथा च प्रकृति॰भिन्नत्वे सति विकृतिभिन्नत्वमिति पर्यवसितं, तद्घटकं प्रकृतित्वं च न पूर्वोक्तं तत्त्वा॰न्तरोपादानत्वरूपं तत्त्वान्तरपदवैयर्थ्यात् अपि तु उपादानत्वरूपमेव । ननु महत्तत्त्व॰महंकारस्य प्रकृतिः इत्यादिनियमे, एवं पुरुषस्यानुभयरूपत्वे, परमाणूनामेव पृथिव्या॰द्युपादानत्वसम्भवे पञ्चतन्मात्राद्यङ्गीकारे च प्रमाणाभावः इत्याशङ्कायामाह । एतत्स॰र्वमिति । उपरिष्टादिति । तत्तत्पदार्थनिरूपणावसर इत्यर्थः । उपपादनं साधनं तच्च क्वचिदनुमानेन यथा पुरुषस्य प्रकृतिविकृतिभिन्नत्वादिकं, क्वचिच्च आग॰मेन यथा प्रकृतेर्महानित्यादिना क्रमस्येति ।

तदेवं विवेकज्ञानोपयोगिनः सङ्क्षेपतः अभिधाय तेषां सिद्ध्यर्थं प्रमाणान् अभिधातुं प्रवृत्तां कारिकामवतारयति । तमिममित्यादिना । ननु कणादादिभिः प्रमाणानामभि हितत्वात् तत एव प्रमाणभेदज्ञानसम्भवात् अत्र तन्निरूपणमनावश्यकम् इत्याशंका॰यामाह । अभिमतानिति । एतच्छास्त्रकृत्सम्मतानित्यर्थः । तथा च कणादादिशास्त्रस॰म्मतप्रमाणानां एतच्छास्त्रकृदनभिमततया तन्निरूपणमावश्यकमिति भावः । नच प्रमाण॰विशेषज्ञानार्थं प्रमाणविशेषाणामेव लक्षणाभिधानमुचितमिति प्रमाणसमान्यलक्षणाभि॰धानमनर्थकमित्याशंकायामाह । नचेति । सामान्यलक्षणपूर्वकत्वात् सामान्यलक्षणाभि॰

च सामान्यलक्षणमन्तरेण शक्यते विशेषलक्षणं कर्तुमिति प्रमाणसामान्यं तावल्लक्षयति—

**दृष्टमनुमानमाप्तवचनं च सर्वप्रमाणसिद्धत्वात् ॥**
**त्रिविधम्प्रमाणमिष्टं प्रमेयसिद्धिः प्रमाणाद्धि ॥ ४ ॥**

अत्र च 'प्रमाणम्' इति समाख्यया लक्ष्यपरम् । तन्निर्वचनं च लक्षणम् । प्रमीयतेऽनेनेति निर्वचनात् प्रमांप्रति करणत्वं गम्यते असन्दिग्धाविपरीतानधिगतविषया चित्तवृत्तिः,

---

धानपूर्वकत्वात् विशेषलक्षणस्य विशेषलक्षणाभिधानस्येत्यर्थः। तेन यथाश्रुते गुणवत्त्वादिरूपद्रव्यादिसामान्यलक्षणपूर्वकत्वस्य गन्धादिरूपविशेषलक्षणेऽभावेऽपि न क्षतिः। विशेषलक्षणाभिधानस्य समान्यलक्षणाभिधानपूर्वकत्वं च विशेषलक्षणाभिधानं प्रति विशेषजिज्ञासायाः प्रयोजकत्वात् विशेषजिज्ञासां प्रति च सामान्यधर्मज्ञानस्येष्टसाधनताज्ञानधर्मितावच्छेदकज्ञानसम्पादकतया हेतुत्वेन तत्र च सामान्यलक्षणाभिधानस्योपयोगितेति रीत्या बोध्यम्। अत एवोक्तं भट्टपादैः 'समान्यलक्षणं त्यक्त्वा विशेषस्यैव लक्षणम्। न शक्यं केवलं वक्तुमितोप्यस्य न वाच्यतेति" ।

नच प्रमाणसामान्यं तावल्लक्षयतीत्युक्तं न सङ्गच्छते कारिकायांत लक्षणादर्शनात् अपि तु तद्विभागस्यैव दर्शनात् इत्यत आह। अत्र चेति। अत्र कारिकायां, समाख्यया संज्ञया प्रमाणपदवाच्यत्वेन लक्ष्यत्वमिति भावः। केचितु समाख्या यौगिकः शब्दः इति मीमांसकसङ्केतमादृत्य प्रमाणमिति शब्दस्य यौगिकप्रमाकरणरूपार्थस्य लक्ष्यत्वं प्रमाणपदावयवभूतप्रकृतिप्रत्ययार्थस्य च लक्षणत्वमिति व्याकुर्वन्ति तत्तु लक्ष्यलक्षणयोरभेदापत्त्योपेक्षितम् ।

तन्निर्वचनमिति। प्रमाणपदावयवभूतप्रकृतिप्रत्ययार्थं इत्यर्थः। प्रमाणपदे हि प्रमापद प्रकृतिः ल्युट्प्रत्ययश्च तत्र ल्युट्प्रत्ययस्य भावकरणरूपोभयार्थकतया भावार्थकत्वभ्रमो माभूत इत्यतस्तन्निर्वचनप्रकारमाह। प्रमीयतेऽनेनेति । गम्यत इति। तथा च प्रमानिरूपितासाधारणकारणत्वं तल्लक्षणमिति पर्यवसितं। तत्र च प्रमां लक्षयति। असन्दिग्धेति। असंदिग्धः कोटित्वाख्यविलक्षणविषयताशून्यः, अविपरीतः स्वाभाववन्निष्ठविशेष्यतानिरूपितप्रकारतावदन्यः, अनधिगतः पूर्वकालीननिश्चयाविषयः, एवम्भूतः विषयो यस्यास्तस्याश्चित्तवृत्तेः तादृशी चित्तवृत्तिः प्रमेत्यग्रिमेणान्वयः । तथाच कोटित्वाख्यविलक्षणविषयताभिन्नस्वाभाववन्निष्ठविशेष्यतानिरूपितप्रकारताभिन्नपूर्वकालीननिश्चयविषयावृत्तिविषयताशालिचित्तवृत्तिः प्रमा इत्यर्थः पर्यवसितः

अत्र च धारावाहिकबुद्धिस्थलेऽनधिगतविषयत्वाभावेनाऽव्याप्तिरिति नाशङ्कनीयम् । तत्रापि तत्तत्क्षणविशिष्टविषयकत्वेनाऽनधिगतविषयकत्वसम्भवात् । 'न सोऽस्ति प्रत्ययो लोके यत्र कालो न भासते इत्यभियुक्तोक्तेः। यद्यपि 'सांख्याचार्यैः कालरूपं तत्त्वान्तरं नाभ्युपगम्यते, तथापि यैः कालः स्वीक्रियते तन्मतेऽपि अखण्डस्य एकस्य कालस्य अतीतानागतादिव्यवहारजनकत्वासम्भवादुपाधिभेदैरेव तदुपपादनीयम्। एवञ्च सांख्यमतेऽपि व्यवहारस्याप्रत्याख्यानात्तज्जनकत्वं कल्पनानामुपा-

बोधश्च पौरुषेयः फलं प्रमा, तत्साधनं प्रमाणमिति ।

धीनामेव स्वीक्रियत इति तेषामेव कालत्वेन तद्विषयकत्वमादायैव अनधिगतविषयकत्वस्योपपादने बाधकाभावात् । यदि च कालस्य प्रत्यक्षत्वं न भवतीत्याग्रहस्तदा धारावाहिकबुद्धिस्थले ज्ञानभेदो न स्वीक्रियते, यावद्घटस्फुरणं तावद्घटाकाराऽन्तःकरणवृत्तिरेकैव, न तु नाना, वृत्तेः स्वविरोधिवृत्त्युत्पत्तिपर्यन्तं स्थायित्वाभ्युपगमात्, अतो नाव्याप्तिः । तथापि अधिगतस्यैव घटस्य कालभेदेनेन्द्रियजन्यज्ञाने जातेऽनधिगतविषयकत्वाभावेनाऽव्याप्तिस्तदवस्थैवेति चेत्तदाऽनधिगतविषयकत्वपदेन यज्जातीयविशिष्टज्ञानत्वावच्छेदेन स्वसमानाकारकनिश्चयोत्तरत्वं तज्जातीयान्यत्वमेव विवक्षितम् । स्मृतिजातीयविशिष्टज्ञानत्वावच्छेदेन स्वसमानाकारकनिश्चयोत्तरत्वस्यैव सत्त्वेन तज्जातीयान्यत्वाभावात्स्मृतौ नाऽतिप्रसङ्गः । घटविषयकप्रत्यक्षजातीयविशिष्टज्ञानत्वावच्छेदेन तत्समानाकारकनिश्चयोत्तरत्वस्याऽभावेन तज्जातीयान्यत्वादधिगतघटविषयकज्ञाने नाव्याप्तिरिति सर्वं चतुरस्रम् ।

'फलमविशिष्टः पौरुषेयश्चित्तवृत्तिबोधः' (यो०भा०१पा०सू०६) इति योगभाष्यानुसारात् चैतन्यप्रतिबिम्बविशिष्टबुद्धिवृत्तिः वृत्तिप्रतिबिम्बितचैतन्यं वा फलपदार्थः, स एव मुख्यप्रमाशब्दवाच्यः । एतादृशप्रमाकरणत्वेन बुद्धिवृत्तेः प्रमाणत्वं व्यपदिश्यते, तत्करणत्वेन च इन्द्रियादीन्यपि प्रमाणशब्दवाच्यानि भवन्ति । तथा च एतन्मते प्रमा प्रमाणं च द्विविधम् । इन्द्रियादीनां प्रमाणत्वे बुद्धिवृत्तेः प्रमात्वं, तस्याः प्रमाणत्वे पौरुषेयबोधस्य प्रमात्वम् । अतः अयं घटः इत्याद्याकारिका अन्तःकरणवृत्तिः प्रमाणम् । 'घटमहं जानामि' इत्याद्यनुव्यवसायः पुरुषे बुद्धिवृत्तिप्रतिबिम्बरूपः पौरुषेयो बोधः इति यत् केषांचिद्व्याख्यानं तन्निरस्तम् । यथाहि—जले चन्द्रस्य प्रतिबिम्बः, न तु चन्द्रे जलादेः प्रतिबिम्बः, किन्तु जलगते प्रतिबिम्ब एव जलगताः चञ्चलत्वमलिनत्वादयो धर्मा आरोप्यन्ते, एवं चन्द्रगताः प्रकाशत्वादयो धर्माः जले आरोप्यन्ते, गगनगते मुख्यचन्द्रे तु न आरोपः, किन्तु 'चन्द्रः कम्पते' इत्यादिशब्दप्रयोगमात्रं, तद्वत् बुद्धौ चैतन्यप्रतिबिम्बे आपतिते बुद्धिगताः सुखदुःखादयो धर्माः सान्निध्यात् प्रतिबिम्ब एव आरोप्यन्ते, न तु बिम्बे उपाधेः प्रतिबिम्बपक्षपातित्वात् । एवं बिम्बगताश्च चेतनात्वादयो बुद्धौ प्रतिभासन्ते, अतः बुद्धिपुरुषयोः भेदाग्रहात् बुद्धिरचेतनाऽपि चेतनेव पुरुषः सुखदुःखादिरहितोऽपि तद्वानिव लक्ष्यते इति पुरुषे बुद्धेः प्रतिबिम्बानङ्गीकारेऽपि सर्वव्यवहारोपपत्तौ पुरुषे बुद्धिप्रतिबिम्बकल्पना व्यर्था ।

यत्तु—

तस्मिंश्चिद्दर्पणे स्फारे समस्ता वस्तुदृष्टयः ।
इमास्ताः प्रतिबिम्बति सरसीव तटद्रुमाः ॥

इति पुरुषे बुद्धिप्रतिबिम्बसाधकं वचनं तत् चित्प्रतिबिम्बरूपदर्पणे इति व्याख्येयम् । एवं च सति अनुव्यवसायरूपबुद्धिवृत्तेरपि चैतन्यप्रतिबिम्बविशिष्टत्वादेव प्रकाशकत्वम्, न तु पुरुषे तत्प्रतिबिम्बद्वारा, इति सूक्तम् बुद्धिवृत्तिप्रतिबिम्बितचैतन्यमेव पौरुषेयो बोध इति । अधिकं तु योगभाष्यवाचस्पत्ये द्रष्टव्यम् ।

एवमुभयविधामपि प्रमां लक्षयित्वा प्रमाणं लक्षयति । तत्साधनं प्रमाणमिति ।

एतेन संशयविपर्ययस्मृतिसाधनेष्वप्रसङ्गः।

सङ्ख्याविप्रतिपत्तिं निराकरोति—"त्रिविधम्" इति । तिस्रो

---

तस्याः चित्तवृत्तिरूपप्रमायाः पौरुषेयबोधरूपप्रमायाश्च यत्साधनं करणं चक्षुरादिरूपं चित्तवृत्तिरूपं च तदुभयमपि प्रमाणमित्यर्थः। एतेन साधनपदस्य कारणमात्रार्थकतया अदृष्टादावपि प्रमासाधनत्वसत्त्वात् यथाश्रुते तत्रातिव्याप्तिरिति निरस्तम्। प्रमासाधनत्वस्य अदृष्टादौ सत्त्वेपि तत्करणत्वस्य तत्राभावात्। केचित्तु व्यापारवत्कारणं करणमिति न करणलक्षणं अपि तु फलायोगव्यवच्छिन्नकारणं करणं इति करणलक्षणं वदन्तः यदि प्रमारूपं फलं पौरुषेयबोधरूपमुच्यते तदा बुद्धिवृत्तिरेव प्रमाणं यदि च बुद्धिवृत्तिः प्रमेत्युच्यते तदा इन्द्रियसन्निकर्षादिरेव प्रमाणं न तु इन्द्रियादि इन्द्रियादौ तु तद्व्यवहारः भाक्त एवेत्याहुः।

प्रमाणलक्षणीभूतप्रमाकरणत्वघटकप्रमालक्षणघटकासंदिग्धेत्यादिविशेषणानां फलमाह। एतेनेति। एतेन उक्तविशेषणत्रयदानेन, संशयविपर्ययस्मृत्यादिरूपचित्तवृत्तेः प्रमात्वाभावेन तादृशचित्तवृत्तिभिन्नचित्तवृत्तिकरणत्वस्यैव प्रमाणलक्षणतया तदनुपादाने संशयाद्याकारचित्तवृत्तिकरणेषु साधारणधर्मज्ञानदोषानुभवादिषु, अप्रसङ्गः अतिव्याप्तिः, सा नेत्यर्थः।

ननु स्मृतेः प्रमात्वे क्षत्यभावात् प्रमाणलक्षणे तद्व्यावर्त्तकविशेषणदानं अनुपयुक्तं इति चेत्। अत्र केचित्, स्मृतेर्यथार्थत्वं नास्ति न हि यादृशोऽर्थः स्मर्यते यदा तादृश एवासौ तदा अनुभवेन हि घटोयमित्याकारेण वर्तमानो घटो विषयीक्रियते स्मृत्या तु स घट इत्याकारिकया पूर्वावस्थाविशिष्टः न च स्मृतिकाले पूर्वावस्था वर्तमाना तस्या अनिवृत्तौ पूर्वतैव न स्यात्, वर्तमानध्वंसप्रतियोगिन एव पूर्वत्वात्। तथाच पूर्वावस्थाविशिष्टघटस्य तद्विशिष्टतया विषयीकरणात् स्मृतिरप्रमा। न च निवृत्तपूर्वावस्थतयैवैषमर्थं स्मृतिरालम्बते इति वाच्यम्। पूर्वावस्थानिवृत्तेरननुभूतत्वात्। अननुभूते चार्थे स्मृतेरप्रवृत्तेः। तस्मात् स्मृतेरलक्ष्यत्वमाश्रित्य अनधिगतपदेन तद्वारणं सङ्गतमेवेति वदन्ति। वस्तुतस्तु स्मृतेः प्रमात्वमिष्टमेव। स्मृतिहेतोः प्रमाणान्तरत्वापत्तिभिया स्मृतिव्यावृत्तं प्रमात्वं तान्त्रिकैः रभ्युपेयते, एतच्च "स्मृतिहेतोः प्रमाणान्तरतापत्तेस्तु भीतास्तान्त्रिकाः शास्त्रे प्रमाव्यहारौपयिकं स्मृतिव्यावृत्तं रूपमनुमन्यन्ते" इति प्रामाण्यवाददीधितौ स्पष्टम्।

यद्यपि शुक्तौ इदं रजतमित्याकारकज्ञानस्य आपणस्थरजतविषयकतया अधिगतविषयकत्वेन स्मृतिव्यावर्त्तकविशेषणेन तद्वारणसम्भवे विपर्ययभिन्नत्वनिवेशो व्यर्थः। तथापि पूर्वोक्तयज्जातीयविशिष्टज्ञानत्वावच्छेदेन समानाकारकनिश्चयोत्तरत्वं तज्जातीयान्यत्वस्यैव अनधिगतविषयत्वार्थकतया अप्रमात्वस्य च चाक्षुषत्वादिना सांकर्यापत्तिवारणाय जातित्वानभ्युपगमेन शुक्तौ इदं रजतमित्याकारकप्रत्यक्षे यज्जातीयविशिष्टज्ञानत्वावच्छेदेन समानाकारकनिश्चयोत्तरत्वं तज्जातीयान्यत्वस्य सत्वादतिव्याप्तिर्दुर्वारैव इति तद्विशेषणं सार्थकमेव।

प्रमाणेषु इयत्त्वावधारणपरं कारिकांशमवतारयति। संख्याविप्रतिपत्तिमित्यादिना। प्रत्यक्षमेकमेव प्रमाणमिति लौकायतिकाः, प्रत्यक्षमनुमानञ्चेत्युभयं प्रमाणमिति काणादाः, प्रत्यक्षानुमानशब्दाः त्रीणि प्रमाणानि इति साङ्ख्याः, उपमानेन सह चत्वार्येता-

विधा अस्य प्रमाणसामान्यस्य तत् त्रिविधम्, न न्यूनं, नाप्यधिकमित्यर्थः। विशेषलक्षणानन्तरञ्चैतदुपपादयिष्यामः।

कतमाः पुनस्ता विधाः? इत्यत आह—"दृष्टमनुमानमाप्तवचनं च" इति। एतच्च लौकिकप्रमाणाभिप्रायम्, लोकव्युत्पादनार्थत्वाच्छास्त्रस्य, तस्यैवात्राधिकारात्। आर्षं तु विज्ञानं योगिनामूर्ध्वस्रोतसां न लोकव्युत्पादनायालमिति सदपि नाभिहितम्, अनधिकारात्।

स्यादेतत्—मा भून्न्यूनम्, अधिकं तु कस्मान्न भवति? सङ्गिरन्ते हि प्रतिवादिनः उपमानादीन्यपि प्रमाणानि, इत्यत आह—

---

नीति नैयायिकाः, अर्थापत्त्या सह पञ्चैव प्रमाणानीति प्राभाकराः, अनुपलब्ध्या सह षट् प्रमाणानीति भाट्टवेदान्तिनौ, सम्भवैतिह्याभ्यां सह अष्टौ इति पौराणिकाः, चेष्टया सह नव इति आलंकारिकाः, इत्येवं प्रकारेण प्रमाणत्वसाक्षाद्व्याप्यपरम्परासंकीर्णधर्मत्वं यत्किञ्चित्त्रित्वसमनियतं न वा इति विप्रतिपत्तिः। अत्र विधिकोटिः सांख्यस्य निषेधकोटिश्च तदितरेषां तान्त्रिकाणां अधिकमन्यत्रानुसन्धेयम्।

संख्याविशेषनिर्देशस्य न्यूनाधिकसंख्याव्यवच्छेदार्थत्वादाह। न न्यूनमिति। ननु एकविधद्वैविध्याभ्यामेवोपपत्तौ कुतो न न्यूनत्वं, एवमुपमानादीनां प्रमाणान्तरत्वस्य आवश्यकत्वे कुतो नाधिकत्वं इत्यत आह। विशेषेति। एतत् त्रैविध्यं, उपपादयिष्यामः युक्त्या साधयिष्यामः।

ननु आर्षविज्ञानस्यातीतानागतवस्तुविषयकतया तादृशचित्तवृत्तौ न प्रत्यक्षत्वं तस्या विषयेन्द्रियसन्निकर्षाजन्यत्वात्, नाप्यनुमानत्वं व्याप्तिज्ञानाजन्यत्वात्, नाप्यागमत्वं पदज्ञानाद्यजन्यत्वात्, इति कथं त्रिविधं प्रमाणं। न च तादृशज्ञाने प्रमाणाभावः,'प्रातिभाद्वा सर्वं सर्वनिमित्तानपेक्षं' इति योगसूत्रस्य 'आम्नायविधातॄणां ऋषीणामतीतानागतवर्तमानेषु अतीन्द्रियेषु अर्थेषु धर्मादिषु ग्रन्थोपनिबद्धेषु च आत्ममनसोः संयोगात् धर्मविशेषाच्च यत् प्रातिभं यथार्थसंवेदनं ज्ञानमुत्पद्यते" इति गुणग्रन्थीयप्रशस्तपादभाष्यस्य च तत्र प्रमाणत्वात् इत्यत आह। एतच्चेति। प्रमाणत्रैविध्याभिधानं चेत्यर्थः। लौकिकप्रमाणाभिप्रायमिति। लौकिकानां मिथ्याज्ञानजन्यवासनावतां, यानि प्रमाणानि प्रमाकरणानि, तदभिप्रायं तत्तात्पर्यकमित्यर्थः। अत्र हेतुमाह।लोकव्युत्पादनार्थत्वादिति। लौकिकप्रमोत्पादनोद्देश्यत्वादित्यर्थः। अलौकिकप्रमोत्पादनं कुतो न शास्त्रोद्देश्यमित्यत आह। तस्यैवेति। लोकस्यैव, अत्र प्रकृतशास्त्रे, अधिकारित्वादित्यर्थः। केषां पुनरार्षविज्ञानाधिकारित्वं इत्यत आह। आर्षं त्विति। ऊर्ध्वस्रोतसां ऊर्ध्वं विषयेभ्यो बहिः परे तत्त्वे, स्रोतः वृत्तिप्रवाहो येषां तेषां योगिनां, सदपि विद्यमानमपि, लोकव्युत्पादनाय लोकप्रमोत्पादनाय, नालं न समर्थमिति हेतोः नाभिहितं, तेषां अत्र शास्त्रे अनधिकारित्वादिति शेषः।

ननु आर्षविज्ञानस्य अलौकिकत्वात् लोकव्युत्पादनासमर्थत्वेपि उपमानादीनां लौकिकप्रमाणानां अधिकानां विद्यमानत्वात् तेषामत्र अनिरूपणेन न्यूनत्वं दुर्वारमित्याशंकते। स्यादेतदिति। सङ्गिरन्ते प्रतिजानते, प्रतिवादिनः गौतमादयः।

"सर्वप्रमाणसिद्धत्वात्" इति। एष्वेव दृष्टानुमानाप्तवचनेषु सर्वेषां प्रमाणानां सिद्धत्वात्—अन्तर्भावादित्यर्थः। एतच्चोपपादयिष्यत इत्युक्तम्।

अथ प्रमेयव्युत्पादनाय प्रवृत्तं शास्त्रं कस्मात् प्रमाणं सामान्यतो विशेषतश्च लक्षयति? इत्यत आह—"प्रमेयसिद्धिः प्रमाणाद्धि" इति। सिद्धिः—प्रतीतिः।

सेयमार्याऽर्थक्रमानुरोधेन पाठक्रममनादृत्यैव व्याख्याता ॥ ४ ॥

सम्प्रति प्रमाणविशेषलक्षणावसरे प्रत्यक्षस्य सर्वप्रमाणेषु ज्ये-

---

अन्ये तु त्रिविधं प्रमाणमिष्टं कुतः सर्वप्रमाणसिद्धत्वात् सर्वैः प्रमाणैः बहुभिः प्रमातृभिः पातञ्जलिप्रभृतिभिः सिद्धत्वात् "प्रत्यक्षानुमानागमाः प्रमाणानि" (यो०सू०७अ०१)इति सूत्रे स्वीकृतत्वात् उपमानादिकं तु न सर्वप्रामणसिद्धमिति भावः। न च उपमानादीनामपि नैयायिकवेदान्तिमीमांसकादिबहुवादिसम्मतत्वेन कुतो न सर्वप्रमाणसिद्धत्वं, 'यद्वै मनुरवदत्तद्भेषजम्' इति ताण्ड्यमहाब्राह्मणश्रुतौ मनुवाक्यस्य प्रमाणतरतायाः कण्ठत उक्ततया मनुना च "प्रत्यक्षमनुमानञ्च शास्त्रं च विविधागमम्। त्रयं सुविदितं कार्यं धर्मतत्त्वमभीप्सुना। इत्यादिना प्रत्यक्षानुमानागमानामेव प्रमाणत्वाभिधानात् नैयायिकादीनां प्रामाण्यस्य मन्वाद्यपेक्षयाऽपकृष्टत्वेन उपमानादीनां न सर्वप्रमाणसिद्धत्वमिति। अथवा सर्वेषां प्रमाणभूतेन मनुवचनेन सिद्धत्वात् प्रमाणत्रयमेव इष्टम् इत्यर्थोऽपि सम्भवति इति वदन्ति।

कथमेतेषु त्रिष्वेव सर्वेषां प्रमाणानामन्तर्भाव इत्यत आह। एतच्चेति। न च पदवाक्यप्रमाणप्रमेयप्रतिपादनपरेषु शास्त्रेषु पदशास्त्रत्वेन व्याकरणस्य, वाक्यशास्त्रत्वेन मीमांसायाः, प्रमाणशास्त्रत्वेन न्यायकाणादयोः, प्रमेयशास्त्रत्वेन च सांख्ययोगवेदान्तानां लोके व्यवहार इति अत्र शास्त्रे प्रमेयाभिधानमेवोचितं न तु प्रमाणाभिधानं इत्याशयेनाशंकते। अथेति। हि यतः, प्रमेयप्रतीतिः प्रमाणाधीना अतः प्राधान्येन प्रमेयनिरूपणपरत्वेऽपि तदुपयोगितया प्रमाणनिरूपणमपि आवश्यकमित्यर्थः।

ननु कारिकास्थं दृष्टमनुमानमाप्तवचनं च इति प्राथमिकवाक्यमुत्सृज्य त्रिविधं प्रामाणमिष्टं इत्युत्तरवाक्यस्य प्रथमं व्याख्यानमनुचितं इत्याशंकां परिहरति। सेयमित्यादिना। अर्थक्रमः प्रयोजनानुसारिक्रमः, पाठक्रमः वाक्ययोः पौर्वापर्यं। अयं भावः, पाठक्रमस्य अर्थक्रमापेक्षया बलवत्त्वं'अर्थाच्च'इति जैमिनीयसूत्रे 'अर्थक्रमविरोधे च कः पाठमनुरुध्यते। इत्यत्र च उक्तं। तथाहि "अग्निहोत्रं जुहोति यवागूं पचति" इति वाक्ययोः पौर्वापर्यात् अग्निहोत्रहोमानन्तरं यवागूपाकस्य पाठक्रमात्प्राप्तावपि अग्निहोत्रानन्तरं यवागूपाकस्य दृष्टप्रयोजनाभावात् अदृष्टफलकल्पनं एवं अग्निहोत्रहोमार्थं श्रुतद्रव्यं विहाय अश्रुतद्रव्यान्तरकल्पनं च स्यात् अतः यवागूपाकानन्तरं अग्निहोत्रानुष्ठानं न तु पाठक्रमादादौ अग्निहोत्रानुष्ठानमिति निर्णीतम्, तथा प्रमाणसामान्यज्ञानमन्तरेण दृष्टादीनां प्रमाणविशेषत्वप्रतीतिर्न स्यादिति प्रयोजनवशात् आदौ प्रमाणसामान्यं व्याख्यातं ननु व्याक्यपौर्वापर्यात् प्रमाणविशेषमभिधाय प्रमाणसामान्यं निरूपितमिति ॥

कारिकामवतारयति। सम्प्रतीत्यादिना। प्रमाणानां ये विशेषाः भेदाः प्रत्यक्षा-

ष्ठत्वात् तदधीनत्वाच्चानुमानादीनां सर्ववादिनामविप्रतिपत्तेश्च, तदेव तावल्लक्षयति—

**प्रतिविषयाध्यवसायो दृष्टं त्रिविधमनुमानमाख्यातम् ।**
**तल्लिङ्गलिङ्गिपूर्वकमाप्तश्रुतिराप्तवचनं तु ॥ ५ ॥**

"प्रतिविषयाध्यवसायो दृष्टम्" इति । अत्र "दृष्टम्" इति लक्ष्यनिर्देशः, परिशिष्टं तु लक्षणम् । समानासमानजातीयव्यवच्छेदो लक्षणार्थः ।

अवयवार्थस्तु—विषिन्वन्ति—विषयिणमनुबध्नन्ति, स्वेन रू-

---

द्यः तेषां यानि लक्षणानि तन्निरूपणावसरे इत्यर्थः । एतेन पूर्वं प्रमाणसामान्यलक्षणजिज्ञासाया प्रमाणविशेषलक्षणजिज्ञासाप्रतिबन्धकीभूतायास्सत्त्वेन तत्सामान्यलक्षणाभिधानानन्तरं तादृशजिज्ञासानिवृत्त्या अवश्यवक्तव्यत्वरूपावसरसंगतिः अविशेषेण सर्वेष्वेव प्रमाणविशेषलक्षणेषु अस्ति इति सूचितम् । अविशेषेण सर्वेष्वेव अवसरसंगतिसत्त्वेन प्रत्यक्षलक्षणस्यैव प्राथमिकाभिधाने बीजमाह । प्रत्यक्षस्येति । ज्येष्ठत्वादिति । उपजीव्यत्वादित्यर्थः । तथा च अनुमानज्ञानं प्रति प्रत्यक्षज्ञानस्य कारणत्वात् प्रत्यक्षज्ञानं च प्रत्यक्षलक्षणाभिधानं विना न सम्भवतीति प्रत्यक्षनिरूपणस्यैव पूर्वं आवश्यकतेति भावः । ज्येष्ठत्वं पूर्वकालवृत्तित्वं तच्च कथं प्रत्यक्षस्य इत्यत आह । तदधीनत्वादिति । तज्जन्यत्वादित्यर्थः । एतच्च 'अथ तत्पूर्वकं त्रिविधमनुमानं पूर्ववत् शेषवत् सामान्यतोऽदृष्टं च' इति न्यायसूत्रे स्पष्टम् । हेत्वन्तरमाह । सर्ववादिनामिति । बहुवादिनामित्यर्थः । तेन 'प्रत्यक्षमप्रमाणं एकदेशग्रहणानुपलब्धेः' इति न्यायसूत्रे प्रत्यक्षप्रामाण्यविप्रतिपत्तेरपि यत्किंचित् वादिनिष्ठत्वेपि न क्षतिः । तन्मतञ्च अतितुच्छत्वेन नात्र उद्भावितं नापि खण्डितमिति ध्येयम् । बहुवादिसम्मतत्वस्य प्राथमिकजिज्ञासानिर्वाहकत्वं च बहुवादिसम्मतस्य सुप्रसिद्धार्थतया बहुधा प्रस्तावो भवति अतः तज्ज्ञानस्य भूयानुपयोगः न तु अप्रसिद्धार्थज्ञानस्येति तज्ज्ञानस्य बह्वायाससाध्यत्वेन प्रथमतः बलवान् द्वेषो भवति इति सूचीकटाहन्यायादिति तेन तत्सामग्र्या वा प्रतिबन्धात् न तादृशार्थे प्रथमतो जिज्ञासा इति भावः ।

दृष्टमितीति । प्रत्यक्षवाचकदृष्टपदप्रयोगेणेत्यर्थः । लक्ष्यस्य प्रत्यक्षस्य, निर्देशः कीर्तनम्, परिशिष्टं अवशिष्टं प्रतिविषयाध्यवसायः इत्यवशिष्टभाग इति यावत् । लक्षणं लक्षणनिर्देशः । लक्षणनिर्देशस्य प्रयोजनमाह । समानेति । समानजातीयेभ्यो अनुमानादिभ्यः, असमानजातीयेभ्यो घटादिभ्यः, व्यवच्छेदः लक्ष्यस्य व्यावर्तनं, लक्षणार्थः लक्षणनिर्देशस्य प्रयोजनम् । एतेन समानासमानजातीयव्यवच्छेदकत्वं इति लक्षणलक्षणमपि सूचितं भवति, सजातीयमात्रव्यवच्छेदके विशेषणेऽतिप्रसङ्गवारणाय असमानेति । एवं विजातीयमात्रव्यवच्छेदकेऽतिव्याप्तिवारणाय समानेति । यथा च प्रत्यक्षलक्षणस्य समानासमानजातीयव्यवच्छेदकत्वं तथा प्रत्यक्षलक्षणावसाने "तदेवं समानासमानेत्यादिग्रन्थे व्यक्तमिति नेहोच्यते विस्तरभयात् ।

लक्षणस्य समानासमानजातीयव्यवच्छेदकत्वं बोधयितुं तद्घटकशब्दार्थमाह । अव-

पेण निरूपणीयं कुर्वन्तीति यावत्। "विषयाः" पृथिव्यादयः सुखादयश्च। अस्मदादीनामविषयाः तन्मात्रलक्षणाः योगिनामूर्ध्वस्रोतसाञ्च विषयाः। विषयं विषयं प्रति वर्तते इति प्रतिविषयम्। वृत्तिश्च सन्निकर्षः। अर्थसन्निकृष्टमिन्द्रियमित्यर्थः। तस्मिन् अध्यवसायः, तदाश्रित इत्यर्थः। अध्यवसायश्च बुद्धिव्यापारो ज्ञानम्, उपात्त

---

यवार्थंस्त्विति। प्रतिविषयाध्यवसाय इतिलक्षणवाक्यघटकपदानामर्थ इत्यर्थः। विसिन्वन्तीति। षिञ् बन्धने इतिधातोर्निष्पन्नस्य विसिन्वन्तीत्यस्य विवरणमाह। विषयिणमनुबन्धन्तीति। विषयिणं अन्तःकरणवृत्तिरूपं। चक्षुःप्रतिबन्धकसंयोगविशेषरूपबन्धनस्य बुद्धिवृत्तौ असम्भवात् आह। स्वेन रूपेणेति। स्वकीयेन आकारेण, निरूपणीयम् निरूपणविषयम् कुर्वन्तीत्यर्थः। के ते विषयाः इत्यत आह। पृथिव्यादय इति। विषयशब्देन तन्मात्रादीनां सूक्ष्माणामपि ग्रहणमस्तीत्याह। अस्मदादीनामिति। तन्मात्रलक्षणाः गन्धतन्मात्रादिस्वरूपाः। तथा च तन्मात्रादिषु अस्मदादिप्रत्यक्षाविषयत्वेपि योगजधर्मजन्ययोगिप्रत्यक्षविषयत्वमस्त्येवेति। एवं विषयपदार्थमुक्त्वा प्रतिविषयपदार्थमाह। विषयं विषयं प्रतीति। तथा च विषयनिरूपितवृत्तितावत् इत्यर्थो लभ्यते, तच्च यदि इन्द्रियादौ स्वस्थानपरित्यागपूर्वकं विषयदेशगमनरूपं तदा अन्धत्वादिप्रसङ्ग इत्यत आह। वृत्तिश्च सन्निकर्ष इति। वर्तते इति पदघटकवृतुधात्वर्थरूपा वृत्तिः एतल्लक्षणे सन्निकर्षरूपैव विवक्षणीयेत्यर्थः। तदेवं प्रतिविषयेतिपदघटकावयवार्थमुक्त्वा समुदायार्थमाह। अर्थेति। अर्थे घटादिरूपे सन्निकृष्टं यदिन्द्रियं तदेव प्रतिविषयेति समुदायार्थः। प्रतिविषयेऽध्यवसायः प्रतिविषयाध्यवसायः इति सप्तमीतत्पुरुषमाश्रित्याह। तस्मिन्नध्यवसाय इति। नचैतादृशेन्द्रियेण अध्यवसायः इत्यर्थकप्रतिविषयेणाध्यवसाय इति तृतीयासमासः कुतो नाश्रित इति वाच्यम्। एतन्मते नानाच्छिद्रघटान्तरवर्तिप्रदीपप्रकाशस्य छिद्रजन्यत्वाभाववत् बुद्धिवृत्तिरूपाध्यवसायस्य इन्द्रियजन्यत्वाभावेनेतादृशसमासासम्भवात्। तदाश्रित इत्यनेन अध्यवसायस्येन्द्रियनिष्ठत्वोक्त्या इन्द्रियधर्मत्वभ्रमो माभूत् इत्यत आह। अध्यवसायश्चेति। बुद्धिव्यापारः बुद्धिपरिणामः, यथा घटान्तरवर्तिदीपस्य घटच्छिद्रैः निर्गम्यमानः प्रकाशः दीपधर्म उच्यते न छिद्रधर्मः एवं छिद्रसदृशैः इन्द्रियैः निर्गम्यमानो अध्यवसायोपि बुद्धिधर्म एवेति भावः।

नन्वेवं अयोग्यपरमाण्वादिसन्निकृष्टेन्द्रियवृत्तिबुद्धिवृत्तेः परमाण्ववच्छेदेनापि प्रत्यक्षप्रमाणत्वं स्यात् इत्यत आह। उपात्तेति। उपात्तविषयाणां स्वस्वयोग्यविषयाणां, विषयसन्निकृष्टानामिति यावत्। तथा च योग्यविषय एव इन्द्रियसन्निकर्षो भवति न तु नैयायिकादिवत् प्रत्यक्षायोग्येपीति अयोग्यपरमाणुसन्निकृष्टेन्द्रियनिष्ठबुद्धिवृत्तेः तत्रासत्त्वेन न परमाण्ववच्छेदेन प्रत्यक्षप्रमाणत्वम्, तत्सन्निकृष्टेन्द्रियनिष्ठबुद्धिवृत्तेरेव तदवच्छेदेन प्रत्यक्षप्रमात्वोपगमात्। न च सन्निकर्षस्य संयोगसंयुक्तसमवायादिरूपस्य परमाण्वादिभिरपि सम्भवे कुतो न इन्द्रियाणां तत्सन्निकृष्टत्वमिति वाच्यम्। एतन्मते हि सन्निकर्षो न संयोगादिरूपः तन्मात्रस्य कारणत्वे परमाण्वादिभिरपि तस्य सत्त्वेन तेषामपि प्रत्यक्षत्वापत्तेः। अतः इन्द्रियाणां विषयाकारेण परिणाम एव सन्निकर्षः, तथा च परमाण्वाद्याकारेण इन्द्रियपरिणामाभावेन न इन्द्रियस्य तत्सन्नि-

**विषयाणामिन्द्रियाणां वृत्तौ सत्यां बुद्धेस्तमोऽभिभवे सति यः सत्त्वसमुद्रेकः सोऽध्यवसाय इति वृत्तिरिति ज्ञानमिति चाऽऽख्या**

कृष्टत्वमिति भावः। न च कार्यमात्रं प्रति तत्कार्यसामग्र्या एव कारणत्वं वाच्यम्। अन्यथा केवलदण्डसत्त्वेऽपि घटोत्पत्त्यापत्तेः, एवं प्रत्यक्षं प्रति महत्त्वस्यापि कारणत्वेन परमाण्वादौ इन्द्रियसन्निकर्षाङ्गीकारेऽपि महत्त्वरूपकारणान्तराभावेन तदापत्तिवारण-सम्भवे इन्द्रियपरिणामरूपइन्द्रियसन्निकर्षाङ्गीकारे प्रमाणाभाव इति वाच्यम्। प्रत्यक्षं प्रति इन्द्रियपरिणामरूपेन्द्रियसन्निकर्षत्वेन कार्यकारणभावे लाघवात् महत्त्वादेः इन्द्रियपरिणामरूपेन्द्रियसन्निकर्षमात्रं प्रत्येव उपयोगितया तस्य प्रत्यक्षे अन्यथासिद्धत्वात्। अत एवोक्तं योगवार्तिके विज्ञानभिक्षुभिः "इन्द्रियाण्येव नाडी-चित्तसंचरणमार्गं तैः संयुज्य ततो गोलकद्वारा बाह्यवस्तुषु उपरक्तस्य चित्तस्य इन्द्रियसाहित्येन अर्थाकारः परिणामो भवति न केवलस्य चित्तस्य शङ्खपैत्याद्याकारतायां नयनादिगतपित्ताद्यन्वयव्यतिरेकाभ्यां अतो रूपादिवृत्तिषु चक्षुरादीनामपि कारणत्वं शास्त्रेषूच्यते इति।

वृत्तौ सत्यां परिणामरूपसन्निकर्षे सति, बुद्धेः त्रिगुणात्मकस्य बुद्धिसत्त्वस्य, तमोऽभिभवे सति तमोरूपावरणाभिभवे सति सूक्ष्मरूपेणावस्थाने सतीति यावत्। एतेन तमसः सत्त्वसमुद्रेकप्रतिबन्धकत्वं सूचितम्, एतच्च 'अन्योन्याभिभवेति' कारिकायां व्यक्तीभविष्यति। सत्त्वसमुद्रेकः सत्त्वगुणस्य आधिक्यं स एव अध्यवसाय इत्यर्थः। नैयायिकादिवत् बुद्धिशब्दस्य न ज्ञानशब्दपर्यायत्वं अपि तु अध्यवसायपर्यायत्वमेव इति सूचयन् तस्य संज्ञान्तरमाह। वृत्तीत्यादिना। इदं वृत्तिरूपज्ञानं तत्प्रमाणं प्रत्यक्षप्रमाकरणमित्यर्थः।

अत्रेदं बोध्यम्, बुद्धेः तमोऽभिभवकालीनसत्त्वसमुद्रेक एव वृत्तिपदार्थः, न तु उपात्तविषयाणामित्यादिघटितः, तेन अनुमानागमवृत्तिषु पूर्वोक्तोपात्तविषयेत्यादिलक्षणस्य अव्याप्तावपि न क्षतिः। तादृशसमुदायस्य प्रत्यक्षवृत्तिमात्रलक्षणत्वात्, अत एवोक्तं इदं तत्प्रमाणमिति।

ननु अन्तःकरणस्य चित्तस्य निरवयवत्वेन अपरिणामित्वात् कथं विषयाकारेण परिणामित्वं तस्य इति चेत् प्रधानस्य निरवयत्वेऽपि परिणामित्ववत् तदुपपत्तेः। चेतनस्यैव अपरिणामित्वव्याप्यत्वात् न तु निरवयवस्य इति। वस्तुतस्तु मनसो व्यक्ततया निरवयवत्वाभावेन परिणामित्वं सम्भवतीति न काचिदनुपपत्तिः। यथा च मनसः सावयवत्वं तथा प्रतिपादितम् हेतुमदनित्यमित्यादिकारिकायां। एतेन अन्तःकरणस्याणुपरिणामत्वे तस्य शरीरबहिःस्थितघटादिदेशगमने प्राणादेः करणवृत्तितया प्राणस्यापि निर्गमनापत्त्या देहपातापत्तिः, तस्य विभुत्वे च अध्यवसायरूपवृत्त्यनुपपत्तिः, विभुत्वस्य निष्क्रियत्वव्याप्यतया तस्य बहिर्निर्गमनासम्भवात्, एवं मध्यमपरिणामित्वे झटिति अतिदूरस्थितविषयग्रहणानुपपत्तिः। इति केषांचित् शङ्कापि निरस्ता। अन्तःकरणस्य मध्यमपरिमाणत्वेऽपि तेज आदिवत् झटिति दूरदेशस्थविषयसम्बन्धसम्भवादिति।

नच बुद्धिवृत्तेः व्यापाराभावेन कथं करणत्वं व्यापारवदसाधारणकारणत्वस्यैव करणत्वादिति चेन्न। फलायोगव्यवच्छिन्नस्यैव एतन्मते करणस्वरूपत्वात्।

ननु फलायोगव्यवच्छिन्नत्वं यदि करणत्वं तदा व्यापारवदसाधारणकारणत्वरू-

यते । इदं तत्त्व प्रमाणम् । अनेन यश्चेतनाशक्तेरनुग्रहस्तत्फलं प्रमा बोधः ।

बुद्धितत्त्वं हि प्राकृतत्वादचेतनमिति तदीयोऽध्यवसायोऽप्य-

पंकरणलक्षणापेक्षया गौरवं । तथाहि फलायोगेन फलाभावेन, व्यवच्छिन्नं शून्यम्, यत्सत्त्वे अव्यवहितोत्तरक्षणे अवश्यं फलोत्पत्तिः तथाभूतं कारणमेव कारणं इति पर्य-वस्यति । तथाच व्यापारवदसाधारणकारणत्वरूपकरणलक्षणापेक्षया गौरवमिति चेन्न । यागादिस्थले यागादेः नष्टत्वेन कालान्तरभाविस्वर्गकारणत्वं न स्यात् तत्र व्यापार वत्त्वसत्त्वेपि स्वर्गरूपफलाव्यवहितपूर्ववृत्तित्वरूपस्वर्गकारणत्वस्याभावात् । अतः करणत्वलक्षणघटकं कारणत्वं न स्वाव्यवहितपूर्ववृत्तित्वरूपं किन्तु स्वाव्यवहितपूर्ववृ-त्ति स्वस्वव्यापारान्यतरकत्वरूपमेवेत्यस्यावश्यं वक्तव्यतया स्वदुक्तकरणलक्षणस्य त-ज्जन्यत्वे सति तज्जन्यजनकत्वरूपव्यापारपदार्थेन असाधारणत्वपदार्थेन पूर्वोक्तकारण त्वपदार्थेन च घटितयाऽतिगौरवात् । अधिकमन्यत्रानुसन्धेयम् । परे तु व्यापारवत्का रणं करणं इतिकरणलक्षणं वर्णयन्तः बुद्धिवृत्तेः चित्सन्निधानमेव व्यापारः अध्यवसा-यस्य चित्सम्बन्ध एव प्रमात्मको बोध इति न तत्र करणलक्षणाव्याप्तिरिति वदन्ति ।

तदेवं प्रत्यक्षप्रमाणं लक्षयित्वा प्रमामाह । अनेति । अनेन विषयाकारेण परि णामवता बुद्धितत्त्वेन, चेतनाशक्तेः चिद्रूपस्य पुरुषस्य, अनुग्रहः सुखादिरूपान्तरविष-यघटादिरूपबाह्यविषयाकारेण परिणतबुद्धिवृत्तिप्रतिबिम्बद्वारा अहं सुखी घट-महं जानामि इत्याकारकोऽभिमानः, तदेव फलं बोध इति प्रमेति चोच्यते। अयं भावः, विषयाकारेण परिणतायां बुद्धिवृत्तौ दर्पणवत्स्वच्छायां चेतनस्य प्रतिबिम्बे सति दर्पणगताः मलिनत्वादयो धर्माः मुखे यथा भासन्ते 'मे मुखं मलिनमिति' एवं बुद्धि गताः घटज्ञानादयोधर्माश्चेतने भासन्ते 'अहं घटं जानामि' इति । स एव प्रमापदार्थः इति । न च भवदभिमतप्रमाया अभिमानरूपायाः अप्रामात्वात् कथं तस्यां प्रमात्वं कथं च तत्करणे प्रामाणत्वमिति चेदत्र केचित्, प्रतिबिम्बरूपेण चेतने बुद्धिवृत्तेः स-त्त्वात् तस्याः प्रमात्वमुपपन्नमिति वदन्ति । परेतु प्रमात्वं द्विविधं लौकिकं शास्त्रीयं च तत्र पूर्वोक्ताभिमानस्य शास्त्रीयप्रमात्वविरहेऽपि लौकिकप्रमात्वमक्षतमेव । नच तथा सति शुक्तौ इदं रजतमित्याकारकबुद्धिवृत्तिप्रतिबिम्बितचेतननिष्ठस्य रजतमहं जाना-मि इत्याकारकाभिमानस्यापि प्रमात्वं स्यात् इति चेत् इष्टमेवैतत्, नहि तत्र रजत-महं जानामि इत्याकारकज्ञानस्याप्रमात्वमपि तु इदं रजतमित्याकारकान्तरकरणवृत्ते-रेवेति न कश्चिद्दोष इत्याहुः ।

ननु अर्थसन्निकृष्टेन्द्रियाश्रितः बुद्धितत्त्वस्य वृत्तिरूपः अध्यवसाय एव प्रमेत्युच्य-ताम् अलं चेतनाशक्तेरनुग्रहरूपेण इत्यत आह । बुद्धितत्त्वं हीति । हि यस्मात्, बुद्धितत्त्वं प्राकृतत्वात् जडप्रकृतिविकारत्वात् अचेतनं अतः तदीयोऽध्यवसायोऽपि अचेतन एव । तथाच बुद्धितत्त्वं अचेतनं अचेतनप्रकृतिकार्यत्वात् यद्यदचेतनकार्यं तत्त-दचेतनं यथा अचेतनमृदादिकार्यो घटः अचेतनः, एवं अध्यवसायः अचेतनः अचेतनबु-द्धितत्त्वकार्यत्वात् इतिरीत्या अध्यवसायस्यापि अचेतनत्वम् सिद्ध्यति । सुखादी-नामपि चेतनसम्बन्धमन्तरेण प्रकाशासम्भवप्रदर्शनाय तेषामप्यचेतनत्वं साधयति ।

चेतनः, घटादिवत् । एवं बुद्धितत्त्वस्य सुखादयोऽपि परिणामभेदा अचेतनाः । पुरुषस्तु सुखाद्यननुषङ्गी चेतनः । सोऽयं बुद्धितत्त्ववर्तिना ज्ञानसुखादिना तत्प्रतिबिम्बितस्तच्छायापत्त्या ज्ञानसुखादिमानिव भवतीति चेतनोऽनुगृह्यते । चितिच्छायापत्त्याऽचेतनाऽपि बुद्धिस्तदध्यवसायोऽप्यचेतनश्चेतनवद्भवतीति । तथा च वक्ष्यति—

तस्मात्तत्संयोगादचेतनं चेतनावदिव लिङ्गम् ।

---

एवेति । उक्तयुक्तेरित्यर्थः । बुद्धितत्त्वस्येति परिणामभेदा इत्यन्वितम् । एतेन सुखादीनामात्मगुणत्वं नैयायिकाद्यभिमतं निराकृतं वेदितव्यम् । कस्तर्हि चेतन इत्यत्राह । पुरुषस्त्विति । तुशब्देन बुद्धितत्त्वाद्विलक्षणत्वमस्य द्योतयति । किं तद्वैलक्षण्यमित्याह . सुखाद्यननुषङ्गीति । सुखाद्यननुषङ्गित्वादेव तस्य चेतनत्वमपि सिद्ध्यतीत्याह । चेतन इति । यत्र यत्राचेतनत्वं तत्र तत्र सुखाद्यनुषङ्गित्वं यथा घटादौ इति व्याप्त्या पुरुषे सुखाद्यनुषङ्गित्वं व्यावर्तयत् अचेतनत्वमपि व्यावर्तयतीत्यर्थः । ननु चेतनोऽहं सुखी जानामि इत्यादिप्रत्यये चैतन्यसामानाधिकरण्येन ज्ञानसुखादेः पुरुषे अनुभूयमानत्वेन कुतस्तस्य सुखाद्यननुषङ्गित्वमिति चेत्, 'असङ्गो ह्ययं पुरुष' इत्यादिश्रुत्या तस्य ज्ञानसुखाद्यनाधारत्वसिद्धेः । ननु कथं तर्हि चेतनोऽहं सुखी दुःखी इत्यादिप्रतीतिरुपपद्यते, न ह्यन्यदीयसुखदुःखादिना अन्यः सुखादिमान् भवति इत्यत आह । सोयमिति । सोयं पुरुषः, तत्प्रतिबिम्बितः तस्मिन् बुद्धितत्त्वे प्रतिफलितः सन् तच्छायापत्त्या बुद्धितत्त्वतादात्म्यापत्त्या, बुद्धितत्त्वेन भेदाग्रहादिति यावत् । बुद्धितत्त्ववर्तिना ज्ञानसुखादिना ज्ञानसुखादिमान् भवतीत्यन्वयः । तथाच दर्पणमलिम्ना मुखे मालिन्याभिमानवत् आत्मनि ज्ञानाद्यभिमानोपि सम्भवत्येवेति भावः । अयमेव च पुरुषबुद्ध्योर्भेदाग्रहः अस्मितापदेन शास्त्रेषु उच्यते, तथाहि 'दृग्दर्शनशक्त्योरेकतेवास्मिता' इति योगसूत्रम् । तथाच प्रमारूपं फलमपि बुद्धावेव जायते नात्मनि तस्य असङ्गत्वेन प्रमारूपफलाधारत्वासम्भवात् । नच तथा सति कथं तस्य पौरुषेयबोधत्वमिति वाच्यम् । पुरुषबुद्ध्योरभेदाग्रहादेवेति गृहाण ।

न केवलं बुद्धिच्छायापत्त्या ज्ञानसुखाद्यननुषङ्गिण आत्मनः एव ज्ञानसुखादिमत्त्वं अपि तु अचेतनाया बुद्धेरपि चेतनपुरुषभेदाग्रहात् चेतनत्वमपि भवतीत्याह । चितिच्छायापत्त्या इति । चेतनपुरुषप्रतिबिम्बाश्रयतया इत्यर्थः । विज्ञानभिक्षवस्तु प्रमाख्यं फलं न बुद्धौ उत्पद्यते तथा सति तस्य पौरुषेयत्वानुपपत्तेः, प्रतिबिम्बस्य असत्यतया अर्थभानानुपपत्तेश्च, प्रतिबिम्बस्य प्रकाशक्रियाकारितायाः कुत्राप्यदर्शनात्, अतः आत्मन्येव प्रमारूपं फलं जन्यते । तथाहि आदौ इन्द्रियसन्निकर्षादिना अर्थाकारा बुद्धिवृत्तिर्जायते अनन्तरं तादृश्या बुद्धिवृत्तेः चिदात्मके पुरुषे प्रतिबिम्बं भवति इति रीत्या तादृशबुद्धिवृत्तिप्रतिबिम्बरूपं फलं आत्मन्येव जायते इति वदन्ति । अस्य च युक्तायुक्तत्वे सुधीभिरवावगन्तव्ये इत्यलमत्राधिकेन पूर्वमेवतद्विषये वीशदीकृतमस्माभिः ।

विज्ञानभिक्षवनुयायिनस्तु चिति इति सप्तम्यन्तं वदन्तः चिद्रूपे पुरुषे या छाया बुद्धेः प्रतिबिम्बः, तदापत्त्या तदविवेकाग्रहात्, दर्पणमालिन्ये मुख इव बुद्धिवृत्तौ पुरुषनिष्ठं चैतन्यं भासत इत्यर्थमाहुः । उक्तार्थे प्रमाणमाह । तथाचेति । कारिकार्थस्तु स्वय-

गुणकर्तृत्वेऽपि तथा कर्तेव भवत्युदासीनः ॥ (२१ का०) इति।

अत्राऽध्यवसायग्रहणेन संशयं व्यवच्छिनत्ति, संशयस्याऽनवस्थितग्रहणत्वेनानिश्चितरूपत्वात्। निश्चयोऽध्यवसाय इति चानर्थान्तरम्। विषयग्रहणेन चासद्विषयं विपर्ययमपाकरोति। प्रतिग्रहणेन

---

मेवाग्रे ग्रन्थकृता वक्ष्यते इति तत एवावगन्तव्यः। विशेषोपि तत्रव प्रतिपादयिष्यते।

इदानीं प्रतिविषयेत्यादिप्रत्यक्षलक्षणघटकीभूतानां पदानां व्यावृत्ति दर्शयन् अस्य लक्षणस्य समानासमानजातीयव्यवच्छेदकत्वं स्पष्टयति। अत्रेत्यादिना। अत्र एतल्लक्षणे, अध्यवसायग्रहणेन अध्यवसायपदोपादानेन, संशयं एकधर्मिकविरुद्धनानाधर्मप्रकारकज्ञानरूपं, व्यवच्छिनत्ति व्यावर्तयतीत्यर्थः। अध्यवसायपदेन कथं तस्य व्यावृत्तिरित्यत आह। संशयस्येत्यादिना। अनवस्थिग्रहणत्वेन एकधर्मिकविरुद्धनानाधर्मप्रकारकज्ञानत्वेन, अनिश्चितरूपत्वात् निश्चयभिन्नत्वात्। कुत्रचित् अनवस्थितग्रहणेन इति पाठान्तरम् तत्र अनवस्थितग्रहणेन एकधर्मिकनानाधर्मप्रकाशनेनेत्यर्थो बोध्यः। ननु तस्य निश्चयभिन्नत्वेऽपि अध्यवसायपदोपादानेन कथं तद्वारणमित्यत आह। निश्चयोऽध्यवासय इति चानर्थान्तरमिति। अन्यो अर्थो अस्येत्यर्थान्तरं न अर्थान्तरं अनर्थान्तरं अभिन्नार्थकमिति यावत्। तथाच निश्चयपदाध्यवसायपदयोः पर्यायत्वेन अध्यवसायपदस्य निश्चयार्थकतया तेन पदेन निश्चयभिन्नस्य संशयस्य वारणं भवत्येवेति भावः। एवं अध्यवसायपदव्यावर्त्यमुक्त्वा विषयपदव्यावर्त्यमाह। विषयग्रहणेनेति। असद्विषयं न विद्यते सन् विषयो यस्य तादृशं, विपर्ययं मिथ्याज्ञानं, अपाकरोति व्यावर्तयतीत्यर्थः।

नच शुक्तौ इदं रजतमित्याकारकस्य प्रत्यक्षस्य आपणस्थरजतविषयकतया आपणस्थरजतस्य च सद्रूपतया कथं विपर्ययस्य असद्विषयकत्वमिति चेदुच्यते। शुक्तौ इदं रजतमित्याकारकप्रत्यक्षस्य न आपणस्थरजतविषयकत्वं आपणस्थरजतेन सह चक्षुरादिसन्निकर्षाभावात् तादृशज्ञानस्य प्रत्यक्षत्वानुपपत्तेः। 'सम्बद्धं वर्तमाने च गृह्यते चक्षुरादिना' इति नियमात्। किंतु प्रातिभासिकरजतविषयकत्वमेव तथाच प्रातिभासिकरजतस्य असद्रूपतया तादृशज्ञानस्यासद्विषयकत्वं निराबाधमेव। नच प्रातिभासिकरजतस्य कुतो न सद्रूपत्वमिति वाच्यम्। व्यवहारकाले अबाधितत्वस्यैव सद्रूपतया प्रातिभासिकरजतस्य च व्यवहारकाले बाधितत्वेन न तस्य सद्रूपत्वमिति। नच आपणस्थरजतेन समं ज्ञानलक्षणारूपसन्निकर्षसत्त्वात् शुक्तौ इदं रजतमित्याकारकज्ञानस्य आपणस्थरजतविषयकत्वाङ्गीकारे बाधकाभावात् प्रातिभासिकरजताङ्गीकारे विपर्ययस्य च असद्विषयकत्वाङ्गीकारे प्रमाणाभाव इति वाच्यम्। ज्ञानलक्षणासन्निकर्षस्य प्रत्यक्षहेतुत्वे प्रमाणाभावात्। अन्यथा पर्वतो वह्निमानित्याकारकानुमितेरपि प्रत्यक्षत्वापत्तेः, तस्या वह्निरूपविषयेण वह्निज्ञानरूपसन्निकर्षस्य पूर्वं सत्त्वात। नच प्रातिभासिकरजताङ्गीकारे तेन समं सन्निकर्षसत्त्वेपि तादृशरजतं प्रति रजतज्ञानस्य कारणत्वमावश्यकमेवेति रजतप्रत्यक्षं प्रत्येव तज्ज्ञानस्य हेतुत्वमास्तां अनिर्वचनीयरजतानङ्गीकाररूपलाघवसत्त्वादिति वाच्यम्। रजतोत्पत्तिं प्रति रजतज्ञानत्वेन हेतुतायाः रजतप्रत्यक्षं प्रति रजतज्ञानत्वेन हेतुत्वापेक्षया गुरुतया अनङ्गीकारात् फलमुखगौरवस्य च अदोषत्वात्। नच

चेन्द्रियार्थसन्निकर्षसूचनादनुमानस्मृत्यादयश्च पराकृता भवन्ति।

तदेवं समानासमानजातीयव्यवच्छेदकत्वात् "प्रतिविषयाध्यवसायः" इति दृष्टस्य सम्पूर्णं लक्षणम्। तन्त्रान्तरेषु लक्षणान्तराणि तैर्थिकानां न दूषितानि, विस्तरभयादिति।

'नाऽनुमानं प्रमाणम्'इति वदता लौकायतिकेनाऽप्रतिपन्नः

---

सामान्यतः रजतोत्पत्तिं प्रति रजतज्ञानत्वेन हेतुत्वं न सम्भवति व्यावहारिकरजतोत्पत्तौ व्यभिचारादिति चेत्, रजतप्रत्यक्षं प्रत्यपि रजतज्ञानत्वेन न हेतुत्वं लौकिकरजतप्रत्यक्षस्थले व्यभिचारादिति उभयोरपि समानं वैजात्यादिप्रवेशेन समानसमाधानं च, तस्मात् विपर्ययस्य असद्विषयकत्वात् तद्वारणं सम्भवत्येवेति ध्येयम्। परे तु असद्विषयमित्यस्य न अनिर्वचनीयविषयमित्यर्थः, अनिर्वचनीयरजतादेरस्माभिरनभ्युपगमात्। किन्तु स्वविशेष्ये असन् प्रकारतावच्छेदकसम्बन्धेन अवृत्तिः विषयः प्रकारो यस्य तथाभूतं विपर्ययं, अपाकरोतीत्यर्थः। तथाच विषयपदेन तद्वति तत्प्रकारकत्वं विवक्षितं शुक्तौ इदं रजतमित्याकारकज्ञानस्य रजतत्ववति रजतत्वप्रकारकत्वाभावान्न तत्र प्रत्यक्षलक्षणातिव्याप्तिः। एवं शुक्तौ इयं शुक्तिर्नवेत्यादिसंशयस्य शुक्तित्ववति शुक्तित्वप्रकारकतया तत्रातिव्याप्तिवारणाय अध्यवसायपदमपि सार्थकमिति वदन्ति। एवं च पूर्वं ननु शुक्तौ इदं रजतमित्याकारकज्ञानस्य आपणस्थरजतविषयकतया अनधिगतविषयकत्वाभावेन अतिव्याप्तिवारणसम्भवे अविपरीतत्वविशेषणं व्यर्थमिति यदस्माभिराशङ्कितं तदेतन्मतानुसारेणैव पूर्वमते तु सहजत एव तत्रातिव्याप्तिरिति तद्वारणाय अविपरीतत्वविशेषणसार्थक्यं बोध्यम्।

विषयपदव्यावृत्तिमुक्त्वा प्रतिपदस्य तामाह। प्रतिग्रहणेन चेति। नच विषयं विषयं प्रति वर्तते इति प्रतिविषयं इति समासेन प्रतिपदस्य इन्द्रियार्थसन्निकर्षार्थकत्वाभावात् कथं इन्द्रियार्थसन्निकर्षार्थकत्वं तस्य इत्यत आह। सूचनादिति। वर्तते इतिपदघटकवृतुधात्वर्थस्य सन्निकर्षार्थकत्वात् प्रतिविषयं इति समासघटकप्रतिपदस्य इन्द्रियार्थसन्निकृष्टे लाक्षणिकतया ततः सहजत एव तत्सूचनमिति भावः। अनुमानस्मृत्यादय इति। अनुमानस्य परामर्शादिजन्यत्वेन इन्द्रियार्थसन्निकर्षजन्यत्वाभावात न प्रत्यक्षप्रमात्वं एवं स्मृतेरपि, आदिना शाब्दबोधपरिग्रहः, तस्यापि इन्द्रियसन्निकर्षाजन्यत्वेन प्रत्यक्षत्वाभावादिति।

सम्प्रति पूर्वोक्तस्य समानासमानजातीयेत्यादिलक्षणलक्षणस्य प्रतिविषयाध्यवसाय इति प्रत्यक्षलक्षणे समन्वयं कुर्वन् उपसंहरति। तदेवमित्यादिना। समानजातीयाः अनुमित्यादयः, असमानजातीयाः स्मृत्यादयः, तेषां व्यवच्छेदकत्वात् व्यावर्तकत्वात्, सम्पूर्णं अव्याप्त्यतिव्याप्त्यादिदोषरहितं लक्षणमित्यर्थः।

ननु शास्त्रान्तरोक्तानां 'प्रत्यक्षं कल्पनापोढमभ्रान्तम्' 'प्रत्यक्षप्रमा तु चैतन्यमेव' इत्यादिलक्षणानां अदुष्टतया किमिति तान्येव लक्षणानि अत्र नोक्तानि इत्यत आह। तन्त्रान्तरेष्विति। तथाच तेषां लक्षणानां दुष्टतया एतद्ग्रन्थे अकथनम्। ननु तेषां दुष्टत्वे अत्र दोषोद्भावनं कुतो न कृतमित्यत आह। विस्तरभयादिति।

सम्प्रति अनुमानलक्षणपरं कारिकांशमवतारयितुं अनुमानप्रामाण्यानङ्गीकर्तृचार्वाकमतखण्डनपूर्वकं अनुमानप्रामाण्यं व्यवस्थापयति। नानुमानमित्यादिना। लोके

सन्दिग्धो विपर्यस्तो वा पुरुषः कथं प्रतिपद्येत ? न च पुरुषा- न्तरगता अज्ञानसन्देहविपर्ययाः शक्या अर्वाग्दृशा प्रत्यक्षेण प्रति- पत्तुम्। नाऽपि प्रमाणान्तरेण, अनभ्युपगमात्। अनवधृताज्ञानसंश- यविपर्ययस्तु यं कञ्चन पुरुषं प्रति प्रवर्तमानोऽनवधेयवचनतया प्रेक्षावद्भिरुन्मत्तवदुपेक्ष्येत। तदनेनाऽज्ञानादयः परपुरुषवर्तिनोऽभि

---

आयतमिव विस्तीर्णमिव विस्तीर्णत्वं च बहुजनप्रसिद्धत्वं, इति लोकायतं प्रत्यक्षप्रमाणं, तस्यैव प्राधान्येन प्रतिपादकं शास्त्रमपि लोकायतपदार्थः तथाच लोकायतम् चार्वाक- शास्त्रम्, तद्वेत्तीति लौकायतिकः चार्वाकमतानुसारी तेनेत्यर्थः। अप्रतिपन्नः अज्ञानवान् सन्दिग्धः, सन्देहवान्, विपर्यस्तः विपरीतज्ञानवान्, पुरुषः कथं प्रतिपद्येत परपुरुषनि ष्ठाज्ञानसंशयविपर्ययं कथं ज्ञायेतेत्यर्थः। नच तैरभ्युपगतेन प्रत्यक्षप्रमाणेनैव ज्ञायेत इत्यत, आह। नचेति। पुरुषान्तरगता अन्यपुरुषवृत्तयः, एतेन तेषां मानसप्रत्यक्षविषयत्वं निराकृतम्। मानसप्रत्यक्षं प्रति स्वात्मत्वस्वात्मसमवेतत्वस्वात्मसमवेतसमवेतत्वा- न्यतमस्य प्रयोजकतायाः अवश्यमभ्युपगन्तव्यतया परपुरुषवर्त्यज्ञानादौ तेषामन्यत- मस्याप्यभावेन मानसप्रत्यक्षविषयत्वासम्भवात्। नच परपुरुषवर्त्तिरूपादीनां चाक्षुषा- दिप्रत्यक्षमिव परपुरुषवर्तिनामप्यज्ञानादीनां चाक्षुषप्रत्यक्षं स्यादित्याशङ्कायामाह। अज्ञानादय इति। तथाच अज्ञानादिषु रूपाद्यभावेन तेषां चाक्षुषादिप्रत्यक्षविषयत्व- मपि न सम्भवतीति भावः। ननु रूपादौ रूपादेरभावेऽपि यथा तेषां चाक्षुषप्रत्यक्षं तथा अज्ञानादौ समवायेन रूपादेरभावेपि शरीरातिरिक्तात्मानङ्गीकर्तृचार्वाकमते अज्ञानादेः शरीरनिष्ठतया तेषु स्वसमवायिसमवेतत्वसम्बन्धेन रूपादेः सत्त्वेन चाक्षुषप्रत्यक्षवि- षयत्वमुपपद्यत एवेति वाच्यम्। रसादौ स्वसमवायिसमवेतत्वसम्बन्धेन रूपस्य स- त्त्वेपि तस्य चाक्षुषप्रत्यक्षायोग्यत्वं यथाङ्गीक्रियते, तद्वदेव अज्ञानादेरपि चाक्षुषा- दिप्रत्यक्षायोग्यत्वमेव। अन्यथा चक्षुःसंयोगसत्त्वे अयं अज्ञानवान् न वा सन्दिहानो न वा इति संशयानुपपत्तेः। नहि आलोकसंयोगोद्भूतरूपचक्षुःसंयोगादिसत्त्वे अयं रूप- वान्नवेति कश्चित्सन्दिग्धे। तस्मात्तेषां चाक्षुषादिप्रत्यक्षायोग्यतया न चाक्षुषादिप्रत्य- क्षविषयत्वमिति भावः। ननु योगेन परपुरुषनिष्ठाज्ञानादिकं ज्ञायेत इत्यत आह। अ- र्वाग्दृशेति। तथाच चार्वाकस्य योगजधर्मोत्पत्तिरेव न भवितुमर्हति योगस्य शब्दप्र- माणमात्रगम्यत्वेन तेन तत्प्रमाणानङ्गीकारेण तस्य तदनुष्ठानप्रवृत्त्यनुपपत्तेरिति भा- वः। ननु मा भूत्प्रत्यक्षेण ज्ञानं परपुरुषवचनेनैव तदीयमज्ञानं ज्ञास्यति इत्याशङ्काया- माह। नापीति। प्रमाणान्तरेणेति। प्रत्यक्षातिरिक्तप्रमाणेनेत्यर्थः। प्रतिपत्तुं शक्या इति पूर्वोक्तमनुषज्यते। अत्रैव हेतुमाह। अनभ्युपगमादिति। तथाच चार्वाकेण प्र- त्यक्षातिरिक्तप्रमाणानङ्गीकारात्परपुरुषवचनस्य च प्रत्यक्षप्रमाणत्वाभावेन न तेनाज्ञा- नादिप्रतिपत्तिर्भविष्यतीत्यर्थः। परपुरुषवर्त्यज्ञानादिकमपरिज्ञायैव परपुरुषबोधनाय नानुमानं प्रमाणमिति वचनं वदति चेत्स उन्मत्तवदुपेक्ष्येतेत्याह। अनवधृतेत्यादिना। अनवधृताः अज्ञाताः अज्ञानसंशयविपर्ययाः येन एवंभूत इत्यर्थः। ननु कथमेतावता अनुमानप्रामाण्यसिद्धिः इत्यत आह। तदनेनेति। यतः परपुरुषवर्त्यज्ञानादिकं प्र- त्यक्षागोचरं तस्मादनेन लौकायतिकेन अभिप्रायभेदात् अभिप्रायविशेषात्, अनु- मातव्या इति। अयं वादी अस्मिन्नर्थेऽज्ञानवान् विलक्षणचेष्टावत्त्वात् एवं सन्देहविप-

प्रायभेदाद्वचनभेदाद्वा लिङ्गादनुमातव्याः, इत्यकामेनाऽप्यनुमानं प्रमाणमभ्युपेयम् ।

तत्र प्रत्यक्षकार्यत्वादनुमानं प्रत्यक्षानन्तरं लक्षणीयम् । तत्राऽपि सामान्यलक्षणपूर्वकत्वाद्विशेषलक्षणस्येत्यनुमानसामान्यं तावल्लक्षयति—"तल्लिङ्गलिङ्गिपूर्वकं" इति । लिङ्गम्—व्याप्यम् । लिङ्गि—व्यापकम् । शङ्कितसमारोपितोपाधिनिराकरणेन च वस्तुस्व-

र्थासससाधनेपि चेष्टाविशेप एव हेतुः । वचनभेदादिति । वाक्यविशेपादित्यर्थः । अयं वादी अस्मिन्नर्थे अज्ञानवान् नाहं जाने इत्यादिवाक्यप्रयोक्तृत्वादित्यनुमानेन परकीयमज्ञानादिकमनुमातव्यं । तथाच अनुमानादिना परकीयाज्ञानादिज्ञाने सति नानुमानं प्रमाणम् इत्यादितदीयवाक्यं न प्रेक्षवतामुपेक्षाविपयं स्यादिति अकामेनापि अनुमानप्रमाण्याङ्गीकारेऽनिच्छेनापि, अभ्युपेयं अङ्गीकार्यमित्यर्थः ।

तदेवं अनुमानप्रामाण्यं व्यवस्थाप्यानुमानलक्षणपरं कारिकांशमवतारयति । तत्रेत्यादिना । तत्र अनुमानप्रामाण्यस्यावश्यकत्वे सति, प्रत्यक्षानन्तरं अनुमानं निरूपणीयमित्यर्थः । तत्र हेतुमाह । प्रत्यक्षकार्यत्वादिति । पञ्चम्यर्थः ज्ञानजन्यजिज्ञासाधीनत्वं तस्य निरूपणपदार्थेऽभिधानेऽन्वयः । एतेनानुमानाभिधानप्रयोजकजिज्ञासाजनकज्ञानविपयत्वरूपसङ्गतित्वं प्रत्यक्षकार्यत्वे बोधितम् । यद्यपि प्रत्यक्षकार्यत्वं शाब्दबोधेप्यस्ति, तथापि शाब्दबोधापेक्षयाऽनुमानस्य बहुवादिसम्मतत्वेन तस्यैव प्रथमं निरूपणमावश्यकमिति पूर्वमेवाभिहितमस्माभिः । तत्रापि लक्षणद्वारा निरूपणीयेपि । सामान्यलक्षणपूर्वकत्वादिति । एतदर्थस्तु अस्माभिः प्रमाणसामान्यलक्षणावसर एवोक्त इति तत एवावगन्तव्यः ।

लिङ्गलिङ्गिपूर्वकमिति । अनुमानलक्षणं विवृणोति । लिङ्गं व्याप्यमित्यादिना । लिङ्ग्यते ज्ञायते प्रत्यक्षाविपयो अर्थो येन तल्लिङ्गं, व्याप्येन व्यापकस्य ज्ञानात् । निर्गलितार्थमाह । व्याप्यमिति । लिङ्गिपदार्थमाह । व्यापकमिति । व्याप्यव्यापकयोः व्याप्यलक्षणमाह । शङ्कितेति । व्याप्यो नाम व्याप्त्याश्रयः व्याप्तिश्च साध्येन सह हेतोः सम्बन्धविशेपः स च द्विविधः स्वाभाविकः औपाधिकश्च, तत्र यो निरुपाधिकः सम्बन्धविशेपः स एव व्याप्तिपदार्थः, सोपाधिकस्तु व्याप्यत्वासिद्ध इत्युच्यते, उपाधिस्तु साध्यत्वाभिमतव्यापकत्वे सति साधनत्वाभिमताव्यापकत्वं साध्याधिकरणवृत्त्यत्यन्ताभावाप्रतियोगित्वे सति साधनाधिकरणवृत्त्यत्यन्ताभावप्रतियोगित्वमिति यावत् । तथाहि धूमवान् वह्नेरित्यत्रार्द्रेन्धनसंयोग उपाधिरित्युच्यते । तत्र आर्द्रेन्धनसंयोगे धूमाधिकरणवृत्त्यन्ताभावाप्रतियोगित्वस्य वह्न्यधिकरणायोगोलकवृत्त्यत्यन्ताभावप्रतियोगित्वस्य च सत्त्वात् । एवं धूमवान् वह्नेरित्यत्र वह्नौ धूमस्य सम्बन्धः औपाधिक इत्युच्यते, यतः उपाधिर्नाम उप स्वसमीपवर्तिनि स्वधर्मं आदधाति इत्युपाधिः यथा जपाकुसुमं स्वसमीपवर्त्तिनि स्फटिके स्वधर्मं लौहित्यं संक्रामयति इत्युपाधिपदवाच्यम् एवं स्फटिके भासमानं यत् लौहित्यं तदौपाधिकमुच्यते कुसुमे तु स्वाभाविकं तथैव सोपाधिकधूमसाध्यकवह्नौ धूमनिरूपितव्याप्यत्वं वह्नौ नास्ति अपि तु आर्द्रेन्धनसयोगे वह्नौ तु औपाधिकमेव तथाच धूमनिरूपिता व्याप्तिः आर्द्रेन्धनसंयोग एवास्ति वह्नौ तद्भ्रम एव । स चोपाधिः द्विविधः सन्दिग्धो निश्चितश्च, यत्र सा-

भावप्रतिबद्धं व्याप्यम्, येन प्रतिबद्धं तद्व्यापकम्। लिङ्गलिङ्गिग्रहणे-न विषयवाचिना विषयिणं प्रत्ययमुपलक्षयति। 'धूमादिर्व्याप्यो वह्न्यादिर्व्यापकः" इति यः प्रत्ययस्तत्पूर्वकम्। लिङ्गिग्रहणं चाऽऽव-र्तनीयम्। तेन च लिङ्गमस्याऽस्तीति पक्षधर्मताज्ञानमपि दर्शितं भवति। तत् 'व्याप्यव्यापकभावपक्षधर्मताज्ञानपूर्वकमनुमानम्'इत्य-नुमानसामान्यं लक्षितम्।

---

व्यव्यापकत्वसाधनाव्यापकत्वयोः संशयः तत्र सन्दिग्धोपाधिः, स च व्यभिचारसंशा-यकः। यथा स श्यामो मित्रातनयत्वादित्यत्र शाकपाकजन्यत्वं संदिग्धोपाधिरित्यु-च्यते,तत्र साध्यव्यापकत्वस्य संदिग्धत्वात्। श्यामे मित्रातनये शाकपाकजन्यत्वस्य प्रत्य-क्षाभावेन संदिग्धत्वादित्यर्थः। एवं यत्र साध्यव्यापकत्वसाधनाव्यापकत्वयोः निश्चयः स निश्चितोपाधिः, यथा धूमवान् वह्नेरित्यत्र आर्द्रेन्धनसंयोगः तत्र साध्यव्यापकत्वस्य साधनाव्यापकत्वस्य च प्रत्यक्षेणैव निश्चयात। अयं व्यभिचारनिश्चायकः एवं च उपाधेः निश्चयेन व्यभिचारनिश्चयस्य संशयेन तत्संशयस्य जननात् व्याप्तिनिश्चयो न स्यादेव इति तयोर्द्वयोर्निराकरणमावश्यकमित्याह। शङ्कितसमारोपितोपाधिनिराकर-णेनेति। उभयोर्निराकरणं अनुकूलतर्कादिभ्यो ज्ञेयम्। वस्तुस्वभावप्रतिबद्धमि-ति। स्वाभाविकाविनाभावरूपसम्बन्धवदित्यर्थः। व्याप्यलक्षणमुक्त्वा व्यापकल-क्षणमाह। येनेति। तृतीयार्थो निरूपितत्वं, तस्य च प्रतिबद्धपदार्थैकदेशे अविनाभा-वरूपसम्बन्धेऽन्वयः। तथाच यन्निरूपिताविनाभाववद्धूमादिकं तत् व्यापकमित्यर्थः।

धूमवह्न्यादिरूपव्याप्यव्यापकयोः सर्वदैव सत्त्वात् सर्वदैवानुमितिः स्यात् अतो अनुमि-तिं प्रति न लिङ्गिनः नापि लिङ्गस्य कारणत्वं अपि तु तयोर्ज्ञानस्यैव इत्यभिप्रायेणाह। लिङ्गलिङ्गिग्रहणेनेति। गृह्यतेऽनेनेति व्युत्पत्त्या लिङ्गलिङ्गिशब्देनेत्यर्थः। विषयवाचिना व्याप्यधूमव्यापकवह्न्यादिबोधकेनेत्यर्थः। विषयिणं विषयिरूपं, प्रत्ययं ज्ञानं, उपलक्षयति लक्षणया बोधयति। तथाच गङ्गायां घोष इत्यादौ यथा गङ्गापदार्थस्य प्रवाहे तात्पर्या-नुपपत्त्या प्रवाहसम्बद्धतीरादौ लक्षणा, एवमेवात्र अनुमित्यात्मकज्ञाने लिङ्गलिङ्गिपदा-र्थीभूतव्याप्यव्यापकपूर्वकत्वस्य तात्पर्यानुपपत्त्या लिङ्गलिङ्गिपदार्थसम्बद्धतज्ज्ञानरूपार्थे लक्षणा। तथाच लिङ्गलिङ्गिपूर्वकमित्यस्य लिङ्गलिङ्गिज्ञानपूर्वकमित्यर्थः। लिङ्गलिङ्गि-ज्ञानाकारमाह। धूमादिर्व्याप्य इति यः प्रत्यय इति। पक्षधर्मताज्ञानासत्त्वे केवलव्या-प्यव्यापकभावज्ञानादनुमित्यनुदयेन कथमेतावन्मात्रस्यानुमितिलक्षणत्वमित्यत आ-ह। लिङ्गिग्रहणं चेति। तथाच लिङ्गि च लिङ्गि च लिङ्गिनी लिङ्गं च लिङ्गिनी च लिङ्गलिङ्गिनी लिङ्गलिङ्गिनी पूर्वं यस्य तत् लिङ्गलिङ्गिपूर्वकमिति समासाश्रयणेन लिङ्गलिङ्गिलिङ्गिजन्यमित्यायातं तत्र च द्वितीयलिङ्गिपदार्थमाह। लिङ्गमस्यास्ती-ति। तथाच अत्रापि लिङ्गिपदस्य पक्षविशेष्यकलिङ्गज्ञाने लक्षणा एवं च पक्षविशे-ष्यकलिङ्गप्रकारकज्ञानलाभः। फलितार्थमाह। तत् इति। यस्मात् लिङ्गलिङ्गिपद-स्य तज्ज्ञानलाक्षणिकत्वे लिङ्गिपदस्य च आवर्तनीयत्वं तस्मात् इत्यर्थः। व्याप्य-व्यापकभावस्य पक्षधर्मतायाश्च यज्ज्ञानं तत्पूर्वकमित्यर्थः। एतेन एतन्मते अनुमितिं प्र-ति ज्ञानद्वयत्वेनैव कारणता न तु विशिष्टज्ञानत्वेन इति फलितम्। परे तु व्याप्यव्या-पकभावात् व्याप्यव्यापकभावज्ञानात्, यत्पक्षधर्मताज्ञानं व्याप्यस्य पक्षवृत्तित्वज्ञा-

अनुमानविशेषान् तन्त्रान्तरलाक्षितान् अभिमतान् स्मारयति--"त्रिविधमनुमानमाख्यातम्" इति। तत् सामान्यतो लाक्षितमनुमानं विशेषतस्त्रिविधं, पूर्ववत्, शेषवत्, सामान्यतोदृष्टञ्चेति।

तत्र प्रथमं तावत् द्विविधम्–वीतमवीतं च। अन्वयमुखेन प्रवर्तमानं विधायकं वीतम्, व्यतिरेकमुखेन प्रवर्तमानं निषेधकमवीतम्।

तत्रावीतं शेषवत्। शिष्यते परिशिष्यते इति शेषः, स एव विषयतया यस्याऽस्त्यनुमानज्ञानस्य तच्छेषवत्। यदाहुः—"प्रसक्तप्रतिषेधे अन्यत्राप्रसङ्गात् शिष्यमाणे सम्प्रत्ययः परिशेषः" इति

---

नं, तत्पूर्वकमित्यर्थः। तथा च एतन्मते व्याप्यस्य पक्षवृत्तित्वज्ञानरूपपरामर्शस्यैव अनुमितिं प्रति कारणत्वमिति वदन्ति।

तदेवं अनुमानसामान्यं लक्षयित्वा तद्विशेषान्वक्तुं प्रवृत्तं त्रिविधमित्यादिकारिकांशमवतारयति। अनुमानविशेषानिति। तन्त्रान्तरेति। न्यायशास्त्रे 'अथ तत्पूर्वकं त्रिविधमनुमानं पूर्ववत् शेषवत् सामान्यतो दृष्टं च' इति सूत्रे कथितानित्यर्थः। अभिमतानिति। तथा च सूत्रोक्तानुमानविभागे एतच्छास्त्रकृतामपि विरोधो नास्तीति भावः। 'तल्लिङ्गलिङ्गिपूर्वकमितिकारिकाद्वितीयपादघटकतत्पदं प्रथमार्द्धेन योजयति। तादति। त्रैविध्यं प्रकटयति। पूर्ववदिति।

स्वमतेन अनुमानविभागमाह। तत्रेति। अनुमानविभागे कर्तव्ये, प्रथमं पूर्ववदित्यादिविभागात्पूर्वमित्यर्थः। द्विविधमिति। तानेव विधानाह। वीतमित्यादिना। वीतस्वरूपमाह। अन्वयेति। अन्वयः हेतोः साध्येन सह सामानाधिकरण्यं, तस्य च तज्ज्ञाने लक्षणा, स एव मुखं कारणं यस्य तथाभूतेन व्याप्तिज्ञानेन, प्रवर्तमानम् जन्यम्, यदनुमानं तदेव वीतमित्युच्यते। तथाच अन्वयसहचारज्ञानजन्यव्याप्तिज्ञानजन्यमनुमानमिति फलितम्। अयं च अर्थः विशेषेण साध्यसहचारघटितव्याप्तिज्ञानेन इतं प्राप्तं इत्यर्थकवीतशब्दादेव लभ्यत इति। तथाच इदं वाच्यं ज्ञेयत्वादित्यादेः पर्वतो वह्निमान् धूमादित्यादेरुभयोरपि वीतत्वमिति भावः। विधायकमिति। प्रमाणान्तरप्राप्तसाध्यविषयकमित्यर्थः। तथा च यदा पृथिवीतरभेदरूपसाध्यस्य ज्ञानं नास्ति अपि तु इतरव्यापकीभूतभावप्रतियोगिगन्धवती पृथिवी इत्याकारकज्ञानात् पृथिव्यां न इतरभेदः इत्याकारिकाऽनुमितिस्तदा तस्याः प्रमाणान्तराप्राप्तसाध्यविषयकतया अवीतत्वमेवेति ध्येयम्। वीतलक्षणमुक्त्वाऽवीतलक्षणमाह। व्यतिरेकमुखेनेति। अत्रापि पूर्ववत्व्यतिरेकसहचारज्ञानजन्यव्याप्तिज्ञानजन्यानुमानत्वं अवीतानुमानत्वं इति लक्षणं पर्यवसितम्। निषेधकमिति। प्रमाणान्तराप्राप्तसाध्यविषयकमित्यर्थः।

पूर्ववदाद्यनुमानविशेषाणां वीतावीतयोरन्तर्भावं प्रदर्शयन् अभिमतत्वं दर्शयति। तत्रेत्यादिना। तत्र तयोर्वीतावीतयोर्मध्ये, यदवीतम् तदेव शेषवदित्युच्यते। शेषवत्पदार्थमाह। शिष्यते इत्यादिना। तथाच शेषविषयकत्वमिति लभ्यते। अत्रैव न्यायभाष्यकर्तुः सम्मतिमाह। यदाहुरिति। प्रसक्तेत्यादि। पृथिवी जलादिभ्यो भिद्यते गन्धवत्त्वात् इत्यत्र यत्र यत्र गन्धः तत्र तत्र जलादिभेदः इत्यादिरीत्या अन्वयव्याप्तिज्ञानं न सम्भवति इतरभेदरूपसाध्यस्य पूर्वमज्ञानात्। अपि तु इतरव्यापकीभूता-

(न्यायभाष्यम्)। अस्य चावीतस्य व्यतिरेकिण उदाहरणमग्रेऽभिधास्यते।

वीतं द्वेधा—पूर्ववत् सामान्यतोदृष्टं च। तत्रैकं दृष्टस्वलक्षणसामान्यविषयं यत् तत्पूर्ववत्, पूर्वं प्रसिद्धं दृष्टस्वलक्षणसामान्यमिति यावत्। तदस्य विषयत्वेनाऽस्त्यनुमानज्ञानस्येति पूर्ववत्। यथा धूमाद्वह्नित्वसामान्यविशेषः पर्वतेऽनुमीयते, तस्य वह्नित्वसामान्यविशेषस्य स्वलक्षणं वह्निविशेषो दृष्टो रसवत्याम्।

---

भावप्रतियोगिगन्धवती पृथिवीत्याकारकमेव व्याप्तिज्ञानं भवेत् तत्र च गन्धस्य गुणतया प्रसक्तं यत् पृथिव्यादिपञ्चद्रव्यवृत्तित्वं तस्य प्रतिषेधे गन्धाभावस्य इतरव्यापकत्वनिश्चयात् 'अन्यत्र गुणादौ' अप्रसङ्गात् गुणे गुणानङ्गीकारेण प्रसक्त्यभावात्, शिष्यमाणे पृथिवीरूपे सम्प्रत्ययः गन्धवत्त्वेन इतरभेदस्य निश्चय एव शेषाख्यमनुमानमिति। एतद्ग्रन्थे अवीतोदाहरणानि कानि इत्यपेक्षायामाह। अस्य चेति। अस्य पूर्वोक्तन्यायभाष्यकृदभिमतस्य, अग्रे असदकरणादित्यादिनवमकारिकाव्याख्यानावसर इत्यर्थः। तथाच तत्र कार्यकारणयोरभेदसाधनस्यावश्यकतया तयोरभेदस्य च अवीतानुमानेनैव साधनीयतया तत एव अवीतोदाहरणं आलोचनीयं अत्र तु विस्तरभयान्नोक्तमिति भावः। अभिधास्यते इति। न पटस्तन्तुभ्यो भिद्यते तन्तुधर्मत्वात् इह यद्यतो भिद्यते तत्तस्य धर्मो न भवति यथा गौरश्वस्य इत्यादि ग्रन्थेनेति शेषः।

अवीतं निरूप्य वीतं निरूपयति। वीतमिति। पूर्ववतो वीतत्वं स्पष्टयितुं तल्लक्षणमाह। तत्रेति। तत्र तयोर्वीतयोः यत् एकं दृष्टस्वलक्षणसामान्यविषयं तत्पूर्ववदित्यर्थः। पूर्ववत्पदस्य दृष्टस्वलक्षणसामान्यविषयकत्वार्थकत्वं स्पष्टयितुमाह। पूर्वं प्रसिद्धमिति। पूर्वं सहाचारदर्शनकाले, प्रसिद्धं व्यापकत्वेन निश्चितमित्यर्थः। नच सहचारदर्शनकाले महनसादौ महानसीयादिवह्नेरेव व्यापकत्वविनिश्चयेन पर्वतो वह्निमान् इत्याद्यनुमितेश्च पूर्वप्रसिद्धमहानसीयादिवह्निविषयकत्वाभावेन कथमस्य पूर्ववत्त्वमित्यतः फलितार्थमाह। दृष्टेति। दृष्टं पूर्वकालीनप्रत्यक्षविषयं, स्वलक्षणं स्वविशेषः स्वाश्रययत्किञ्चिद्व्यक्तिरिति यावत्, तत् यस्य सामान्यस्य तथाभूतं यत्सामान्यं तदेव पूर्वपदार्थ इत्यर्थः। पूर्ववदित्यत्र मतुबर्थसंबन्धं विशिनष्टि। तदस्येत्यादिना। तथाच यज्जातीयं साध्यं व्याप्तिज्ञानविषयः तज्जातीयसाध्यविषयकानुमितिः पूर्ववत्पदार्थ इति पर्यवसितम्। पूर्ववतो वीतस्योदाहरणमाह। यथेत्यादिना। वह्नित्वसामान्यविशेषः वह्नित्वरूपसामान्यधर्मवान् विशेषः, वह्निजातीयः इति यावत्। पूर्वोक्तं लक्षणं तत्र सङ्गमयति। तस्य चेत्यादिना। वह्नित्वसामान्यविशेषस्य स्वलक्षणं महानसीयवह्न्यादिरूपः, रसवत्यां महानसे, दृष्ट इत्यर्थः। केचित्तु "सामान्यावधारणप्रधाना वृत्तिरनुमानम्" इति योगभाष्यानुसारेण वह्नित्वस्यैवानुमेयत्वं वदन्तः वह्नित्वसामान्यविशेषः इत्यस्य वह्नित्वरूपसामान्यधर्मविच्छिन्न इति नार्थः, अपि तु वह्नित्वरूपो यः सामान्यविशेष इत्यर्थः। नच वह्नित्वस्य कथं सामान्यविशेषत्वमिति चेत् तस्य जाति·

अपरं च वीतं सामान्यतोदृष्टं अदृष्टस्वलक्षणसामान्यविषयम् । यथेन्द्रियविषयमनुमानम् । अत्र हि रूपादिविज्ञानानां क्रियात्वेन करणवत्त्वमनुमीयते । यद्यपि करणत्वसामान्यस्य छिदादौ वास्यादि स्वलक्षणमुपलब्धम्, तथाऽपि यज्जातीयं रूपादिज्ञाने करणवत्त्वमनुमी·

---

रूपतया सामान्यत्वं घटादिभ्यो व्यावर्तकतया विशेषत्वमपि सम्भवतीति वदन्ति । सदेतत् पर्वते वह्निमनुमिनोमि इति सर्वजनप्रतीत्या वह्नेरेव अनुमितिविधेयस्वरूपानुमेयत्वावगत्या वह्नित्वस्य अनुमेयत्वानङ्गीकारेण उपेक्षितम् । न च भवन्मते पूर्वोक्तसामान्यावधारणप्रधाना वृत्तिरनुमानमिति योगभाष्यविरोध इति वाच्यम् । सामान्यावधारणप्रधाना इत्यस्य सामान्यरूपेण वह्नित्वादिना, यदवधारणं वह्नेर्निश्चयः, स एव प्रधानं फलं यस्य तथाभूतं यत्तदनुमानं अनुमितिकरणमित्यर्थकत्वात्, एतच्च 'गृहीतव्याप्तिकेन हेतुना साध्यवति पक्षे ज्ञायमानेन साध्यस्य सामान्यात्मनाऽध्यवसायोऽनुमानम्" इति योगसूत्रटीकायां नारायणतीर्थव्याख्यायां स्पष्टम् । तथा च प्रत्यक्षे यथा परिमाणरूपादिना घटादेः ज्ञानं भवति न तथा अनुमितौ अशेषविशेषाकारेण ज्ञानं भवतीत्येव सामान्यावधारणेत्यादेः तात्पर्यं बोध्यम् । अधिकमन्यत्रानुसन्धेयम् ।

द्वितीयं वीतं निरूपयति । अपरञ्चेति । सामान्यतोदृष्टपदार्थमाह । अदृष्टेति । अदृष्टं सहचारदर्शनकालेऽप्रत्यक्षीकृतं, स्वलक्षणं स्वविशेषो यस्य तथाभूतं यत्सामान्यं तद्विषयकमित्यर्थः । तथाच यज्जातीयं साध्यं व्याप्तिज्ञानविषयस्तज्जातीयसाध्यभिन्नसाध्यविषयकमित्यर्थः । नच तद्धर्मावच्छिन्नविधेयकानुमितिं प्रति तद्धर्मे प्रकृतहेतुव्यापकतावच्छेदकत्वज्ञानस्य कारणत्वात् कथमेतदिति वाच्यम् । महानसीयवन्हीतरवन्ह्यभाववान् पर्वतः इत्याकारकेतरविशेषबाधनिश्चयसत्त्वे महानसीयवन्हिविषयकत्वे लाघवमितिलाघवज्ञानसत्त्वे च वन्हित्वरूपसामान्यधर्मावच्छिन्ने धूमव्यापकत्वावगाहिवन्हिव्याप्यधूमवान् पर्वतः इत्याकारकपरामर्शानन्तरं पर्वतो महानसीयवन्हिमानित्याकारिकाया अनुमितेः सर्वजनसिद्धतया तादृशनियमे सङ्कोचस्यावश्यकत्वात् । उदाहरणमाह । यथेति । रूपादिविज्ञानं सकरणकं क्रियात्वात् इत्यनुमानं सामान्यतोदृष्टमनुमानमित्यर्थः । एतदेव विशदयति । अत्र हीति । अत्र पूर्वोक्तेन्द्रियसाधकानुमाने । नन्वत्र करणत्वरूपसामान्यधर्मावच्छिन्नस्य साध्यस्य छिदाकरणे वास्यादौ दृष्टत्वेन कथमस्य अदृष्टस्वलक्षणसामान्यविषयकत्वमित्याशयेनाशङ्कते । यद्यपीत्यादिना । करणत्वरूपसामान्यस्य वास्यादिरूपो विशेषः छेदनक्रियान्तर्भावेण करणवत्त्वरूपसाध्यसहचारज्ञानकाले दृष्ट इत्यर्थः । तथाच कथं तस्य अदृष्टस्वलक्षणसामान्यविषयकत्वमिति भावः । उत्तरयति । तथापीति । रूपादिज्ञाने यज्जातीयं करणवत्त्वमनुमीयते तज्जातीयस्य करणस्य स्वरूपं प्रत्यक्षेण न दृष्टमित्यर्थः । तथाच पूर्वोक्तानुमाने इन्द्रियजातीयकरणकत्वस्य साध्यतया इन्द्रियजातीयकरणत्वरूपसामान्यविशेषस्य अस्मदादिप्रत्यक्षागोचरत्वेन तस्य अदृष्टस्वलक्षणसामान्यविषयकत्वं सुसङ्गतमेवेति भावः । यद्यपि पूर्वोक्तरूपादिविज्ञानं सकरणकं क्रियात्वात् ( कार्यत्वात् ) इत्यनुमाने सकरणकत्वमेव साध्यमिति वास्यादौ करणत्वरूपसामान्यस्य दर्शनाभिधानमसङ्गतमिति प्रतिभाति । तथापि सकरणकत्वं हि

यते तज्जातीयस्य करणस्य न दृष्टं स्वलक्षणं प्रत्यक्षेण । इन्द्रियजातीयं हि तत्करणम्, न चेन्द्रियत्वसामान्यस्य स्वलक्षणमिन्द्रियविशेषः प्रत्यक्षगोचरोऽर्वाग्दृशाम्, यथा वह्नित्वसामान्यस्य स्वलक्षणं वह्निः । सोऽयं पूर्ववतः सामान्यतोदृष्टात्त सत्यपि वीतत्वेन

---

जन्यत्वसम्बन्धेन करणवत्त्वं तस्य च करणरूपतया जन्यतासम्बन्धेन करणस्यैव साध्यत्वे पर्यवसानेन वास्यादौ करणत्वरूपसाध्यतावच्छेदकस्य दर्शने छेदनक्रियायां वास्यादिरूपसाध्यस्य जन्यतासम्बन्धेन दर्शनमपि अर्थत एव सिद्धमिति तस्य अदृष्टस्वलक्षणसामान्यविषयकत्वं न सम्भवतीति तात्पर्यार्थोऽवसेयः । तथापि यज्जातीयं रूपादिज्ञाने करणवत्त्वमनुमीयते इत्येव सम्यक् पाठः । तस्यैव रूपादिविज्ञानानां क्रियात्वेन करणवत्त्वमनुमीयते इति पूर्वोक्तग्रन्थानुगुणत्वात् । यज्जातीयस्य रूपादिज्ञाने करणत्वमनुमीयते इति पाठस्तु सामान्यस्य अनुमेयत्वाङ्गीकारेण कथञ्चित् योजनीयः । ननु छिदिक्रियायां रूपादिविज्ञानकरणसजातीयकरणादर्शनेपि अन्यत्र तद्दर्शनं स्यादित्याशङ्कामपहरति । इन्द्रियजातीयं हीत्यादिना । इन्द्रियजातीयं इन्द्रियत्वरूपजातिमत्, अत्र जातित्वं न नित्यत्वे सति अनेकसमवेतत्वरूपं नैयायिकाभिमतं विवक्षितम्, इन्द्रियत्वस्य पृथिवीत्वादिना साङ्कर्येण जातित्वानभ्युपगमात्, किन्तु अनेकवृत्तिधर्मत्वरूपमेव विवक्षितम्, तच्च इन्द्रियत्वादौ सहजत एव सम्भवति इति ध्येयम् । परे तु साङ्कर्यस्य जातिबाधकत्वानङ्गीकारेण इन्द्रियत्वस्य जातित्वे बाधकाभावात् यथाश्रुतार्थेपि न दोष इत्याहुः । तत्करणमिति । रूपादिविज्ञाने करणमित्यर्थः । भवतु इन्द्रियजातीयं रूपादिविज्ञाने करणं तथापि तस्यानुमानस्य अदृष्टस्वलक्षणसामान्यविषयकत्वं कथमित्यत आह । नचेति । अर्वाग्दृशाम् स्थूलदृशाम्, इन्द्रियविशेषो न प्रत्यक्षगोचर इत्यर्थः । तथाच अस्य अनुमानस्य अदृष्टस्वलक्षणसामान्यविषयकत्वे न कापि क्षतिरिति भावः । नच तथा सति पर्वतो वन्हिमान् धूमादित्यादिस्थलीयानुमितेरपि पर्वतीयवह्न्यादिविषयकत्वाङ्गीकारेण पर्वतीयवह्नित्वादिरूपस्य धर्मस्य पूर्वमदृष्टतया अदृष्टस्वलक्षणसामान्यविषयकतया पूर्ववतोऽनुमानस्योच्छेदापत्तिरित्याशङ्कां व्यतिरेकदृष्टान्तव्याजेन परिहरति । यथेति । यथा वन्हित्वसामान्यस्य स्वलक्षणं वन्हिः अर्वाग्दृशां प्रत्यक्षगोचरः, न तथेन्द्रियत्वसामान्यस्य स्वलक्षणं इन्द्रियं प्रत्यक्षगोचर इत्यन्वयः । तथाच रूपादिविज्ञानं सकरणकं क्रियात्वादित्यत्र रूपादिज्ञानकार्यतानिरूपितकरणतायाः छेदनकार्यत्वावच्छिन्नकार्यतानिरूपितकरणतातो भिन्नतया तादृशकरणतारूपसाध्यतावच्छेदकविशिष्टस्य साध्यस्य पूर्वं कुत्रापि ज्ञानाभावेनानायत्या तादृशानुमितेः अदृष्टस्वलक्षणसामान्यविषयकत्वमङ्गीकार्यं, वह्निमान् धूमादित्यादिस्थले तु वह्नित्वरूपस्य साध्यतावच्छेदकस्य महानसीयवह्न्यादिनिष्ठस्य एकत्वेन वन्हित्वावच्छिन्नसाध्यकवन्हिमान् इत्यनुमितेः पूर्ववत्त्वे न किञ्चिद्बाधकमिति भावः । पूर्ववतः सामान्यतोदृष्टाद्भेदकं रूपं दर्शयति । सोयमिति । वीतत्वेन अन्वयसहचारज्ञानजन्यव्याप्तिज्ञानजन्यानुमानत्वेन, पूर्ववतः अनुमानस्य तुल्यत्वेपि सामान्यतो दृष्टात् सोयं दृष्टस्वलक्षणसामान्यविषयकत्वरूपः विशेषः व्यावर्तको ( विरुद्धः ) धर्म इत्यर्थः । ननु सामान्यतोदृष्टपदाददृष्टस्वलक्षणसामान्यविषयकत्वं न लभ्यते इत्याशङ्कामपहर्तुं सामान्यतोदृष्टेति पदसमूह

तुल्यत्वे विशेषः । अत्र च दृष्टं दर्शनम्, सामान्यत इति सामान्यस्य, सार्वविभक्तिकस्तसिः । अदृष्टस्वलक्षणस्य सामान्यविशेषस्य दर्शनं सामान्यतोदृष्टमनुमानमित्यर्थः । सर्वं चैतदस्माभिर्न्यायवार्तिकतात्पर्यटीकायां व्युत्पादितमिति नेहोक्तं विस्तरभयात् ।

---

घटकपदानामर्थं प्रदर्शयन् तस्य तादृशार्थकत्वं प्रकटयति । अत्र चेति । अत्र सामान्यतोदृष्टमिति वाक्ये, दृष्टम् दर्शनमिति । तथाच दृशधातूत्तरं भावार्थकक्तप्रत्ययोऽस्तीतिदृष्टपदस्य दर्शनार्थकत्वं बोध्यम् । सामान्यत इत्यत्र तसिप्रत्ययो न अवधित्वार्थकः अपि तु षष्ठीस्थाने इति षष्ठ्यर्थस्य विषयकत्वरूपस्य दर्शनपदार्थे अन्वयात् सामान्यतोदृष्टपदात् सामान्यविषयकज्ञानलाभ इत्याशयेनाह । सामान्यत इतीत्यादि । न च तथापि उक्तवाक्येन सामान्यविषयकज्ञानलाभेऽपि अदृष्टस्वलक्षणसामान्यविषयकज्ञानालाभोऽस्त्येवेत्याशङ्कामपहर्तुं निष्कृष्टार्थमाह । अदृष्टस्वलक्षणेति । तथाच सामान्यपदस्य अदृष्टस्वलक्षणसामान्ये लक्षणाङ्गीकारेण तादृशार्थलाभसम्भव इति भावः । केचित्तु ननु सामान्यतोदृष्टमिति व्याख्येयवाक्यस्थदृष्टपदस्य अदृष्टस्वलक्षणसामान्यविषयमितिव्याख्यानवाक्येनादृष्टार्थपरत्ववर्णनमयुक्तं दृष्टपदस्य अदृष्टार्थकत्वासम्भवात् इत्याशङ्कायां न दृष्टपदस्यादृष्टार्थकत्वमभिहितं, अपि तु सामान्यत इत्यस्य सामान्यस्येत्यर्थकत्वं दृष्टमित्यस्य च दर्शनार्थकत्वमादाय सामान्यस्य दर्शनं इत्यर्थलाभादायातमर्थात् विशेषस्यादृष्टत्वमित्यार्थिकार्थमभिप्रेत्य तथाभिधानान्न दोष इति समाधानं मनसि निधायाह । अत्र चेतीत्यादिना इत्येवमवतारयन्ति । अत्रेदं चिन्त्यते अत्र हि दर्शनपदं न प्रत्यक्षार्थकं तस्य सामान्यतोदृष्टमनुमानं इत्यनुमानपदार्थेन सममभेदान्वयानुपपत्तेः, अपि तु ज्ञानार्थकमेव । तथाच सामान्यज्ञानरूपस्यानुमानस्य विशेषज्ञानरूपस्य सत्त्वेन विशेषे अदृष्टत्वस्य आर्थिकत्वासम्भवेन तस्य तदभिधानमसङ्गतं स्यादिति । परे तु सामान्यतोदृष्टमित्यत्र अकारप्रश्लेषमङ्गीकुर्वन्तः अदृष्टस्वलक्षणसामान्यविषयकत्वार्थमाहु । तदपि अदृष्टस्वलक्षणस्य सामान्यविशेषस्य दर्शनमिति ग्रन्थाप्रासेरुपेक्षितमस्माभिः । तथाच यत्र साध्यतावच्छेदकविशिष्टे साध्ये प्रकृतहेतुतावच्छेदकविशिष्टहेतुव्यापकत्वघटितव्याप्तिज्ञानादनुमितिः सा पूर्ववदनुमानं यत्र तु साध्यतावच्छेदकव्यापकधर्मावच्छिन्ने हेतुव्यापकत्वघटितव्याप्तिज्ञानादनुमितिः सा सामान्यतोदृष्टमनुमानमित्यनयोर्भेद इति भावः। अत एवोक्तं न्यायवार्तिककृता "पूर्ववदिति वतिप्रत्यय एषः यथा पूर्वं प्रत्यक्षेण दृष्टोऽर्थस्तथा तदनुमानेनापि तमेवार्थं प्रतिपद्यते इति पूर्ववत् दृष्टो भवति, यदितरधर्मदर्शनात् धर्मिणोऽधिगतिसाधनं तत्सामान्यतोदृष्टमनुमानं यथेच्छादिभिरात्मेत्यादिना । ननु न्यायदर्शनादौ अनुमानत्रैविध्यस्योक्ततया अत्र द्वैविध्याभिधानमसङ्गतमित्याशङ्कायामाह । सर्वं चैतदस्माभिरिति । तथाच यथा साधारणासाधारणानुपसंहारिभेदेन व्यभिचारस्य बहुविधत्वेऽपि व्यभिचारत्वेन रूपेण तेषां त्रयाणामपि सङ्ग्रहः, तथा अत्रापि वीतत्वेन पूर्ववत्सामान्यतोदृष्टयोः सङ्ग्रहेण न न्यायसूत्रादिविरोध इति भावः । विस्तरभयादिति । तथाच अत्र शास्त्रे प्रमेयप्रतिपादनस्यैव मुख्यतया प्रमाणप्रतिपादकत्वाभावत एव प्रमाणाशेषविशेषज्ञानसम्भवे अत्र शास्त्रे तदभिधानं पौनरुक्त्यादिदोषं अप्रतिपिपादयिषितार्थप्रतिपादनादिरूपदोषं च आवहेत् अतः प्रमेयप्रतीताव-

प्रयोजकवृद्धशब्दश्रवणसमनन्तरं प्रयोज्यवृद्धप्रवृत्तिहेतुज्ञानानुमानपूर्वकत्वाच्छब्दार्थसम्बन्धग्रहणस्य, स्वार्थसम्बन्धज्ञानसहका

---

प्युक्तमेव प्रमाणाभिधानमत्र कृतं न विस्तरेणेति भावः।

आप्तश्रुतिराप्तवचनन्तु इति कारिकांशं व्याख्यास्यन् शाब्दप्रमायाः अनुमानानन्तराभिधाने प्रयोजिकां उपजीवकत्वरूपसङ्गतिं दर्शयति । प्रयोजकवृद्धेत्यादिना । प्रयोजकः प्रेरकः, वृद्धः व्युत्पन्नः तत्तद्भाषाभिज्ञ इति यावत् । तस्य यः शब्दः घटमानयेतिवाक्यम्, तच्छ्रवणानन्तरं, प्रयोज्यवृद्धः प्रेर्यवृद्धः तस्य या प्रवृत्तिः घटानयनादिचेष्टानुकूलो यत्नः, तद्धेतुभूतं यज्ज्ञानं घटानयनकार्यताज्ञानं, तद्विषयकप्रवृत्तिं प्रति तद्धर्मिककार्यताज्ञानस्य कारणत्वादिति भावः । तदनुमानपूर्वकत्वात् तदनुमानप्रयोज्यत्वादित्यर्थः । शब्दार्थसम्बन्धग्रहणस्येति । शब्दार्थयोः यः सम्बन्धः वाच्यवाचकभावादिरूपः तज्ज्ञानस्येत्यर्थः । अथ पूर्वोक्तरीत्या शब्दार्थयोः वाच्यवाचकभावरूपस्य सम्बन्धस्य प्रवृत्तिहेतुज्ञानानुमानपूर्वकत्वेऽपि शाब्दबोधे अनुमाननिरूपितसङ्गतिमत्त्वं कथं लभ्यत इत्यत आह । स्वार्थेति । स्वं अर्थश्च स्वार्थौ शब्दार्थाविति यावत्, तयोः सम्बन्धः वाच्यवाचकभावरूपः तज्ज्ञानसहकारिणः तज्ज्ञानसहकृतस्य शब्दस्य अर्थप्रत्यायकत्वात शाब्दबोधजनकत्वात्, तथाच शाब्दबोधं प्रति शब्दस्य शक्तिधीसहकृतस्यैव कारणत्वमिति शक्तिधियश्च अनुमानपूर्वकत्वात् शाब्दबोधस्य अनुमानप्रयोज्यत्वरूपानुमाननिरूपितोपजीवकत्वसङ्गतिमत्त्वेन अनुमाननिरूपणानन्तरं शाब्दबोधनिरूपणं सङ्गतमेवेति । अयं भावः । अगृहीतशक्तिकेन पदेन शाब्दबोधाजननात् गृहीतशक्तिकस्यैव पदस्य शाब्दबोधजनकत्वं वाच्यम्, शक्तिग्रहश्चानुमानाधीनः, तथाहि प्रयोजकवृद्धस्य गामानयेति वाक्यं श्रुत्वा प्रयोज्यवृद्धः गवानयने प्रवर्तते तां च गवानयनरूपां चेष्टामुपलभ्य पार्श्वस्थो वालः इयं गवानयनरूपा चेष्टा गवानयनविषयकप्रवृत्तिजन्या गवानयनविषयकचेष्टात्वात् या यद्विषयिणी चेष्टा भवति सा तद्विषयकप्रवृत्तिजन्या मदीयस्तन्यपानविषयकचेष्टावदिति सामान्यव्याप्त्या प्रेर्यवृद्धस्य गवानयनविषयकप्रवृत्तिमनुमिनोति, ततश्च सा गवानयनविषयिणी प्रवृत्तिः गवानयनधर्मिककार्यताज्ञानजन्या गवानयनविषयकप्रवृत्तित्वात् या यद्विषयिणी प्रवृत्तिः सा तद्विषयककार्यताज्ञानजन्या मदीयस्तन्यपानप्रवृत्तिवदिति सामान्यव्याप्त्या गवानयनविषयककार्यताज्ञानमनुमाय तद्गवानयनकार्यताज्ञानं किञ्चित्कारणजन्यं कादाचित्कत्वात् मदीयरोदनादिवदिति सामान्यतः किञ्चित्कारणमनुमाय तत्कार्यताज्ञानं प्रयोजकवृद्धशब्दश्रवणजन्यं तदन्वयव्यतिरेकानुविधायित्वात् यो यदन्वयव्यतिरेकानुविधायी स तज्जन्यः यथा मदीयदुःखान्वयव्यतिरेकानुविधायि मदीयदुःखजन्यमदीयरोदनमित्यनेन तज्ज्ञानस्य शब्दश्रवणजन्यत्वं निश्चित्य अनतिप्रसक्तः ताहशशब्देन सह तस्यार्थस्य कश्चन सम्बन्धोऽस्तीति विनिश्चिनोति । कथमन्यथा अस्माद्वाक्याद्गवानयनरूपार्थ एव बुद्धः न घटानयनादिरूप इति नियमः सिद्ध्येत् । एवं सामान्यतः आदौ विशिष्टार्थस्य विशिष्टवाक्येन समं सम्बन्धं विनिश्चित्य अनन्तरं गां नय घटमानय इत्यादिवाक्ये प्रत्येकं गोपदानयनपदयोरावापोद्वापाभ्यां गवादिपदस्य गवादिरूपार्थे सम्बन्धं विनिश्चिनोति । स एव शक्तिरित्युच्यते । स च एतन्मते नैयायिकादिवत् न ईश्वरेच्छारूपः एतैरीश्वरानङ्गी-

रिणश्च शब्दस्यार्थप्रत्यायकत्वादनुमानपूर्वकत्वमित्यनुमानानन्तरं शब्दं लक्षयति—"आप्तश्रुतिराप्तवचनं तु" इति । अत्र आप्तवचनमिति लक्ष्यनिर्देशः, परिशिष्टं लक्षणम् । आप्ता प्राप्ता युक्तेति यावत् । आप्ता चाऽसौ श्रुतिश्चेति आप्तश्रुतिः । श्रुतिः—वाक्यजनितं वाक्यार्थज्ञानम् ।

---

कारात्, अपि तु पदार्थान्तरमेव । तथा च शाब्दबोधस्य शक्तिज्ञानपूर्वकत्वात् शक्तिज्ञानस्य अनुमानाधीनतया अनुमाननिरूपणानन्तरं शाब्दबोधनिरूपणं युक्तमेवेति । यद्यपि निरूपणीयतावच्छेदकावच्छेदेन सङ्गतिमत्त्वमपेक्षितमिति यादृशवाक्यघटकपदानां शक्तिज्ञानं न व्यवहारेण जातं अपि तु कारणान्तरादेव तादृशवाक्यजन्यशाब्दबोधेऽनुमानपूर्वकत्वस्याभावेन अनुमाननिरूपितसङ्गतिमत्त्वं नास्ति । न च व्यवहारातिरिक्तस्य शक्तिज्ञानकारणत्वमेव नास्तीति वाच्यम् । व्याकरणादेरपि शक्तिज्ञानकारणत्वात्, अत एव 'शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद्व्यवहारतश्च । वाक्यस्य शेषाद्विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः । इत्यभियुक्तोक्तिः सङ्गच्छते इति शक्यते वक्तुम्, तथापि व्याकरणाधीनशक्तिग्रहं प्रति व्याकरणादिघटकयत्किञ्चित्पदानां शक्तिज्ञानमावश्यकं अत्यन्तमव्युत्पन्नस्य शक्तिज्ञानं तु व्यवहारं विना नैव सम्भवतीति रीत्या सर्वस्यापि शक्तिज्ञानस्य साक्षात्परम्परया वा अनुमानाधीनत्वस्य आवश्यकतया शाब्दबोधमात्रे अनुमानोपजीवकत्वस्याक्षततयाऽवच्छेदकावच्छेदेन सङ्गतिमत्त्वमस्त्येवेति नानुपपत्तिः । यद्यपि शाब्दबोधं प्रति शब्दस्य न कारणत्वं अपि तु शब्दज्ञानस्यैवेति शब्दस्य अर्थप्रत्यायकत्वादिति ग्रन्थोऽसङ्गतः प्रतिभाति, तथापि ज्ञायमानशब्दस्य कारणत्वाङ्गीकर्तृप्राचीनमताभिप्रायेणेदं शब्दपदं लक्षणया शब्दज्ञानपरं वा तेनोक्तापस्थभावः ।

तदेवं शाब्दबोधेऽनुमाननिरूपितोपजीवकत्वसङ्गतिं प्रदर्श्य आप्तश्रुतिरित्यादिकारिकांशे लक्ष्यलक्षणादिविभागमाह । तत्रेत्यादिना । तत्र आप्तश्रुतिराप्तवचनन्तु इति कारिकाचतुर्थपादे, लक्ष्यनिर्देशः लक्ष्यबोधकवाक्यम्, इष्टमनुमानमाप्तवचनञ्चेत्यत्र तस्यैव लक्ष्यत्वेन निर्देशादिति भावः । परिशिष्टम् अवशिष्टं आप्तश्रुतिरित्यवशिष्टभाग इति यावत् । लक्षणघटकपदानामर्थमाह । आप्ता प्राप्तेति । युक्तेतीति । युक्तत्वं योग्यतावत्त्वं योग्यता च अबाधितत्वं । तथाच अबाधिता प्रमात्मिकेति यावत्, एतादृशी या श्रुतिः सा आप्तवचनस्य लक्षणमित्यर्थः । नच एतन्मते ज्ञानरूपाया बुद्धिवृत्तेरेव प्रमाणत्वेन श्रुतिशब्दस्य च 'श्रुतिः स्त्री वेद आम्नाय' इत्यादिकोशेन वेदरूपशब्द एव शक्ततया कथं लक्षणसमन्वय सम्भव इत्यत आह । श्रुतिर्वाक्यजनितमिति । तथाच श्रुतिपदस्य वाक्यजनितवाक्यार्थज्ञाने लक्षणया वाक्यार्थज्ञानस्य प्रमाणत्व सङ्गतमेवेति भावः । नच वाक्यजनितं ज्ञानं श्रुतिरित्यावत्यैव सामञ्जस्ये वाक्यार्थपदं व्यर्थमिति वाच्यम् । तथासति सर्पा वै सत्रमासत इत्यादिश्रुतिजन्यस्य सर्पकर्तृकसत्ररूपार्थविषयकज्ञानस्यापि प्रमाणत्वापत्तिः । अत्यन्तासत्यपि ह्यर्थे शब्दो ज्ञानं करोति हि । इति नियमेन तस्यापि वाक्यजन्यत्वादतो वाक्यार्थेति । तथाच तस्य वाक्यजन्यत्वेपि वाक्येनाध्यर्थं स्वकीयतात्पर्यविषयतया प्रार्थ्यते इतिवाक्यार्थः तद्विषयकं यज्ज्ञानं तथाच वाक्यतात्पर्यविषयीभूतार्थविषयकं यद्वाक्यजन्यं ज्ञानं तदेव शाब्द-

तच्च स्वतःप्रमाणम् । अपौरुषेयवेदवाक्यजनितत्वेन सकलदोषाशङ्काविनिर्मुक्तेर्युक्तं भवति । एवं वेदमूलस्मृतीतिहासपुराणवाक्य-

---

बोधप्रमाणम् इत्यर्थेन न दोष इति केचित् । तत्र च सर्पा वै सत्रमासत इत्यादिवाक्यजन्यस्य ज्ञानस्य आप्तत्वाभावेनैव वारणसम्भवे वाक्यार्थविषयकत्वनिवेशानर्थकत्वं दुर्वारमेव । अत्राहुः यत्रैकेन पुरुषेण विजातीयानुपूर्वीकं एकं वाक्यं प्रयुक्तं तत्र तादृशवाक्यसजातीयवाक्यश्रवणानन्तरं तादृशवाक्यस्य स्वतन्त्रोच्चारयितुः यज्ज्ञानं स्मरणात्मकं तस्यापि वाक्यजन्यत्वेन शाब्दबोधत्वापत्तिरतः वाक्यार्थेति । तथाच वाक्यजनितं वाक्यार्थज्ञानं इत्यनेन आकाङ्क्षादिचतुष्टयज्ञानजन्यत्वं लभ्यते इति तत्र नातिव्याप्तिरिति ।

यद्यपि "आप्तोपदेशः शब्दः" इतिगौतमसूत्रोक्तशब्दलक्षणघटकोपदेशपदं वाक्यार्थज्ञानपरमिति तल्लक्षणसमानार्थकमेतल्लक्षणं प्रतीयते, तत्रच आप्तः खलु साक्षात्कृतधर्मा यथा दृष्टस्यार्थस्य चिख्यापयिषया प्रयुक्तोपदेष्टा साक्षात्करणमर्थस्याप्तिः तया वर्तत इत्याप्त इत्याप्तलक्षणमन्यथा उपवर्णितम् । तथापि एतन्मते वेदानामपौरुषेयतया वेदप्रतिपादितार्थानां केनापि प्रमाणान्तरेणोपलभ्य विरचितत्वाभावात्तादृशार्थो न सम्भवतीत्यस्य न न्यायसूत्रोक्तलक्षणसमानार्थकत्वमिति ध्येयम् ।

तदेवं शाब्दप्रमालक्षणमभिधाय तस्य समन्वयं वेदवाक्यजनिते ज्ञाने करोति । तच्चेति । वाक्यार्थज्ञानं चेत्यर्थः । यत स्वतः प्रमाणम् तद् युक्तं भवतीन्वयः । स्वतः प्रमाणत्वं च प्रमाणान्तरेणार्थमुपलभ्याविरचितवाक्यजन्ययथार्थज्ञानत्वम् । तथा च वेदवाक्यजन्यज्ञानस्य प्रमाणान्तरेणार्थमुपलभ्याविरचितवाक्यजन्यत्वेन स्वतस्त्वं सिध्यतीत्यर्थः । नच तस्य स्वतस्त्वेपि युक्तत्वे किं मानमित्यत आह । सकलदोषाशङ्काविनिर्मुक्तेरिति । सकलाः सम्पूर्णाः, ये दोषाः भ्रमप्रमादविप्रलिप्साकरणापटवादिरूपाः पुन्दोषाः अबोधकत्वादिरूपाः शब्ददोषाश्च तेषां या आशङ्का सम्भावना, तस्या विनिर्मुक्तेः अभावादित्यर्थः । अयं भावः शाब्दबोधस्य प्रमाण्याप्रामाण्ये वाक्यस्य पुरुषदोषजन्यत्वाजन्यत्वप्रयुक्ते यद्वाक्यं भ्रान्तेन पुरुषेण नद्यास्तीरे पञ्चफलानि सन्ति इत्यादिरूपं प्रयुक्तं तद्वाक्यजन्यं शाब्दबोधात्मकं ज्ञानमपि अयुक्तमेव तस्य भ्रमरूपदोषविशिष्टपुरुषजन्यवाक्यजन्यत्वात् एवं प्रमादिपुरुषोच्चरितवाक्यजन्यज्ञानमपि अयुक्तमेव । वेदवाक्यजन्यज्ञाने च भ्रमप्रमादादिसकलपुरुषदोषाशङ्काविरहेण युक्तत्वमस्त्येवेति । नच तस्य सकलदोषाशङ्काविनिर्मुक्तत्व एव किं मानमित्यत आह । अपौरुषेयवेदवाक्यजनितत्वेनेति । अपौरुषेयतया तत्र भ्रमप्रमादादिदोषविशिष्टपुरुषकर्तृत्वाभावेन तज्जन्यज्ञानस्य सकलदोषाशङ्काविनिर्मुक्तत्वं सम्भवत्येवेति भावः । अथ वेदः पौरुषेयः वाक्यत्वात् इत्यनुमानेन वेदस्य पौरुषेयत्वमेव सिध्यतीति कथं तस्यापौरुषेयत्वम् । अत्रोच्यते पूर्वोक्तानुमाने पौरुषेयत्वं यदि पुरुषाधीनोच्चारणकत्वरूपं विवक्ष्यते तदा तु अस्मन्मते तादृशस्य पौरुषेयत्वस्य वेदेऽङ्गीकारेण सिद्धसाधनमेव यदि च पुरुषकर्तृत्वरूपपौरुषेयत्वं तत्र साध्यते तदा तु अप्रयोजकत्वमेव वाक्योच्चारणं प्रति पुरुषप्रयत्नस्य कारणत्वेऽपि सजातीयोच्चारणानपेक्षोच्चारणकत्वस्य तत्रासिद्धेः, प्रत्युत 'वेदस्याध्ययनं सर्वं गुर्वध्ययनपूर्वकम् । वेदाध्ययनसामान्यादधुनाध्ययनं यथा ।' इत्यादिभट्टपादोक्तरीत्या तस्य अपौरुषेयत्वसिद्धेरिति । अधिकमन्यत्रानुसन्धेयम् । युक्तं भवतीति । अबाधितार्थविषयकं भवतीत्यर्थः ।

जनितमपि ज्ञानं युक्तं भवति ।

आदिविदुषश्च कपिलस्य कल्पादौ कल्पान्तराधीतश्रुतिस्मरणसम्भवः, सुप्तप्रबुद्धस्येव पूर्वेद्युरवगतानामर्थानामपरेद्युः । तथा च आव-

---

ननु वेदवाक्यजन्यशाब्दबोधस्य अपौरुषेयवेदवाक्यजनितत्वेन निर्दोषतया प्रामाणत्वेपि मन्वादिस्मृतिवाक्यजनितशाब्दज्ञाने प्रमा न स्यात् ; तस्य पौरुषेयत्वेन भ्रमप्रमादादिपुरुषदोषाशङ्कासम्भवात् । नच तत्र प्रमाणान्तरेण याथार्थ्यप्रतीतौ प्रामाण्यनिश्चयः सम्भवति लौकिकवाक्यवदिति वाच्यम् । तादृशवाक्यानां अदृष्टार्थत्वेन प्रामाणान्तरेण तदर्थप्रतीत्यसम्भवादित्यत आह । एवमिति । वेदमूलेति । वेदमूलानि वेदप्रतिपादितार्थप्रतिपादकानि, स्मृतीतिहासपुराणवाक्यानि तज्जनितमित्यर्थः । तथाच यासां स्मृतीनां पुराणानां इतिहासानाञ्च वेदमूलकत्वं तेषामेव प्रामाण्यं न वेदविरुद्धार्थप्रतिपादकानामिति 'धर्मस्य शब्दमूलत्वादशब्दमनपेक्षं स्यात्' इति सूत्रादारभ्य 'हेतुदर्शनात्' इत्यन्तेन सूत्रनिचयेन मन्वादिस्मृत्याचारादीनां प्रामाण्यं वेदविरुद्धार्थप्रतिपादिकानां अननुष्ठानलक्षणमप्रामाण्यमित्यादिमीमांसाग्रन्थेषु बहुशः युक्तिपुरःसरं साधितम् विस्तरभयान्नेहोच्यते । यद्यपि सर्वासां स्मृतीनां मूलभूतानि वेदवाक्यानि नोपलभ्यन्ते तथापि कासांञ्चित् देशान्तरीयशाखामूलकत्वं उच्छिन्नशाखामूलकत्वञ्चाङ्गीक्रियत इति । एवमेव कपिलादिस्मृतीनामपि वेदमूलकत्वादेव प्रामाण्यमवसेयम् ।

ननु मन्वादिभिः स्वयं वेदमधीत्य तदर्थं न्यायतः अवगत्य स्मृतिः कृता इति शक्यते वक्तुम् । यः कश्चित्कस्य चिद्धर्मो मनुना सम्प्रकीर्तितः । स सर्वोऽभिहितो वेदे सर्वज्ञानमयो हि सः । इति वचनात् । कपिलादिस्मृतीनां तु कथं वेदमूलकत्वं 'ऋषिं प्रसूतं कपिलं यस्तमग्रे ज्ञानैर्बिभर्ति जायमानञ्च पश्येदित्यादिश्रुत्या तस्य आदिविद्वत्तायाः प्रतिपादितत्वेन आदिविदुषश्च वेदाध्ययनासम्भवादित्यत आह । आदिविदुषश्चेति । कल्पादौ एतत्कल्पीयप्राथमिकसृष्टिसमये, ननु सृष्टिसमये कथं श्रुतिस्मरणसम्भवः । स्मरणं प्रति अनुभवस्य कारणत्वेन तत्पूर्वं श्रुत्यनुभवाभावादित्यत आह । कल्पान्तराधीतेति । तथाच पूर्वकल्पे श्रुत्यनुभवस्य सत्त्वात् एतत्कल्पे पूर्वकल्पाधीतश्रुतिस्मरणं न दुर्घटमिति । एवंच कपिलवाक्यस्य वेदमूलकत्वेन मन्वादिस्मृतिवदेव तस्यापि प्रामाण्यं सिद्धमेवेति भावः। । अत्रैव दृष्टान्तमाह । सुप्तप्रबुद्धस्येवेति । पूर्वं सुप्तस्य पश्चात्प्रबुद्धस्य पूर्वस्मिन्दिने अवगतानां अर्थानां अपरेद्युः स्मरणमित्यर्थः । पूर्वदिनावगतपदार्थानामुत्तरदिने स्मरणस्य सम्भवेपि जन्मान्तरावगतपदार्थानां जन्मान्तरे स्मरणापत्तिवारणाय जन्मान्तरीयसंस्कारनाशस्तत्र अवश्यं भवतीत्युपगन्तव्यमिति कथं कल्पान्तराधीतश्रुतिस्मरणसम्भव इत्याशङ्कां महाभारतप्रमाणेन निराकरोति । तथाचेत्यादिना । तथाच संस्कारसाक्षात्करणात्पूर्वजातिज्ञानं इति योगसूत्रभाष्ये जैगीषव्यस्य दशसु महासर्गेषु जन्मपरिणामक्रममनुपश्यतः विवेकजज्ञानमभूत् इत्यादि प्रतिपादितम् तद्वदेव योगजधर्मसहायेन कपिलस्य कल्पान्तराधीतश्रुतिस्मरणं सम्भवत्येव । अत एव प्रवृत्तिं प्रति इष्टसाधनताज्ञानस्य कारणत्वात् बालकस्य स्तन्यपाने प्रवृत्त्यनुपपत्तिमाशङ्क्य जन्मान्तरानुभूतेष्टसाधनतास्मरणादेव तत्र प्रवृत्तिः तत्स्मारक-

ट्यजैगीषव्यसंवादे भगवान् जैगीषव्यो दशमहाकल्पवर्तिजन्मस्मरणमात्मन उवाच "दशसु महाकल्पेषु विपरिवर्तमानेन मया" इत्यादिना ग्रन्थसन्दर्भेण ।

आप्तग्रहणेनायुक्ताः शाक्य-भिक्षु-निर्ग्रन्थक- संसारमोचकादीनामागमाभासाः परिहृता भवन्ति । अयुक्तत्वं चैतेषां विगानात्, वि-

---

मुद्बोधकं च जीवनादृष्टमितिवत् जन्मान्तरानुभूतयावदर्थविषयकस्मरणोद्बोधकं योगजन्यमदृष्टमित्यङ्गीकारे बाधकाभावात् । केन वचनेनोवाच इत्याकाङ्क्षायामाह । दशस्वित्यादिना ।

ननु पौरुषेयवाक्यस्यापि पूर्वोक्तरीत्या प्रामाण्यं यद्यङ्गीक्रियते तदा आप्तपदेन कस्य व्यावर्तनं कर्तव्यमित्यत आह । आप्तग्रहणेनेति । अयुक्ताः सदोषाः बाधितार्थप्रतिपादका इति यावत् । के ते अयुक्ता इत्यत आह । शाक्यभिक्षुनिर्ग्रन्थकसंसारमोचकेत्यादि । शाक्याः बौद्धाः, निर्ग्रन्थकाः ग्रन्थेभ्यो निष्क्रान्ताः, वेदादिशास्त्रविरुद्धार्थप्रतिपादका जैनविशेषा इत्यर्थः । संसारमोचकाः कापालिकाः तेषां आगमाभासाः आगमवदाभासन्त इत्यागमाभासाः आगमसादृश्यं च अज्ञातार्थज्ञापकत्वं, तैरपि चैत्यवन्दनादीनां स्वर्गसाधनत्वस्य स्वीयग्रन्थे प्रतिपादिततया तेषां वाक्यानामपि अज्ञातज्ञापकत्वमस्त्येवेति ।

एतेषां आगमाभासानां अयुक्तत्वे हेतुमाह । अयुक्तत्वं चैतेषां विगानादित्यादिना । विरुद्धं गानं विगानमिति व्युत्पत्त्या परस्परविरुद्धार्थकथनादित्यर्थः पर्यवसितः । तथाहि बौद्धानामेव सौत्रान्तिकमाध्यमिकवैभाषिकयोगाचारभेदेन चतुर्विधानां परस्परविरुद्धार्थकथनं सौत्रान्तिकेन ज्ञानवैचित्र्यादर्थोऽनुमेय इत्युच्यते वैभाषिकेन तस्य प्रत्यक्षत्वमुच्यते तृतीयेन तु सर्वस्यापि ज्ञानरूपत्वमेवोच्यते एवं चतुर्थेन सर्वस्य शून्यत्वमेवोच्यते इति परस्परविरुद्धार्थकथनात्तेषां अयुक्तत्वं स्पष्टमेव । केचित्तु विगानात् । मन्वादिभिर्निन्दितत्वादित्यर्थः । तथाच मनुः या वेदबाह्याः स्मृतयो याश्च काश्च कुदृष्टयः । सर्वास्ता निष्फलाः प्रेत्य तमोनिष्ठा हि ताः स्मृताः । इति वदन्ति । नच तथा सति वेदादीनामपि युक्तत्वं न स्यात् तत्रापि उदिते जुहोति अनुदिते जुहोति मा हिंस्यात्सर्वाभूतानि अग्नीषोमीयं पशुमालभेत इत्यादिरीत्या परस्परविरुद्धार्थकथनादिति वाच्यम् । नच मीमांसापरिशोधितन्यायेन सामान्यविशेषभावाद्यङ्गीकरणादिना विरोधो भासमानोऽपि निराक्रियत इति वाच्यम् । तथा सति बौद्धादिग्रन्थेऽपि भासमानस्य विरोधस्य कथञ्चित् निराकरणसम्भवादित्यतो हेत्वन्तरमाह । विच्छिन्नमूलत्वादिति । अपौरुषेयवेदमूलकत्वाभावादित्यर्थः । नच बौद्धाद्यागमस्य वेदमूलकत्वाभावेऽपि सर्वज्ञबौद्धप्रणीतत्वादेव प्रमाणान्तरेणार्थमुपलभ्य विरचिततया चैत्र पुत्रस्ते जात इत्यादिवाक्यवत्प्रामाण्यं सम्भवत्येवेति वाच्यम् । बौद्धादेः सर्वज्ञत्वे प्रमाणाभावात् । अतएवोक्तं भट्टपादैः । सर्वज्ञोऽसाविति ह्येव तत्काले तु बुभुत्सुभिः । तज्ज्ञानज्ञेयविज्ञानरहितैर्ज्ञायते कथम् । कल्पनीयाश्च सर्वज्ञा भवेयुर्बहवस्तव । य एव स्यादसर्वज्ञः स सर्वज्ञं न बुध्यते । सर्वज्ञोऽनवबुद्धश्च येनैव स्यान्न तं प्रति । तद्वाक्यानां प्रमाणत्वं मूलाज्ञानेऽन्यवाक्यवत् । रागादिरहिते चास्मिन् तुच्छांपारे व्यवस्थितिः । ज्ञानान्यप्रणीतैव स्याद्दते प्रत्यवेक्षणात् ॥ इति । अयमस्य निर्गलितोऽर्थः बौद्धः

च्छिन्नमूलत्वात्, प्रमाणविरुद्धार्थाभिधानाच्च, कैश्चिदेव म्लेच्छादिभिः पुरुषापसदैः पशुप्रायैः परिग्रहाद्वा बोद्धव्यम्'

तुशब्देनानुमानाद्यवच्छिनत्ति । वाक्यार्थो हि प्रमेयः, न तु

सर्वज्ञ इति बौद्धज्ञानज्ञेयभूतसर्वपदार्थविषयकज्ञानरहितैर्न ज्ञातुं शक्यम्, अतः तस्य सर्वज्ञत्वे प्रमाणाभावः, यदि च स सर्वज्ञ इति ज्ञानार्थं अन्यः कश्चन सर्वज्ञ अस्तीति कल्प्यते तथापि तस्य सर्वज्ञताज्ञानार्थं अन्यः सर्वज्ञ इति अनेकसर्वज्ञकल्पनापत्तिरितिरीत्या सार्वज्ञं न सिद्ध्यत्येव । किञ्च लाभपूजाख्यात्यादिरागरहितस्य अस्य शब्दोच्चारणमपि न सम्भवितुमर्हति इति तस्य रागादिमत्त्वमकामेनाप्यभ्युपेयं, तथाच रागादिमत्पुरुषोच्चरितस्य अस्य वाक्यस्य विच्छिन्नमूलत्वाद्युक्तत्वं सुदृढमेवेति । अयुक्तत्वे हेत्वन्तरमप्याह । प्रमाणविरुद्धेति । सर्ववादिप्रत्यक्षसिद्धः स एवायं घट इत्यादिप्रत्यभिज्ञाविरुद्धक्षणिकत्वाभिधानादित्यर्थः । परेतु विच्छिन्नमूलत्वात् वेदमूलकत्वाभावादित्यर्थः । नच प्रत्यक्षवेदमूलकत्वाभावेपि शाखान्तरीयदेशान्तरीयोच्छिन्नशाखादिवेदमूलकत्वं तत्रानुमेयमित्यत आह । प्रमाणविरुद्धेति । प्रत्यक्षश्रुतिविरुद्धेत्यर्थः । तथाच औदुम्बरीं स्पृष्ट्वोद्गायति इत्यादिप्रत्यक्षश्रुतिविरुद्धया औदुम्बरी सर्वा वेष्टयितव्या इत्यादिस्मृत्या यथा श्रुतेरनुमानं न भवति, तथा अत्रापि प्रत्यक्षश्रुतिविरुद्धबौद्धाद्यागमेन श्रुतेरप्यनुमानं न सम्भवत्यवेति भावः । एवं तत्र शिष्टाचारोपि श्रुत्यनुमापको न सम्भवतीत्याह । कैश्चिदेवेति । पुरुषापसदैः सङ्करजातीयैः । वाकारः कैमुतिकन्यायबोधकः यदि प्रत्यक्षश्रुतिविरुद्धतया तत्स्मृत्या श्रुत्यनुमानं न सम्भवति, तदा किमु अशिष्टाचारेणेत्यर्थं इति वदन्ति । ननु यथा श्रौतक्रमादिविरोधेऽपि स्मार्ताचमनादीनां प्रामाण्यं तद्वदेव तत्प्रामाण्यं भविष्यतीत्यतो हेत्वन्तरमाह । कैश्चिदेवेति । म्लेच्छादिभिः म्लेच्छसदृशैः, सादृश्यं च 'गोमांसखादको यस्तु विरुद्धं बहु भाषते । सर्वाचारविहीनश्च म्लेच्छ इत्यभिधीयते । इति बौधायनोक्तम्लेच्छधर्मवत्त्वेन । पुरुषापसदैः पुरुषेषु नीचैः प्रतिलोमसङ्करादिरूपैरित्यर्थः । अत एव पशुप्रायैरिति । आहारनिद्राभयमैथुनधर्मंहीनत्वादिरूपपशुवृत्तिधर्मविशिष्टैरित्यर्थः । तथाच पूर्वोक्तश्रुतिस्मृत्योरुदाहरणे पदार्थतावच्छेदकस्य क्रमस्य पदार्थीभूतेनाचमनेन बाधसम्भवेपि अत्र तादृशोदाहरणस्य अप्रकृततया प्रत्युत शिष्टापरिग्रहे स्वस्थायुक्तत्वमेव सेत्स्यतीति भावः । पशुप्रायाणां परधर्मप्रवेशकारणं तु कुसुमाञ्जल्यामुदयनाचार्यैः भूयस्तत्र कर्मलाघवमित्यलसाः इत्यादिना ग्रन्थसन्दर्भेण स्पष्टमेव प्रतिपादितमिति तत एवावगन्तव्यं नेहोच्यते विस्तरभयात्, विशेषत अनाकाङ्क्षितत्वाच्च ।

वैशेषिकास्तु आप्तवचनस्य न प्रमाणान्तरत्वमपि तु अनुमान एवान्तर्भाव इति वदन्ति, तन्मतं दूषयति । तु शब्देनेति । आप्तवचनन्तु इत्यत्रेति शेषः । अनुमानात् पूर्वनिरूपितात्, व्यच्छिनत्ति व्यावर्तयति, आप्तवचनमिति शेषः । ननु तस्य प्रमाणान्तरत्वकल्पने गौरवादनुमान एव तस्यान्तर्भावोऽस्तु इत्यतस्तस्य अनुमानानन्तर्भावे बीजमाह । वाक्यार्थो हीत्यादिना । गौरस्तीत्यादिवाक्यस्य गौरस्तितावतीत्यादिरूपोऽर्थः प्रमेयः तज्ज्ञानं च अनुमानेन न सम्भवितुमर्हति लिङ्गाभावादित्यर्थः । नच वाक्यस्यैव तत्र लिङ्गत्वं सम्भवतीत्यत आह । न तु तद्धर्मो वाक्यमिति । वाक्यं वाक्यार्थधर्मो नास्तीत्यर्थः । अयं भावः, गौरस्तीति वाक्यादस्तितावती गौरित्याकारकोऽनुभवः सर्वे

तद्धर्मो वाक्यम्, येन तत्र लिङ्गं भवेत्। न च वाक्यं वाक्यार्थं बोधयत् सम्बन्धग्रहणमपेक्षते, अभिनवकविरचितस्य वाक्यस्या-दृष्टपूर्वस्याननुभूतचरवाक्यार्थबोधकत्वादिति।

एवं प्रमाणसामान्यलक्षणेषु तद्विशेषलक्षणेषु च सत्सु, यानि प्रमाणान्तराण्युपमानादीनि प्रतिवादिभिरभ्युपेयन्ते तान्युक्तलक्षणे-ष्वेव प्रमाणेष्वन्तर्भवन्ति।

तथा हि—उपमानं तावत् 'यथा गौस्तथा गवयः' इति वाक्यम्।

---

जनप्रसिद्धः, शाब्दप्रामाण्यानङ्गीकर्तृभिः तस्य अनुमान एवान्तर्भावः कर्तव्यः, अनुमाने च गौरस्तितावती गौरस्तीतिवाक्यादिति हेतुः कर्तव्यः, तच्च न सम्भवति हेतोः साध्येन सह सामानाधिकरण्यस्य पक्षवृत्तित्वस्य चावश्यकतया वाक्यरूपहेतोः गोरूपार्थेऽव-समानत्वात्। न च शक्तिरूपसम्बन्धेन वाक्यस्य गोरूपार्थे विद्यमानत्वात् हेतोः पक्षधर्म-त्वं सम्भवत्येवेति वाच्यम्। पदशक्त्यैव निर्वाहे वाक्ये शक्तेरकल्पनात्, शक्तिरूपसम्ब-न्धेनापि वाक्यस्य पक्षेऽसम्भव इति। ननु मेघोन्नत्या वृष्ट्यनुमितिस्थले धर्मधर्मिभावा-भावेऽपि व्याप्यत्वज्ञानादेवानुमितिरित्यनुभवसिद्धम्, व्याप्यत्वञ्चाविनाभावरूपसम्ब-न्धवत्त्वमिति पूर्वमेवोक्तम्। तथा च वाक्यस्याप्यर्थेनाविनाभावरूपसम्बन्धसत्त्वात् वाक्यार्थानुमितौ लिङ्गत्वं सम्भवत्येवेति कुतो न तस्यानुमितावन्तर्भाव इत्याशङ्कामप-हरति। नचेत्यादिना। यथा पर्वतो वह्निमान् इत्यनुमित्यर्थं पूर्वं महानसादौ वह्निना सह धूमस्य सहचारज्ञानापेक्षा न तथा वाक्येन वाक्यार्थस्य बोधे पूर्वं सहचार-ज्ञानापेक्षेति भावः। नच शब्दस्यातिरिक्तप्रमाणत्वापत्तिभिया तत्रापि व्याप्तिज्ञानं कल्पयित्वा क्षणविलम्बेनैव तत्र बोधो भवतीत्यभ्युपेयम्। नच गवादौ वाक्यस्य शक्तिरूपसम्बन्धाभावेन लिङ्गत्वमेव न सम्भवतीति वाच्यम्। एतानि पदानि तात्पर्यविषयस्मारितपदार्थसंसर्गप्रमापूर्वकाणि आकाङ्क्षादिमत्पदकदम्बत्वादित्या-दिरीत्या पक्षे हेतोः सत्त्वसम्भवादित्यत आह। अभिनवकविरचितस्येति। तथा च यस्य वाक्यस्य पूर्वं तदर्थेन सह सम्बन्धो नानुभूतः तादृशवाक्यार्थबोधस्य व्या-प्तिज्ञानजन्यत्वासम्भवेन तस्यानुमितावन्तर्भावयितुमशक्यतया तद्व्यतिरिक्तत्वसि-द्धिरिति भावः। एवमनुमानस्य शाब्दरूपत्वे आत्मा वाऽरे द्रष्टव्यः श्रोतव्यो मन्तव्यः इत्यादौ पौनरुक्त्यापत्तिरित्यादीनि दूषणानि तत्तद्ग्रन्थोक्तानि बहूनि सन्ति विस्त-रभयान्नोच्यन्ते।

प्रमाणसामान्यलक्षणं तद्विशेषलक्षणानि चोक्त्वा सर्वप्रमाणसिद्धत्वादित्यादिपू-र्वकारिकाव्याख्यानावसरे त्रिष्वेव सर्वेषां प्रमाणानामन्तर्भाव इत्युक्तं स्मारयति। एवमित्यादिना। उपमानादीनीति। आदिपदादर्थापत्त्यनुपलब्धिसम्भवैतिह्यपरिग्रहः। प्रतिवादिभिः नैयायिकवेदान्तिमीमांसकादिभिः, उक्तलक्षणेषु प्रतितिविषया व्यवस यो दृष्टम् इत्यादिग्रन्थेन कथितलक्षणेषु प्रत्यक्षानुमानागमेषु अन्तर्भवन्तीत्यर्थः।

कथमुक्तलक्षणेषु तेषामन्तर्भाव इत्यत्राह। तथा हीति। तत्र प्रथमं उपमानस्वरूपं दर्शयति। उपमानं तावदिति। उपमानस्य नैयायिकमतेन स्वरूपं प्रदर्शयति। यथा गौस्तथा गवय इति वाक्यमिति। तथा च नैयायिकाः। यथा केनचिन्नागरिकेण की-

तज्जनिता धीरागम एव ।

योऽप्ययं 'गवयशब्दो गोसदृशस्य वाचकः' इति प्रत्ययः, सोऽप्यनुमानमेव । यो हि शब्दो यत्र वृद्धैः प्रयुज्यते, सोऽसति वृत्त्यन्तरे तस्य वाचकः, यथा गोशब्दो गोत्वस्य, प्रयुज्यते चैवं गवयशब्दो गोसदृशे, इति तस्यैव वाचक इति तद् ज्ञानमनुमानमेव ।

यत्तु गवयस्य चक्षुःसन्निकृष्टस्य गोसादृश्यज्ञानं तत् प्रत्यक्ष-

दृशो गवय इत्येवं रूपेण पृष्टः कश्चन वनेचरः गोसदृशो गवय इति वाक्यं प्रयुङ्क्ते तद्वाक्यमेवोपमानमिति वर्णयन्ति । तदेवोक्तं न्यायसूत्रे "प्रसिद्धसाधर्म्यात्साध्यसाधनमुपमानमिति । प्रसिद्धेन गवा साधर्म्यात् साध्यस्य अप्रसिद्धस्य गवयादेः साधनं यस्माद्वाक्यात्तदुपमानमित्यर्थः । तस्य प्रमाणान्तरत्वं दूषयति । तज्जनिता धीरित्यादिना । तज्जन्यज्ञानस्य वाक्यजन्यतया आगमत्वमेव नतु प्रमाणान्तरत्वमिति भावः । तथा चाहुः प्रशस्तपादाचार्याः आप्तेनाप्रसिद्धगवयस्य गवा गवयत्वप्रतिपादनादुपमानमाप्तवचनमेवेति ।

ये च नैयायिकाः 'समाख्यासम्बन्धप्रतिपत्तिरुपमानार्थः' इति न्यायवार्तिकरीत्या गोसदृशो गवय इति वनेचरवाक्यं श्रुत्वा वनं गतस्य प्रामाणस्य अरण्ये गोसदृशं पिण्डं पश्यतः अयं गोपदवाच्यः इत्याकारकं ज्ञानं यज्जायते तदेवोपमितिरिति वर्णयन्ति । तन्मतमुपन्यस्य दूषयति । योऽप्ययमिति । गवयशब्दो गोसदृशस्य वाचक इत्यपि यः प्रत्ययः सोऽप्यनुमानमेवेति योजना । तथाच तस्यानुमान एवान्तर्भावसम्भवे न पृथक् प्रामाण्यकल्पनं युक्तमिति भावः । अत्र गोसादृश्यस्य गवयपदशक्यतावच्छेदकत्वमुक्तमिति नो भ्रमितव्यम् गवयत्वजात्यपेक्षया गुरुतया तस्य शक्यतानवच्छेदकत्वात्, अपि तु गवयत्वजातिपरिचायकमेव तदिति ध्येयम् । कथं तस्यानुमानेऽन्तर्भाव इत्यत्राह । यो हीति । असति वृत्त्यन्तर इति । लक्षणागौणीवृत्त्योरभाव इत्यर्थः । तेन गङ्गायां घोष इत्यत्र गङ्गापदस्य गङ्गातीररूपार्थे प्रयुज्यमानत्वेपि तस्य तद्वाचकत्वाभावात्, सिंहो माणवक इत्यादौ सिंहपदस्य सिंहसदृशरूपार्थे प्रयुज्यमानत्वेपि तद्वाचकत्वाभावाद्व्यभिचारो निरस्तः । गोत्वस्येति । एतेन जातावेव शक्तिः, न व्यक्तौ व्यक्तीनामानन्त्यात् व्यभिचाराच्च इति ध्वनितम् । तथाच गवयशब्दः गोसदृशनिष्ठगवयत्वावच्छिन्नवाच्यतानिरूपितवाचकतावान् लक्षणागौणीवृत्त्योरभावे सति वृद्धैस्तत्र प्रयुज्यमानत्वात् गोत्वे प्रयुज्यमानगोपदवत् इत्यनुमानेनैव गवयपदवाच्यत्वसिद्धौ सत्यां तस्य प्रमाणान्तरत्वं न सम्भवत्येवेति ।

एवं च 'सम्बन्धस्य परिच्छेदः संज्ञायाः संज्ञिना सह । प्रत्यक्षादेरसाध्यत्वादुपमानफलं विदुः । इत्युदयनाचार्योक्तिरपि अनेनैव निराकृता' तस्योक्तरीत्या प्रत्यक्षाद्यसाध्यत्वाभावात् ।

केचित्तु यथा गौस्तथा गवय इत्यतिदेशवाक्यं श्रुत्वा वनं गतस्य गवयसन्निकर्षे सति अयं गवयः मद्गोसदृशः इत्याकारकं यज्ज्ञानं तदुपमितिरिति वदन्ति । तन्मतं दूषयति । यत्त्वित्यादिना । अयमर्थः, गवयो गोसदृशः इत्याकारकं यज्ज्ञानं तस्य प्रमाणान्तरत्वं नाङ्गीकार्यं तज्ज्ञानस्य गवयांशे प्रत्यक्षत्वात्, गवांशे च स्मरणरूपत्वात् इति न तस्य प्रमाणान्तरत्वम् ।

मेव । अत एव स्मर्यमाणायां गवि गवयसादृश्यज्ञानं प्रत्यक्षम् । न त्वन्यद्गवि सादृश्यम् अन्यच्च गवये । भूयोऽवयवसामान्ययोगो हि जात्यन्तरवर्ती जात्यन्तरे सादृश्यमुच्यते । सामान्ययोगश्चैकः । स चेद्गवये प्रत्यक्षः, गव्यपि तथेति नोपमानस्य प्रमेयान्तरमस्ति, यत्र प्रमाणान्तरमुपमानं भवेत्, इति न प्रमाणान्तरमुपमानम् ।

---

मीमांसकास्तु गोसदृशो गवय इति वाक्यार्थज्ञानानन्तरं वनं गतस्य गवयो गोसदृशः इति ज्ञानानन्तरं मदीया गौरनेन सदृशी इत्याकारकं यज्ज्ञानं तदेवोपमितिः, तस्य च गवा इन्द्रियसन्निकर्षाभावेन न प्रत्यक्षरूपता, नाप्यनुमितिरूपत्वं गवयनिष्ठस्य गोसादृश्यस्य पक्षीभूतगोनिष्ठत्वाभावेन अतल्लिङ्गत्वात्, नापि शाब्दबोधरूपत्वं वाक्यार्थज्ञानाजन्यत्वात्, इति रीत्या प्रमाणान्तरत्वसिद्धिरिति वदन्ति । तन्मतं दूषयति । अत एवेति । गोनिष्ठगवयसादृश्यस्य प्रत्यक्षत्वादेवेत्यर्थः । स्मर्यमाणायां गवि गवयसादृश्यस्य प्रत्यक्षत्वे हेतुमाह । न त्वन्यदिति । हि यतः गवि गवयसादृश्यं गवये गोसादृश्यादन्यन्नेत्यर्थः । तथाच गवये गोसादृश्यस्य प्रत्यक्षत्वात् गव्यपि तत्सादृश्यस्य प्रत्यक्षत्वमेवेति भावः । गवयनिष्ठगोसादृश्याद्गोनिष्ठगवयसादृश्यस्याभेदे हेतुमाह । भूयोवयवेति । भूयसां अवयवानां खुरविषाणादीनां यानि सामान्यानि खुरत्वादीनि तेषां योगः सम्बन्ध एव सादृश्यं, यद्यपि खुरत्वादेः सम्बन्धः खुरादावेव नतु गवि इति कथं सादृश्यं अवयविनि स्यात्, तथापि स्वसमवायिसमवेतत्वसम्बन्धेन खुरत्वस्यैव सादृश्यरूपतया तस्य च गवि गवये च वर्तमानत्वेन तस्य च एकत्वेन उभयोरपि सादृश्यं एकमेवेति न दोषावकाशः । इदं च प्रकृतस्थलाभिप्रायेण । सिंहो माणवकः इत्यादौ तु सिंहसादृश्यं माणवके न भूयोवयवसामान्ययोगरूपं सिंहावयववृत्तीनां खुरत्वादीनां स्वसमवायिसमवेतत्वसम्बन्धेन माणवकादावभावात्, अपि तु सिंहवृत्तिभूयोगुणसामान्ययोगरूप एव सिंहगुणवृत्तीनां क्रोधत्वक्रूरत्वरूपाणां भूयसां सामान्यानां योगस्य तत्र सत्त्वादिति । तथाच स्वावयवेषु समवेतैः सामान्यैः येन प्रकारेण स्वस्य योगः तथैव स्वभिन्ने तेषां योग एव सादृश्यमिति न तस्य अप्रत्यक्षत्वसम्भव इति । यद्यपि यथा अनुमित्यादिस्थले पर्वतः प्रत्यक्षः वन्हिश्च स्मर्यमाणः तथापि तयोः सम्बन्धस्य केनापि प्रमाणान्तरेणाप्राप्ततया अनुमितिरूपं प्रमित्यन्तरमङ्गीक्रियते एवमेव गोः स्मर्यमाणत्वे गवयसादृश्यस्य प्रत्यक्षत्वेपि च तयोः सम्बन्धस्य केनापि प्रमाणान्तरेणाप्राप्ततया उपमितेरपि प्रमित्यन्तरत्वमङ्गीकार्यं इति शक्यते वक्तुम् । तथापि तयोः सम्बन्धस्य अनुमेयत्वाङ्गीकारेणैवोपपत्तौ प्रमाणान्तरत्वाङ्गीकारे प्रमाणाभावः । नच मदीया गौरनेन सदृशी इति ज्ञानस्यानुमानरूपत्वं न सम्भवति हेत्वभावादिति वाच्यम् । गवयनिष्ठगोसादृश्यस्यैव तत्र हेतुत्वसम्भवात् । नच गवयनिष्ठगोसादृश्यस्य न हेतुत्वं सम्भवति तस्य पक्षीभूतगव्यवृत्तित्वादिति वाच्यम् । गवयनिष्ठसादृश्यप्रतियोगित्वस्यैव तत्र हेतुत्वसम्भवात् तस्य च पक्षधर्मत्वात् इति । एवंविधानुमानानवतारेपि गवि गवयसादृश्यस्य ज्ञानेन गवयसदृशत्वेन गामुपमिनोमीत्यनुव्यवसायाच्च उपमानस्य प्रमाणान्तरत्वमङ्गीकार्यमिति मीमांसकादीनामाशयः । अत्र च अनुभव एव प्रमाणमिति नात्र विशेषतो वक्तव्यमव-

एवमर्थापत्तिरपि न प्रमाणान्तरम् ।

तथा हि जीवतश्चैत्रस्य गृहाभावदर्शनेन बहिर्भावस्याऽदृष्टस्य कल्पनमर्थापत्तिरभिमता वृद्धानाम् । साऽप्यनुमानमेव । यदा खल्वव्यापकः सन्नेकत्र नास्ति तदाऽन्यत्रास्ति । यदाऽव्यापक एकत्रा-

शिष्यते । अधिकमन्यत्रानुसन्धेयम् ।

तदेवं उपमानस्य तत्तन्मतानुसारेण प्रत्यक्षादिषु अन्तर्भावं कृत्वा अर्थापत्तेः प्रमाणान्तरत्वनिरासायाह । एवमर्थापत्तिरपीत्यादि । तत्र मीमांसकाद्यभिमतमर्थापत्तिस्वरूपमाह । तथाहीत्यादिना । शतवर्षजीवी चैत्र इति ज्योतिःशास्त्रादवगतजीवनस्य चैत्रस्य गृहाभावदर्शनेन अदृष्टस्य अज्ञातस्य, बहिर्भावस्य कल्पनमर्थापत्तिरिति मीमांसकानामभिमतमित्यर्थः । अयमत्र मीमांसकाभिप्रायः, उपपाद्यज्ञानेन उपपादकज्ञानमर्थापत्तिः । अन्येन केनचित्कल्पनीयेन विना यत् न उपपद्यते तत् उपपाद्यं इत्युच्यते, येन विना नोपपद्यते तदुपपादकम् एवं च उपपाद्यज्ञानं अर्थापत्तिकरणम् उपपादकज्ञानं च अर्थापत्तिः । सा च अर्थापत्तिर्द्विविधा, दृष्टार्थापत्तिः श्रुतार्थापत्तिश्चेति । तत्र दृष्टार्थापत्तिस्तावद्यत्र शब्दातिरिक्तप्रमाणेन उपपाद्यज्ञानं तज्जन्योपपादकज्ञानरूपा, यथा जीवतश्चैत्रस्येत्यादिपूर्वोक्ता, श्रुतार्थापत्तिश्च यत्र शब्दप्रमाणेन उपपाद्यज्ञानं तज्जन्योपपादकज्ञानस्वरूपा, यथा पीनो देवदत्तो दिवा न भुङ्क्ते इत्यादौ- तत्र हि पीनो देवदत्तो दिवा न भुङ्क्ते इति वाक्यश्रवणानन्तरं दिवाऽभुञ्जानस्य पीनत्वरूपोपपाद्यज्ञानं ततश्च रात्रिभोजनरूपस्योपपादकस्य ज्ञानं भवतीति रीत्या श्रुतार्थापत्तित्वं, यद्यपि दृष्टपदस्य ज्ञानमात्रार्थकतया श्रुतार्थापत्तेरपि दृष्टार्थापत्तावेवान्तर्भावो भवति तथापि गोबलीवर्दन्यायेन दृष्टपदस्य शाब्दबोधातिरिक्तप्रमाणजन्योपपाद्यज्ञानपरत्वं बोध्यम् । सा च प्रमाणान्तरं, तथाहि तद्विषयस्य बहिर्भावादेः चक्षुराद्यसन्निकृष्टतया प्रत्यक्षत्वं न सम्भवत्येव । नाप्यनुमानत्वं अनुमाने हि साध्यसाधनयोर्व्याप्तिज्ञानस्य कारणत्वं सर्ववादिसिद्धं अस्य च अनुमानत्वं वदता गृहासत्त्वे सति जीवित्वस्य हेतुता बहिःसत्त्वस्य च साध्यता अङ्गीकार्या तच्च न सम्भवति बहिःसत्त्वरूपसाध्यव्याप्तेः पूर्वोक्तहेतौ ज्ञानाभावेपि तादृशज्ञानोत्पादात् तादृशव्याप्तिज्ञानसत्त्वे तस्या अनुमितित्वमिष्यते एव, अर्थापत्तिरूपता तु यत्र यत्र गृहासत्त्वे सति सत्त्वाभावः तत्र तत्र जीवित्वाभावः इति ज्ञाने सति यत् बहिःसत्वस्य ज्ञानं तस्यैव । तत्तु नानुमितिरूपं सम्भवति साध्याभावे साधनाभावनिरूपितव्याप्तिज्ञानस्य साधनेन साध्यानुमितावप्रयोजकत्वात् । नाप्युपमितिरूपत्वं सादृश्यज्ञानकरणकत्वाभावात्-एवं शब्दज्ञानकरणकत्वाभावान्न शाब्दरूपत्वस्यासम्भवेन अनुपलब्धिकरणकत्वाभावेन अनुपलब्धिरूपत्वस्याऽप्यसम्भवेन प्रमाणान्तरत्वसिद्धिरिति । तदेन्मतं दूषयति । साप्यनुमानमेवेति । पूर्वोक्तार्थापत्तेरनुमानत्वे तस्या व्याप्तिज्ञानसध्यत्वावश्यकत्वाद्व्याप्तिज्ञानं दर्शयति । यदा खल्विति । तथाच चैत्रः बहिरस्ति गृहासत्त्वे सति जीवित्वात् अहमिव इत्यनुमानेनैव बहिःसत्त्वसिद्धिरित्यर्थः । इदञ्चानुमानं यत्र जीवतो गृहासत्त्वम् तत्र बहिःसत्त्वम् इति ज्ञानात् यत्र च बहिरसत्त्वं तत्र जीवित्वे सति गृहासत्त्वभावः इत्युभयविधव्याप्तिज्ञानादपि सम्भवति, तत्र च प्रथमव्याप्तिज्ञानं दर्शयति । यदा खल्विति । सन् विद्यमानः

स्ति तदाऽन्यत्र नाऽस्ति, इति सुकरः स्वशरीरे व्याप्तिग्रहः। तथा च सतो गृहाभावदर्शनेन लिङ्गेन बहिर्भावदर्शनमनुमानमेव। न च चैत्रस्य क्वचित्सत्त्वेन गृहाभावः शक्योऽपह्नोतुम्, येनाऽसिद्धो गृहाभावो बहिर्भावे न हेतुः स्यात्। न च गृहाभावेन वा सत्त्वमप-

जीवन्निति यावत्, एकत्र गृहे नास्ति तदाऽन्यत्र बहिरस्ति इति स्वशरीरे व्याप्तिग्रहः सुकर इति योजना। तथाच यत्र यत्र जीवित्वे सति एकत्रावर्तमानत्वं तत्र तत्रान्यत्र वर्तमानत्वमिति व्याप्तिः पर्यवसिता, अत्र जीवित्वपदोपादानात् ध्वस्तघटस्य एकत्र भूतलादौ अवर्तमानत्वसत्त्वेपि अन्यत्र वर्तमानत्वाभावात् न व्यभिचारः। पूर्वोक्त-व्याप्त्या चैत्रे बहिःसत्त्वज्ञानस्यानुमानरूपत्वसम्भवेपि यत्र चैत्रस्य बहिःसत्त्वद् र्शनेन गृहासत्त्वं ज्ञायते तत्र तादृशज्ञानस्य नानुमितिरूपत्वं अपि तु अर्थापत्तिरूप त्वमेव स्यात् तत्प्रयोजकव्याप्तिज्ञानाभावात् इत्याशङ्कायां तादृशस्थलेपि व्याप्तिज्ञानं प्रदर्शयन् अनुमितिरूपत्वं स्पष्टयति। यदा अव्यापक इति। अव्यापकः परिच्छिन्न-परिमाणवान्, तथाच परिच्छिन्नपरिमाणवत्त्वे सति एकत्र सत्त्वं यत्र यत्र तत्र तत्र अन्यत्रावर्तमानत्वम् इति व्याप्तिज्ञानस्यापि स्वशरीरान्तर्भावेण सुघटतया तादृशव्या-प्तिज्ञानादेव चैत्रस्य गृहासत्त्वज्ञानमनुमानरूपं सम्भवतीति न तदर्थं अर्थापत्तिरूप-प्रमाणान्तरस्वीकार इति भावः। अत्र च अव्यापकपदं सर्वव्यापकस्य गगनादेः एकत्र वर्तमानत्वेपि अन्यत्रावर्तमानत्वाभावाद्व्यभिचारवारणाय। ननु भवतु पूर्वोक्तरीत्या व्याप्तिज्ञानं ततः किमित्यत आह। तथाचेति। व्याप्तिज्ञानस्य सत्त्वादित्यर्थः। सतो जीवतश्चैत्रस्य, गृहाभावदर्शनेन लिङ्गेन जन्यं बहिर्भावज्ञानमनुमानमेवेत्यर्थः। यद्यपि गृहाभावदर्शनस्य न लिङ्गत्वमपि तु गृहाभावस्यैव तथापि लिङ्गपदं लिङ्ग ज्ञानपरं तस्यैव अनुमितौ कारणत्वात्। परे तु यदा सन्नेकत्र नास्ति तदा अन्यत्रास्ति इति अन्वयव्याप्तिं प्रदर्श्य व्यतिरेकव्याप्तिं दर्शयति। यदा अव्या-पक इत्यादिना। नच व्यतिरेकव्याप्तिस्थले हेत्वभावस्य साध्याभावव्यापकत्वमाव श्यकमिति कथं उक्तज्ञानस्य व्यतिरेकव्याप्तिज्ञानरूपता सम्भवति तत्र अन्यत्रासत्त्व-रूपसाध्याभावव्यापकत्वस्य अन्यत्र सत्त्वरूपहेत्वभावेऽबोधनादिति वाच्यम्। यदा अन्यत्र नास्ति तदा एकत्रास्तीति योजनया तादृशार्थलाभसम्भवादिति वदन्ति। तत्र च अव्यापकपदस्य वैयर्थ्यापत्तिर्दुर्वारैवेति। व्यतिरेकव्याप्तेरपि अनयैव रीत्या स्वशरीरान्तर्भावेण सुग्रहत्वं बोध्यम्। तथा च चैत्रः बहिरस्ति गृहनिष्ठात्यन्ताभाव-प्रतियोगित्वे सति जीवित्वादित्यनुमानं फलितम्। न च सत्त्वासत्त्वयोः परस्परं विरुद्धतया एकस्मिन् तदुभयज्ञानस्यासम्भवेन पक्षधर्मताज्ञानाभावात्कथमनु-मितिरित्याशङ्कामपहरति। नच चैत्रस्येति। चैत्रस्य क्वचित्सत्त्वेन अपह्नोतुं अपनेतुं न शक्य इत्यर्थः। येन असिद्धः चैत्ररूपपक्षे अवृत्ति, गृहाभावो बहिर्भावे हेतुर्न स्यादि-त्यर्थः। एवं गृहासत्त्वस्य सत्त्वप्रतिबन्धकतया कथं गृहासत्त्वे सति सत्त्वरूपसाध्य ज्ञानं पक्षे सम्भवेदित्याशङ्कामपहरति। नचेति। गृहाभावेन गृहासत्त्वेन सत्त्वं सत्त्व-सामान्यम्, तेन गृहासत्त्वस्य गृहसत्त्वप्रतिबन्धकत्वेपि न क्षतिः। यद्यपि गृहास-त्त्वबुद्धेः प्रतिबन्धकत्वेपि गृहासत्त्वस्य न गृहसत्त्वप्रतिबन्धकत्वं तथापि अत्र प्रति बन्धपदार्थः तज्ज्ञानविरोधिज्ञानविषयतावच्छेदकधर्मवत्त्वरूप एव। तथा च गृहास-

पह्नूयते, येन सत्त्वमेवाऽनुपपद्यमानमात्मानं न वहिरवस्थापयेत् ।

तथा हि—चैत्रस्य गृहासत्त्वेन सत्त्वमात्रं विरुध्यते, गृहसत्त्वं वा । न तावद्यत्र क्वचन सत्त्वस्याऽस्ति विरोधो गृहासत्त्वेन, भिन्न

---

त्वस्य गृहसत्त्वग्रहे प्रतिवन्धकीभूतगृहासत्त्वज्ञानविषयतावच्छेदकधर्मवत्त्वस्य सत्त्वासत्त्वस्य तत्प्रतिवन्धकत्वोक्तिः संगतैवेति । अपन्हूयते प्रतिवध्यते, तथाच सत्त्वसामान्यवत्ताबुद्धिं प्रति सत्त्वसामान्याभाववत्तानिश्चयस्यैव प्रतिवन्धकतया तस्य चात्रासत्त्वेन सत्त्वबुद्धेरपि उत्पत्तौ न किंचिद्बाधकम् । केचित्तु गृहासत्त्वे सति सत्त्वस्य हेतुत्वे वहिःसत्त्वस्य साध्यत्वं न सम्भवत्येव वहिःसत्त्वरूपसाध्यानुमितिं प्रति गृहासत्त्वनिश्चयरूपस्य हेतुनिश्चयस्य प्रतिवन्धकत्वात् इत्याशङ्कामपहर्तुमाह । नचेति । इति वदन्ति । तन्न तद्वत्ताबुद्धिं प्रति तदभाववत्तानिश्चयस्य कार्यसहभावेन प्रतिवन्धकतया गृहासत्त्वे सति सत्त्वरूपहेतुमत्तानिश्चयस्यैवासम्भवरूपशङ्कासम्भवे साध्यानुमित्यसम्भवशङ्कानुसरणे प्रयोऽनाभावः । ननु गृहासत्त्वबुद्धेः सामान्यबुद्धिप्रतिवन्धकत्वे का क्षतिरित्यत आह । येनेति । सत्त्वमनुपपद्यमानं अनिश्चीयमानं, आत्मानं न वहिरवस्थापयेत् वहिःसत्त्वानुमापकं न भवेत इत्यर्थः । तथा च चैत्रो वहिरस्ति गृहासत्त्वे सति सत्त्वादित्यत्र न गृहासत्त्वमात्रस्य हेतुता सम्भवति मृतस्यापि तस्य गृहासत्त्वेन तत्र च वहिःसत्त्वाभावेन व्यभिचारात्, अपि तु सत्त्वविशिष्टस्यैव तस्य, तथाच सत्त्वविशिष्टगृहासत्त्वनिश्चयो न सम्भवत्येव चैत्रे, सत्त्वगृहासत्त्वनिश्चययोः कार्यसहभावेन प्रतिवन्धकत्वात् इति कथं वहिःसत्त्वज्ञानस्यानुमितिरूपत्वं भवेदिति शङ्काकर्तुरभिप्रायः, स च गृहासत्त्वनिश्चयस्य सत्त्वबुद्धिं प्रति प्रतिवन्धकत्वाभावात् अयुक्त एवेति तात्पर्यम् ।

सत्त्वसामान्यनिश्चयः गृहासत्त्वबुद्धिं प्रति एवं गृहासत्त्वनिश्चयः सत्त्वसामान्यबुद्धिं प्रति न विरुणद्धि इत्यभिहितम्, तत्र च सत्त्वासत्त्वयोर्विरोधस्य सर्वलोकसिद्धतया तस्य वाङ्मात्रेणापलापासम्भवात् तयोरविरोधे हेतुरवश्यं वक्तव्यः इति तयोरविरोधप्रदर्शनायाह । तथाहीत्यादि । गृहासत्त्वसत्त्वयोर्विरोधं वाद्यभिमतं विकल्पयति । चैत्रस्येति । सत्त्वमात्रम् देशविशेषानवच्छिन्नं सत्त्वसामान्यम्, तत्राद्यं विकल्पं निराकरोति । न तावदिति । यत्र क्वचन सत्त्वस्य सत्त्वसामान्यस्य, गृहासत्त्वेन सह विरोधो नास्तीत्यर्थः । अत्रैव हेतुमाह । भिन्नविषयत्वादिति । गृहासत्त्वस्य विषयः गृहात्मकः प्रदेशः सत्त्वस्य तु इतरप्रदेशोपीति भिन्नविषयत्वान्न विरोधः, अग्नीषोमीयं पशुमालभेत इतिशास्त्रेण मा हिंस्यात्सर्वाभूतानीति शास्त्रस्य भिन्नविषयत्वादविरोध इवेत्यर्थः । तथाच तद्धर्मिकतद्धर्मावच्छिन्नप्रकारताशालि ज्ञानं प्रति तद्धर्मिक तद्धर्मावच्छिन्नप्रतियोगिताकाभावप्रकारकनिश्चयस्यैव विरोधित्वं, न तु तत्प्रतियोगिकाभावप्रकारकस्य तस्य, तथा सति भूतले नीलघटो नास्तीत्याकारकनिश्चयस्यापि भूतलं घटवदित्याकारकज्ञानप्रतिवन्धकत्वापत्तिः, तथाच तयोरविरोधान्न गृहासत्त्वनिश्चयस्य सत्त्वसामान्यबुद्धिप्रतिवन्धकत्वमिति भावः । ननु गृहासत्त्वेन यत्र क्वचन सत्त्वस्य मास्तु विरोधः भिन्नविषयत्वात् । तथापि चैत्रो वहिरस्ति गृहासत्त्वे सति सत्त्वादित्यत्र चैत्रे सत्त्वसामान्यज्ञानस्यावश्यकतया तदन्तःपातिगृहसत्त्वस्यापि तत्र ज्ञाततया गृहासत्त्वज्ञानं न सम्भवति तयोः समानविषयत्वेन विरोधा

विपयत्वात् । देशसामान्येन गृहविशेषाक्षेपोऽपि पाक्षिक इति समान-विपयतया विरोध इति चेत्, प्रमाणविनिश्चितस्य गृहेऽसत्त्वस्य पाक्षिकतया सांशयिकेन गृहसत्त्वेन प्रतिक्षेपायोगात् । नाऽपि प्रमाणविनिश्चितो गृहाभावः पाक्षिकमस्य गृहसत्त्वं प्रतिपिक्षन् सत्त्वमपि प्रतिक्षेप्तुं सांशयिकत्वं च व्यपनेतुमर्हतीति युक्तम् । गृहावच्छिन्नेन चैत्राभावेन गृहसत्त्वं विरुद्ध्यते, न तु सत्त्वमात्रम्, तस्य तत्रौदासीन्यात् । तस्माद्गृहाभावेन लिङ्गेन सिद्धेन सतो बहिर्भावोऽनुमीयत इति युक्तम् ।

---

दित्याशङ्कते । देशसामान्येनेति । निखिलदेशत्वेनेत्यर्थः । गृहविशेषाक्षेपः । गृहविशेषप्राप्तिः, तथाच जीवित्वाश्रयस्य चैत्रस्य पक्षीकृतत्वेन सत्त्वमाश्रयसामान्यमाक्षिपद्देशसामान्यमप्याक्षिपति, देशसामान्यमाक्षिपता च तेन देशविशेषोपि आक्षिप्यते इति पक्षे प्राप्ततया समानविषयतया विरोधः स्यादित्याशयः । तथाच हेतुमत्वाज्ञानासम्भवेन न अनुमितिः सम्भवतीत्यर्थः । उक्ताशङ्कां परिहरति । प्रमाणविनिश्चितेत्यादिना । प्रमाणविनिश्चितस्य प्रत्यक्षरूपप्रमाणेन निश्चितस्य, गृहासत्त्वस्य सांशयिकेन गृहसत्त्वेन प्रतिक्षेपायोगात् प्रतिबन्धासम्भवात्; निश्चयात्मकगृहासत्त्वबुद्धिं प्रति संशयात्मकगृहसत्त्वज्ञानस्य प्रतिबन्धकत्वासम्भवात्, अन्यथा संशयस्य निश्चयप्रतिबन्धकत्वे संशयानन्तरं कुत्रापि निश्चयो न स्यादिति भावः । गृहसत्त्वस्य सांशयिकत्वे हेतुमाह । पाक्षिकतयेति । पक्षे प्राप्तत:या निश्चितत्वासम्भवादित्यर्थः । ननु मास्तु अनिश्चितस्य गृहसत्त्वस्य निश्चितगृहासत्त्वप्रतिबन्धकत्वं तथापि निश्चितगृहासत्त्वस्य गृहसत्त्वप्रतिबन्धकत्वमिव तदाक्षेपकसत्त्वसामान्यप्रतिबन्धकत्वं स्यादित्याशङ्कामपहरति । नापीति । प्रमाणेन विनिश्चितः गृहाभावः अस्य चैत्रस्य गृहसत्त्वं प्रतिक्षिपन् सत्त्वमात्रमपि प्रतिक्षेप्तुं अर्हतीत्यपि न युक्तं इत्यन्वयः । तथा गृहसत्त्वस्य सांशयिकत्वं व्यपनेतुं अर्हतीत्यपि युक्तम् इत्यर्थः । ननु नापीत्यस्य गृहसत्त्वस्य सांशयिकत्वं व्यपनेतुमर्हतीत्यनेनाप्यन्वयः । प्रमाणविनिश्चितस्य गृहासत्त्वस्य गृहसत्त्वप्रतिक्षेपकताया पूर्वमेवोक्ततया तेन सह विरोधापत्तेः । गृहासत्त्वस्य सांशयिकस्याप्रतिक्षेपे गृहासत्त्वनिश्चयेपि गृहसत्त्वसंशयस्याङ्गीकार्यत्वे गृहासत्त्वनिश्चये गृहासत्त्वसंशयस्यैव फलत अङ्गीकृततया सर्वजनसिद्धस्य समानधर्मिकसमानप्रकारकसंशयस्य तथानिश्चयासमानाधिकरणताया अप्यपलापापत्तेः । तस्मान्नापीत्यस्य नोभयत्रान्वयः अपि तु पूर्वत्रैवेति । एतदेव विशदयति । गृहावच्छिन्नेनेति । गृहनिष्ठेन चैत्राभावेनेत्यर्थः । सत्त्वमात्रस्याविरोधित्वे हेतुमाह । तत्रेति । तत्र सत्त्वमात्रे, तस्य गृहासत्त्वस्य, औदासीन्यात् भिन्नविषयत्वादित्यर्थः । अर्थापत्तेरनुमानेऽन्तर्भावमुपसंहरति । तस्मादिति यस्माच्चैत्रे गृहासत्त्वे सति सत्त्वं सिद्धं तस्माद्गृहाभावेन सिद्धेन लिङ्गेन जीवतश्चैत्रस्य बहिर्भावो अनुमीयते अनुमित्यात्मकज्ञानविषयः इति युक्तम् निर्दोषतया न्यायसिद्धमित्यर्थः । तथाच तादृशस्थले बहिर्भावस्य अनुमित्यात्मकज्ञानेनैव सिद्धतया न तत्सिद्ध्यर्थमर्थापत्तिरूपप्रमाणान्तरस्वीकारावश्यकतेति भावः ।

केचित्तु चैत्रस्य गृहासत्त्वं तावत्प्रत्यक्षस्य विषयः, सत्त्वं ज्योतिःशास्त्रस्य तत्र

एतेन—विरुद्धयोः प्रमाणयोर्विषयव्यवस्थयाऽविरोधापादनमर्थापत्तेर्विषय इति निरस्तम्, अवच्छिन्नानवच्छिन्नयोर्विरोधाभावात् । उदाहरणान्तराणि चार्थापत्तेरेवमेवानुमानेऽन्तर्भावनीयानि । तस्मान्नानुमानात्प्रमाणान्तरमर्थापत्तिरिति सिद्धम् ।

एवमभावोऽपि प्रत्यक्षमेव । न हि भूतलस्य परिणामविशेषात् कैव-

---

वएकस्य प्रामाण्ये अन्यस्य प्रामाण्यं विरुद्ध्यते अतस्तुल्यबलयोर्द्वयोः प्रामाणयोर्विरोधप्रसक्तौ प्रत्यक्षप्रमाणस्य गृहासत्त्वविषयकत्वेन शास्त्रस्य च बहिःसत्त्वविषयकत्वेनाविरोधापादनं अर्थापत्तेर्विषय इति वदन्ति । तन्मतं दूषयितुमुपन्यस्यति । एतेनेति । पूर्वोक्तयुक्त्या अर्थापत्तेरनुमानान्तर्गतत्वेन वक्ष्यमाणेन हेतुना च, नच विरुद्धयोः प्रमाणयोरविरोधापादनरूपस्यार्थापत्तेः विषयस्य कथमनुमानेऽन्तर्भावः स्यादित्याशङ्क्य प्रमाणयोर्विरोध एव नास्तीत्याशयेन परिहरति । अवच्छिन्नानवच्छिन्नयोरिति । गृहावच्छिन्नसत्त्वगृहानवच्छिन्नसत्त्वयोरित्यर्थः । तथाच पूर्वोक्तरीत्या गृहावच्छिन्नासत्त्वस्य सत्त्वसामान्याविरोधितायाः प्रदर्शिततया तत्साधकप्रमाणयोरपि न विरोधः सम्भवति, विषयविरोधेनैव प्रमाणविरोधादिति । एवं पीनो देवदत्तो दिवा न भुङ्क्ते इत्यादीनि अर्थापत्तेरुदाहरणान्तराणि देवदत्तो रात्रिभोजी दिवाऽभुञ्जानत्वे सति पीनत्वात् यो रात्रिभोजी न भवति स दिवा अभुञ्जानत्वे सति पीनो न भवति इति व्यतिरेकव्याप्त्यादिज्ञानस्य स्वशरीराद्यन्तर्भावेण सत्त्वादनुमान एवान्तर्भावनीयानि इत्याशयेनाह । उदाहरणान्तराणि चेति । उपसंहरति । तस्मादिति । उक्तरीत्या तस्या अनुमानेऽन्तर्भावसम्भवादित्यर्थः ।

ये च भट्टा वेदान्तिनश्च अनुपलब्धेः प्रमाणान्तरत्वमङ्गीकुर्वन्ति । तथाहि भूतलं घटाभाववदित्यत्र भूतलविशेष्यकघटाभावप्रकारकं यज्ज्ञानं तन्न प्रत्यक्षरूपं सम्भवति इन्द्रियार्थसन्निकर्षजन्यस्यैव ज्ञानस्य प्रत्यक्षरूपतया तत्र च घटाभावेन सह चक्षुरादीन्द्रियस्य सन्निकर्षाभावेन तद्रूपताया असम्भवात् । नच तत्र घटाभावेन सह चक्षुसंयुक्तविशेषणतारूपः सन्निकर्षोऽस्त्येवेति वाच्यम् । विशेषणताया सम्बन्धत्वस्यासिद्धेः । विशेषणतासम्बन्धसिद्धौ अभावप्रत्यक्षं अभावप्रत्यक्षसिद्धौ च तत्सम्बन्धकल्पनमित्यन्योन्याश्रयापत्तेश्च । एवं तादृशज्ञानस्य व्याप्त्यादिज्ञानाद्यजन्यत्वेनानुमानादिरूपत्वस्याप्यभावेन अतिरिक्तप्रमाणत्वसिद्धिरिति वदन्ति । तन्मतं दूषयति । एवमभावोपीत्यादिना । यथा उपमानार्थापत्ती न प्रमाणन्तरे तथा अभावोऽपि न प्रमाणान्तरमपि तु प्रत्यक्षमेवेत्यर्थः । ननु प्रतिविषयाध्यवसायो दृष्टमिति पूर्वोक्तलक्षणे अर्थसन्निकृष्टेन्द्रियाश्रितवृत्तेरेव प्रत्यक्षत्वाभिधानात् अत्र च घटाभावाकारवृत्तेः अर्थसन्निकृष्टेन्द्रियाश्रितत्वाभावेन कथं तस्य प्रत्यक्षरूपत्वमित्याशङ्कामपहरति । नहि भूतलस्येत्यादिना । भूतलस्य कैवल्यलक्षणात् परिणामविशेषात् अन्यो घटाभावो नास्तीत्यर्थः । तथा चाभावस्य भूतलाद्यपेक्षयाऽतिरिक्तत्वे तत्प्रत्यक्षार्थं सन्निकर्षान्तरस्वीकारे पूर्वोक्तदोषः स्यात्, अस्माभिस्तु तस्य भूतलस्वरूपतास्वीकारेण भूतलस्य चक्षुःसंयोगरूपसन्निकर्षसत्त्वेन तेनैवाभावप्रत्यक्षसम्भवे न तदर्थं प्रमाणान्तरस्य सन्निकर्षान्तरस्य वा आवश्यकतेति भावः । ननु घटाभावस्य भूतलस्वरूपत्वे भूतले घटसत्त्वेपि तत्र घटाभाववत्ताबुद्धिः स्यात् तत्का-

ल्यलक्षणादन्यो घटाभावो नाम। प्रतिक्षणपरिणामिनो हि सर्वे एव भावाः, ऋते चितिशक्तेः। स च परिणामभेद ऐन्द्रियक इति नास्ति प्रत्यक्षानवरुद्धो विषयो यत्राभावाह्वयं प्रमाणान्तरमभ्युपेयेतेति।

---

ऽपि घटाभावरूपस्य भूतलस्य सत्त्वात् इत्यत उक्तं। परिणामविशेषादिति। तथा च तादृशपरिणामविशेषविशिष्टस्य भूतलस्य तदानीमसत्त्वान्न तत्काले तदभावबुद्धिः तत्काले भूतलपरिणामविशेषरूपघटाभावेन सहेन्द्रियसन्निकर्षाभावात्। परिणामविशेषस्य परिचायकमाह। कैवल्यलक्षणादिति। अत्र कैवल्यं घटसत्त्वरूपापादनेनापत्तियोग्यघटापलम्भकत्वरूपं। तथाच यत्र घटोऽस्ति तत्कालीनं भूतलं नोक्तकैवल्यवत् तत्काले यद्यत्र घटः स्यात्तर्हि उपलभ्येत इत्याकारकापत्तेः तद्भूतले दातुमशक्यत्वात्, अपि तु यदा एतादृशी आपत्तिर्दातुं शक्यते तादृशमेव भूतलं कैवल्यवत् तादृशकैवल्यमेव लक्षणं परिचायकं यस्य तथाभूतादित्यर्थः। परे तु कैवल्यं घटरहित्वम् तल्लक्षणात् तत्स्वरूपादित्यर्थमाहुः। तत्र च घटाभावस्वरूपनिर्वचनकाले घटरहितभूतलस्य तत्स्वरूपत्वकथनं घटरहितत्वस्य घटाभाववत्त्वरूपतयाऽसगङ्गतमेव। केचित्तु कैवल्यं भावान्तरासंसृष्टत्वरूपं सद्वितीयत्वरूपधर्मापेक्षया धर्मान्तरं तदेव लक्षणं स्वरूपं यस्य तस्मादित्यर्थः इति वदन्ति। तत्तु भूतले पटसत्त्वे भूतलस्य भावान्तरासंसृष्टत्वाभावेन घटाभावरूपत्वस्यासम्भवापत्त्योपेक्षितम्। ननु महत्तत्त्वादिसर्गार्थं प्रकृतेः परिणामाभ्युपगमेऽपि भूतलादेः कथं परिणामित्वं इत्यत आह। प्रतिक्षणपरिणामिनो हीति। तथाच यत्र यत्र भावत्वं तत्र तत्र प्रतिक्षणपरिमाणित्वं इति व्याप्त्या भूतलादीनामपि भावत्वेन प्रतिक्षणपरिणामित्वं सिद्धमेवेत्यर्थः। पुरुषस्य परिणामित्वं नास्तीत्याह। ऋते चितिशक्तेरिति। चितिशक्तिः चैतन्यं, तं विनेत्यर्थः। तथाच पुरुषस्य परिणामित्वानभ्युपगमेन सर्वक्षाणिकतावादिबौद्धमताभेदोऽपि नेत्यर्थः। एवं यथा बौद्धैः निरधिष्ठानो नाशः अभ्युपेयते न तथा साङ्ख्यैः, तैः सत्कार्यवादाभ्युपगमेन धर्मिणि विद्यमान एव तत्र पूर्वं पूर्वमननुभूतानां धर्माणां अभिव्यक्त्यङ्गीकारात्।

अथास्तूक्तरीत्याऽभावस्याधिकरणात्मकत्वं तथापि घटोपलब्धिकाले घटाभाव प्रत्यक्षापत्तिवारणाय अनुपलब्धेः कारणत्वमङ्गीकार्यमेव, एवं च इन्द्रियाकरणकत्वेन प्रत्यक्षत्वाभावात् तस्यातिरिक्तप्रमाणत्वसिद्धिः स्यादेवेत्याशङ्कामपहरति। स चेति सः पूर्वोक्तः, परिणामभेदः परिणामविशेषः कैवल्यलक्षणः, ऐन्द्रियकः इन्द्रियग्राह्यः, इति अतः, प्रत्यक्षानवरुद्धः प्रत्यक्षागोचरः, विषयः नास्ति यत्र अनुपलब्ध्याख्यप्रमाणान्तरमभ्युपेयं स्यादित्यर्थः। तथाच यथा घटादिप्रत्यक्षे उद्भूतरूपादेः कारणत्वेऽपि न तस्य करणत्वं तथा अभावप्रत्यक्षे अनुपलब्धेः न करणत्वमपि तु इन्द्रियस्यैवेति तादृशज्ञानस्य प्रत्यक्षत्वं युक्तमेवेति भावः। नच घटाभावस्य भूतलस्वरूपत्वे घटाभाववद्भूतलमित्याधाराधेयभावावगाहिनी प्रतीतिर्न स्यात्, घटाभावभूतलयोरैक्यादिति वाच्यम्। नैयायिकैरभावाधिकरणकाभावस्याधिकरणस्वरूपत्वाङ्गीकारेऽपि यथाऽधाराधेयभावः अङ्गीक्रियते यथा वा घटभेदो न घट इत्यादौ घटभेदस्याधाराधेयभावावगाहिप्रत्ययस्तथैवास्माभिरपि भूतलं घटाभाववदित्यादिप्रतीतेः इह वने तिलकाः इत्यादौ अभेदेऽपि यथाऽऽधाराधेयभावावगाहित्वं तथैव स्वीकारात्।

सम्भवस्तु, यथा खार्यां द्रोणाढकप्रस्थाद्यवगमः । स चाऽनुमानमेव । खारीत्वं हि द्रोणाद्यविनाभूतं प्रतीतं खार्यां द्रोणादिसत्त्वमवगमयति ।

यच्चानिर्दिष्टप्रवक्तृकं प्रवादपारम्पर्यमात्रम्—'इति होचुर्वृद्धाः'—इत्यैतिह्यम् । यथा 'इह वटे यक्षः प्रतिवसति' इति, न तत् प्रमाणा-

---

सम्भवस्य प्रमाणान्तरतावादिपौराणिकमतं निराकरिष्यन् सम्भवस्वरूपं प्रदर्शयति । सम्भवस्त्विति । अयमेषामाशयः । सम्भवो नाम भूयःसहचारदर्शनाधीनं ज्ञानं, तथाहि खार्यां द्रोणाढकादीनां सहचारस्य भूयस्सु स्थलेषु दृष्टत्वात् तादृशसहचारदर्शनजन्यं खार्यां द्रोणाढकप्रस्थादिज्ञानं, एवं बहुषु ब्राह्मणेषु विद्याचरणसम्पत्तिसाहचर्यदर्शनजन्यं ब्राह्मणत्वज्ञानाधीनं यत् विद्याचरणसम्पत्तिज्ञानं तदपि सम्भवरूपप्रमाणजन्यमेवातिरिक्तप्रमारूपं भवति । तस्य हि इन्द्रियव्याप्तिज्ञानादिकरणकत्वाभावेन प्रत्यक्षानुमित्यादिषु क्लृप्तप्रमाणेषु अन्तर्भावासम्भवादतिरिक्तप्रमाणत्वमावश्यकमेवेति ।

तदेन्मतं दूषयति । स चानुमानमेवेति । स च पूर्वोपदर्शितद्रोणाद्यवगमश्च अनुमानमेव न प्रमाणान्तरमित्यर्थः । ननु तस्य व्याप्तिज्ञानाजन्यत्वेन कथमनुमानेऽन्तर्भाव इत्याशङ्कां व्याप्तिज्ञानस्य पूर्वं सत्त्वप्रदर्शनेन निराकरोति । खारीत्वं हीति । खारीपरिमाणमित्यर्थः । द्रोणाद्यविनाभूतं द्रोणादिपरिमाणाभाववदवृत्ति, प्रतीतं ज्ञातं, यद्यपि द्रोणपरिमाणस्य खारीपरिमाणेन सह सामानाधिकरण्यमेव नास्ति एकस्मिन् परिमाणद्वयस्यासम्भवात् इति कथं तस्य तेन सह अविनाभूतत्वं सम्भवति । तथापि अत्र द्रोणपरिमाणं स्वाश्रयसमवेतद्रव्यत्वसम्बन्धेन स्वाश्रयघटितत्वसम्बन्धेन वा खारीपरिमाणवति द्रव्ये वर्तत एवेति नोक्तदोषावकाशः । द्रोणादिसत्त्वं द्रोणादिपरिमाणस्य सम्बन्धं, अवगमयति बोधयति । तथाच यथा वन्ह्यविनाभूतो धूमो ज्ञातः सन् वह्निमनुमापयति तथैव उक्तस्थले अनुमित्यैव निर्वाहे सम्भवाख्यातिरिक्तप्रमाणाङ्गीकरणं अयुक्तमेवेत्यर्थः'। पूर्वोक्तव्याप्तिज्ञाऽभावे सति केवलं सहचारज्ञानदर्शनजन्यस्य तज्ज्ञानस्य तु प्रमाणत्वमेव नास्तीति भावः ।

सम्प्रति ऐतिह्याख्यप्रमाणान्तराङ्गीकर्तृमतमनूद्य दूषयति । यच्चानिर्दिष्टप्रवक्तृकमिति । अनिर्दिष्टः अनिश्चितः, प्रवक्ता यस्य प्रकृष्टो वक्ता यस्य तथाभूतमित्यर्थः । वक्तरि प्रकृष्टत्वं च स्वसमानार्थकवाक्यातिरिक्तप्रमाणजन्यस्वार्थविषयकबोधवत्त्वं, प्रवादपारम्पर्यमात्रम् जनपरम्पराप्राप्तवादमात्रमित्यर्थः । पूर्वोक्तप्रवादस्य स्वरूपमाह । इति होचुर्वृद्धाः इति । इत्यैतिह्यमिति । तथाच तादृशवचनं ऐतिह्यप्रमाणमित्यर्थः । किमूचुर्वृद्धाः इत्याकाङ्क्षां शमयन्नाह । यथा इह वटे यक्षः प्रतिवसतीति । अयमेषामभिप्रायः । पूर्वोक्त इति होचुर्वृद्धाः इति वाक्यजन्यस्य ज्ञानस्य प्रत्यक्षादिषु उक्तलक्षणेषु अन्तर्भावासम्भवेन ऐतिह्याख्यातिरिक्तप्रमाणसिद्धिः । नच तस्य शाब्दबोधे अन्तर्भावः सम्भवत्येवेति वाच्यम् । आप्तश्रुतिराप्तवचनन्तु इत्यादिग्रन्थेन आप्तवचनजन्यज्ञानस्यैव शाब्दप्रमायां अन्तर्भावयितुं शक्यतया पूर्वोक्तवाक्यस्य अनिर्दिष्टप्रवक्तृत्वेन आप्तवचनत्वाभावात् तस्य तत्राऽप्यन्तर्भावासम्भवात् । तदेन्मतं दूषयति । न तत् प्रमाणमिति । तथाभूतं वाक्यं प्रमाणमेव नास्तीति तद्वा-

न्तरम् । अनिर्दिष्टप्रवक्तृकत्वेन सांशयिकत्वात्, आप्तवक्तृकत्व-निश्चये त्वागम एव, इत्युपपन्नं "त्रिविधम्प्रमाणम्" इति ॥ ५ ॥

एवं तावद्व्यक्ताऽव्यक्तज्ञलक्षणप्रमेयसिद्ध्यर्थं प्रमाणानि लक्षितानि । तत्र व्यक्तं पृथिव्यादि स्वरूपतः पांसुलपादो हालिकोऽपि प्रत्यक्षतः प्रतिपद्यते, पूर्ववता चानुमानेन धूमादिदर्शनात् वह्न्यादीनि चेति, तद्व्युत्पादनाय मन्दप्रयोजनं शास्त्रमिति दुरधिगममनेन व्युत्पा-

---

क्यजन्यज्ञानस्य प्रमाणेऽन्तर्भावस्तु सुदूरनिरस्त इत्यर्थः । तस्य अप्रमाणत्वे युक्ति-माह । सांशयिकत्वादिति । सन्दिग्धत्वात् संशयजनकत्वादिति यावत्, तथा-च तद्वाक्यस्य आप्तवचनत्वसन्देहेन तज्जन्यबोधस्य संशयाकारस्योत्पत्तेः । सन्देहजनकत्वे हेतुमाह । अनिर्दिष्टप्रवक्तृकत्वेनेति । आप्तवक्तृकत्वानिश्चयेनेत्यर्थः । अथ निश्चिताप्तवक्तृकस्य इति होचुर्वृद्धा इत्यैतिह्यस्यैव प्रमाणान्तरत्वमभ्युपेय-मित्याशङ्कायामाह । आप्तवक्तृकत्वनिश्चये त्विति । तथाच पूर्वोक्तवचने आप्तवक्तृक-त्वनिश्चये तज्जन्यज्ञानस्यागम एवान्तर्भावसम्भवात् तथापि न प्रमाणान्तरत्व-कल्पना युक्तेति ।

प्रमाणनिरूपणमुपसंहरन् मूलं सङ्गमयति । इत्युपपन्नमिति । इति उक्तप्रकारेण उपमानादीनां तेषु तेषु प्रमाणेषु अन्तर्भावसम्भवात् त्रिविधं प्रमाणमिष्टमिति मूलमुपपन्नं युक्तियुक्तमित्यर्थः ॥

अग्रिमकारिकामवतारयितुं भूमिकामारचयति । एवन्तावदिति । एवम् उक्तप्रका-रेण व्यक्तं पृथिव्यादि, अव्यक्तं अतीन्द्रियं प्रधानमहत्तत्त्वादि, ज्ञः पुरुषः, एतत्त्रिविध-प्रमेयसिद्ध्यर्थं प्रमाणानि लक्षितानीत्यर्थः ।

पूर्वोक्तस्य त्रिविधस्यापि प्रमेयस्य एतच्छास्त्रप्रतिपाद्यत्वं उत एतेषु अन्यतम-स्येति शङ्कायामाह । तत्रेति । तत्र तेषु प्रमेयेषु पृथिव्यादिरूपं यद्व्यक्तं तत् स्वरूपतः घटत्वपटत्वादिरूपेण, पांसुलपादः पांसुलौ धूलिधूसरितौ पादौ यस्य तथाभूतः हा-लिकः हलवहनशीलः । एतेन तस्य शास्त्रज्ञानराहित्यं सूचितम् । प्रत्यक्षतः प्रत्यक्षप्र-माणेन प्रतिपद्यते इति कर्तरि प्रयोगः तथाच जानातीत्यर्थः । केचित्तु पृथिव्याद्ये-कैकभूतस्य प्रत्यक्षविषयत्वं प्रतिपाद्य तत्समुदायरूपस्य शरीरस्यापि प्रत्यक्षविषय-त्वमाह । पांसुलपाद इति । एतेन हालिकस्य जीवरूपस्य लौकिकप्रत्यक्षविषयत्वा-सम्भवात् पांसुलपाद इत्युक्त्या तस्य देहपरत्वमपि दर्शितमिति वदन्ति । एतन्मते च प्रतिपद्यते इति कर्मणि प्रयोगो बोध्यः ।

धूमादिदर्शनेन वह्न्यादिज्ञानमपि अनुमानेनैव लोकतः सिद्धमेवेत्याह । पूर्ववतेति । पूर्ववता उक्तलक्षणेनान्वयिना अनुमानेन, वह्न्यादीनि हालिकोऽपि प्रतिपद्यते इति पूर्वतनेनान्वयः । इति इत्यतः, तद्व्युत्पादनाय पूर्वोक्तव्यक्तरूपप्रमेयप्रतिपादनाय यदि एतच्छास्त्रम् तदा मन्दप्रयोजनम्, मन्दं स्वल्पं, प्रयोजनं फलं यस्य तथाभूतमित्य-र्थः । तथाच शास्त्रस्य एतदेव प्रामाण्यं यत् लौकिकप्रमाणेनाप्राप्तार्थबोधकत्वं तत्र पृथि-व्यादिरूपार्थबोधकत्वे तस्य लौकिकप्रमाणेनाप्राप्तत्वाभावात् अस्य शास्त्रस्य प्रामा-ण्यमेव न स्यादिति भावः । दुरधिगमं लौकिकप्रमाणागम्यम्, अनेन शास्त्रेण, व्युत्पाद्यमित्यर्थः । तथाच व्यक्तस्य लोकसिद्धत्वेऽपि अव्यक्तज्ञयोः प्रमाणान्तरेणा-

धम् । तत्र यत् प्रमाणं यत्र शक्तं तदुक्तलक्षणेभ्यः प्रमाणेभ्यो निष्कृष्य दर्शयति—

**सामान्यतस्तु दृष्टात् अतीन्द्रियाणां प्रतीतिरनुमानात् ॥**
**तस्मादपि चासिद्धम् परोक्षमाप्तागमात् सिद्धम् ॥ ६ ॥**

"सामान्यतः" इति । तुशब्दः प्रत्यक्षपूर्ववद्भ्यां विशिनष्टि । सामान्यतोदृष्टादनुमानादतीन्द्रियाणां प्रधानपुरुषादीनां प्रतीतिः—चितिच्छायापत्तिर्बुद्धेरध्यवसाय इत्यर्थः । उपलक्षणं चैतत्, शेषवत इ-

---

त्यपि द्रष्टव्यम्, ... प्राप्ततया तद्व्युत्पादकत्वादेवैतच्छास्त्रस्य प्रामाण्यमिति भावः ।

उक्तप्रकारेण भूमिकामारचय्य सम्प्रति अग्रिमकारिकामवतारयति । तत्रेति तत्र पूर्वोक्तप्रकारेण दुरधिगमप्रमेयस्यैव एतच्छास्त्रप्रतिपाद्यत्वे, यत्र यस्मिन्दुरधिगमप्रमेये यत्प्रमाणं समर्थम् यत्प्रमेयव्युत्पादनयोग्यं यत्प्रमाणमिति समुदायार्थः । निष्कृष्येति ।तथाच पूर्वोक्तत्रिविधप्रमाणेषु यस्य प्रमाणस्य लोकत एव यत्प्रमेयव्युत्पादनयोग्यत्वं सिद्धं तदनुक्त्वा यस्य प्रमाणस्य यत्प्रमेयव्युत्पादनयोग्यत्वं लोकत असिद्धं तदेवात्र विभज्य दर्शयतीति पर्यवसन्नम् ।

कारिकां व्याचष्टे। सामान्यतस्त्वितीति। कारिकाघटकतुशब्दस्य कृत्यमाह । तुशब्द इति । तथाच सामान्यतस्तु दृष्टादित्यस्य सामान्यतो दृष्टादेवेत्यर्थः । एवकारव्यावर्त्यमाह । प्रत्यक्षेति । प्रत्यक्षात्पूर्ववतोऽनुमानाच्च व्यावर्तयतीत्यर्थः । केचित्तु सामान्यतस्तु दृष्टादित्यत्र तु शब्दः प्रत्यक्षं व्यावर्तयति सामान्यतोदृष्टादिति विशेषणं च पूर्ववन्नामकमनुमानं व्यावर्तयतीत्येवं व्याचक्षते । अतीन्द्रियाणामित्यस्यार्थमाह । प्रधानपुरुषादीनामिति । आदिना पञ्चतन्मात्रादीनां परिग्रहः । तथाच पूर्वं दृष्टमनुमानमाप्तवचनञ्चेत्यादिना लक्षितेषु प्रमाणेषु प्रत्यक्षेण पूर्ववताऽनुमानेन च प्रधानपुरुषादीनां अतीन्द्रियाणां न प्रतीतिः अपि तु सामान्यतोदृष्टादनुमानादित्यर्थः । कारिकास्थप्रतीतिशब्दार्थमाह । चितिच्छायापत्तिरिति । चितिः चैतन्यं, तस्य छाया प्रतिबिम्बं तस्य आपत्तिर्यत्र चैतन्यप्रतिबिम्बाश्रयेत्यर्थः। बुद्धेरिति। बुद्धेः अन्तःकरणस्य, अध्यवसायः वृत्तिरूपपरिणाम इत्यर्थः । केचित्तु सामान्यत इति सामान्यस्य तथाच इन्द्रिययोग्यस्य सर्वस्य दृष्टात् प्रत्यक्षादेव प्रतीतिरिति व्याचक्षते । तन्न, अतीन्द्रियाणां प्रतीतिरनुमानादिति, अग्रिमवाक्यस्यासङ्गतत्वापत्तेः, अनुमानेन इन्द्रियाग्राह्यस्य वह्न्यादेरपि प्रतीतेः सर्वसिद्धत्वात् नचोत्तरत्रानुमानपदं पूर्ववदनुमानभिन्नानुमानपरमिति वाच्यम् । लक्षणापत्तेः, शास्त्रस्य पूर्वोक्तमन्दप्रयोजनताया जागरूकत्वाच्च, एवं यावत्प्रमाणानां विषयप्रदर्शनस्य तात्पर्यविषयत्वे पूर्ववदनुमानविषयाप्रदर्शनेन न्यूनतापत्तेश्चेति ।

तुकारेण यदि प्रत्यक्षपूर्ववदनुमानयोरेव व्यावृत्तिः तदा शेषवताऽनुमानेनापि अतीन्द्रियप्रतीतिसम्भवेन तदनभिधानेन न्यूनतां परिहरति । उपलक्षणञ्चैतदिति । एतत् सामान्यतोदृष्टमिति पदं, उपलक्षणं लक्षणया उपक्रान्तं लक्ष्यार्थतात्पर्यकम्, तथा चाजहत्स्वार्थलक्षणया सामान्यतोदृष्टपदस्य पूर्ववच्छेषवदुभयार्थकत्वं बोध्यम् । शेषवत इत्यपीति । तथाच यथा सामान्यतोदृष्टादनुमानादतीन्द्रियाणां प्रतीतिः

ष्यपि द्रष्टव्यम् ।

तत्किं सर्वेष्वतीन्द्रियेषु सामान्यतोदृष्टमेव प्रवर्त्तते ? तथा च यत्र तन्नाऽस्ति, महदाद्यारम्भक्रमे स्वर्गापूर्वदेवतादौ च, तत्र तेषामभावः प्राप्त इत्यत —आह "तस्मादपि" इति । तस्मादपीत्येतावतैव सिद्धे चकारेण शेषवत इत्यपि समुच्चितम् ॥ ६ ॥

स्यादेतत्, यथा गगनकुसुमकूर्मरोमशशविषाणादिषु प्रत्यक्षमप्रवर्तमानं तदभावमवगमयति, एवं प्रधानादिष्वपि । तत्कथं तेषां सामान्यतोदृष्टादिभ्यः सिद्धिः ? इत्यत आह—

**अतिदूरात् सामीप्यात् इन्द्रियघातान्मनोऽनवस्थानात्॥**
**सौक्ष्म्याद्व्यवधानात् अभिभवात् समानाभिहाराच्च ॥ ७ ॥**

"अतिदूरात्" इति । अनुपलब्धिरिति वक्ष्यमाणं सिंहावलोक-

---

एवं शेषवतोऽनुमादपि भवतीत्यर्थः । शेषवतः पूर्वमुक्तलक्षणादवीतानुमानात्,

कारिकाद्वितीयभागं व्याख्यातुं सङ्गतिमाह । तत्र किमिति । यदि सामान्यतोदृष्टादनुमानात् सर्वेषामेवातीन्द्रियाणां सिद्धिः, तदा सामान्यतोदृष्टानुमानस्य यत्र नावसरः तत्र स्वर्गादौ अपूर्वे देवतायां महदादीनां आरम्भक्रमः प्रकृतेर्महान् इत्यादिग्रन्थेन पूर्वमुक्तः, तेषां सर्वेषां अभावः प्राप्त इति । तस्मादपि चेत्यत्र चकारस्य सार्थकतां दर्शयति । तस्मादपीत्येतावतैवेति । तथाच चकारोऽनुक्तसमुच्चयार्थः, तेन शेषवतः समुच्चयः । एवंच सामान्यतोदृष्टानुमानेन शेषवताऽनुमानेन चासिद्धस्य अतीन्द्रियस्यागमप्रमाणेन सिद्धिरिति भावः । तत्र महदाद्यारम्भक्रमे, इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्य श्च परं मनः । मनसश्च परा बुद्धिर्बुद्धेरात्मा महान् परः ॥ महतः परमव्यक्तमव्यक्तात्पुरुषः परः । पुरुषान्न परं किञ्चित्सा काष्ठा सा परा गतिः ॥ इत्याद्यागमाः, स्वर्गे च 'स्वर्गकामो यजेतेत्यादयः पू 'मुक्ताः, एवं अपूर्वे च' कर्मनाशाजलस्पर्शात्करतोयाविलंघनात् । गण्डकीबाहुतरणाद्धर्मः क्षरति कीर्तनात् इत्यादयः । देवतायां च वज्रहस्तः पुरन्दरः इत्यादयोऽनुसन्धेयाः ॥

अग्रिम कारिकामवतारयति । स्यादेतदिति । एतत् वक्ष्यमाणं स्यादित्यर्थः । विमतं प्रधानादि असत् अनुपलभमानत्वात् इत्यनुमानेन प्रधानादिषु असत्त्वं अनुमित्सुः दृष्टान्ते साध्यहेत्वोः साहचर्यं ग्राहयितुमाह । गगनकुसुमेत्यादि । तदभावं गगनकुसुमाद्यभावं, तथाच गगनकुसुमादेः यथाऽनु लब्ध्या अभावः सिद्ध्यति । एवं प्रधानादीनामपि अभावः सेत्स्यति इत्याशङ्कार्थः ।

अतिदूरात् किम्भवति इत्याशङ्कायां एतत्कारिकास्थपदेनानिवृत्त्या तादृशाकाङ्क्षानिराकरणसमर्थं अग्रिमकारिकास्थं पदं योजयति । अनुपलब्धिरिति । वक्ष्यमाणम् अग्रिमकारिकायाम्, अनुषञ्जनीयम् एतत्कारिकायामभिसन्धातव्यमित्यर्थः । उत्तरवाक्यघटकपदस्य पूर्ववाक्ये योजने न्यायमाह । सिंहावलोकनन्यायेनेति । यथा अरण्ये गच्छन् सिंहः मध्ये मध्ये पृष्ठभागमवलोकयति तथा अनुपलब्धिपदस्य पूर्ववाक्येपि अनुसन्धानं बोध्यम् ।

नन्यायेनानुपसन्नेयम् । यथा उत्पतन् वियति पतत्री अतिदूरतया सन्नपि प्रत्यक्षेण नोपलभ्यते । सामीप्यादित्यत्राप्यतिरनुवर्तनीयः । यथा लोचनस्थमञ्जनमतिसामीप्यान्न दृश्यते । इन्द्रियघातोऽन्धत्व-बधिरत्वादिः । मनोऽनवस्थानात्—यथा कामाद्युपहतमनाः स्फीतालोकमध्यवर्तिनमिन्द्रियसन्निकृष्टमप्यर्थं न पश्यति । सौक्ष्म्यात्—यथेन्द्रियसन्निकृष्टं परमाण्वादि प्रणिहितमना अपि न पश्यति । व्यवधानात्—यथा कुड्यादिव्यवहितं राजदारादिकं न पश्यति । अभिभवात्—यथाऽहनि सौरीभिर्भाभिरभिभूतं ग्रहनक्षत्रमण्डलं न

---

अतिदूरात् अनुपलब्धिरित्यस्य दृष्टान्तमाह । यथेति । वियति आकाशे, उत्पतन् उड्डीयमानः, पतत्री पक्षी, सन्नपि विद्यमानोऽपि, यथा न गृह्यते, तथाच अनुपलब्धेः सत्त्वेपि न तस्याभावः इति अनुपलब्धेः अभावसाधकत्वं न सम्भवति । तस्य सत्त्वे च केनचित्कालेन तस्य पतत्रिण आगमनमेव प्रमाणम् । अतिदूरतयेति । तथाच तस्य अनुपलब्धौ अतिदूरत्वमेव प्रयोजकं न तु अभावः इति बोध्यम् । आतपदं सामान्यतो दूरस्य वस्तुनः अनुपलब्ध्यभावात् दूरत्वमात्रस्य तत्प्रयोजकत्वासम्भवात् व्यभिचारवारणाय ।

सामीप्यस्य प्रत्यक्षानुगुणतया तस्य कथमनुपलम्भप्रयोजकत्वमित्याशङ्कायामाह । सामीप्यादित्यत्राप्यतिरिति । तथाच सामीप्यमात्रं नानुपलम्भप्रयोजकं अपि तु अतिसामीप्यमेवेत्यर्थः । सामीप्यादनुपलब्धेः दृष्टान्तमाह । यथेति । लोचनस्थमिति । एतेन अञ्जनस्य सत्त्वं बोधितं, तथाच अनुपलब्धेः असत्त्वव्यभिचारित्वमित्यर्थः ।

इन्द्रियघातादिति तृतीयानुपलब्धिप्रयोजकं वक्तुं इन्द्रियघातशब्दार्थमाह । इन्द्रियघात इत्यादि । अत्र तस्मात् सन्नपि रूपं न पश्यति विद्यमानमपि शब्दं न शृणोति, इति शेषो बोध्यः ।

मनोऽनवस्थानादिति । मनसोऽनवस्थानं तत्तदिन्द्रियेण सह संयोगाभावः । अस्य दृष्टान्तमाह । यथेति । कामादिना स्त्रीविषयकेच्छादिना, उपहतं तत्तदिन्द्रियासन्निकृष्टं मनो यस्य तथाभूत इत्यर्थः । स्फीतेति । एतेन प्रत्यक्षकारणस्य आलोकादेः तत्र सत्त्वं ध्वनितम् ।

सौक्ष्म्यादित्यस्योदाहरणमाह । यथेति । सौक्ष्म्यात् महत्त्वोद्भूतरूपालोकसंयोगाद्यभावात् । केचित्तु निरवयवद्रव्यत्वादित्यर्थमाहुः । तच्च द्व्यणुकस्य तत्त्वासत्त्वादुपेक्षितम् । परमाण्वादीत्यादिना द्व्यणुकादिपरिग्रहः, प्रणिहितमनाः समाहितचित्तः, एतेन मनोनवस्थानं तत्र नास्तीति बोधितम् ।

व्यवधानात् इत्यस्योदाहरणमाह । यथेति । कुड्यं भित्तिः, व्यवधानं च आवरणं, तच्च तेन सहेन्द्रियसंयोगप्रतिबन्धकेन्द्रियसंयोगवद्द्रव्यम् ।

अभिभवादित्यस्य तदाह । यथेति । सौरीभिः सूर्यसम्बन्धिनीभिः, भाभिः किरणैः अभिभूतन्तिरस्कृतं अभिभवश्च सजातीयग्रहणकृतमग्रहणं प्रकृते च सूर्यतेजोग्रहणकृतमग्रहग्रहणं नक्षत्रादेः, ग्रहाः भौमादयः, नक्षत्राणि अश्विन्यादीनि ।

पश्यति। समानाभिहारात्—यथा तोयदविमुक्तानुदबिन्दून् जलाशये न पश्यति।

चकारोऽनुक्तसमुच्चयार्थः। तेनानुद्भवोऽपि सङ्गृहीतः। तद्यथा क्षीराद्यवस्थायां दध्याद्यनुद्भवान्न पश्यति।

एतदुक्तं भवति। न प्रत्यक्षनिवृत्तिमात्रादसत्त्वभावो भवति, अतिप्रसङ्गात्। तथा हि—गृहाद्विनिर्गतो गृहजनमपश्यंस्तदभावं विनिश्चिनुयात्, न त्वेवम्। अपि तु योग्यप्रत्यक्षनिवृत्तेरयमभाव विनिश्चिनोति। न च प्रधानपुरुषादीनामस्ति प्रत्यक्षयोग्यता, इति न तन्निवृत्तिमात्रात्तदभावनिश्चयो युक्तः प्रामाणिकानामिति॥ ७॥

कतमत्पुनरेतेषु कारणं प्रधानादीनामनुपलब्धौ? इत्यत आह—

---

समानाभिहारात् इत्यस्योदाहरणमाह। तोयदविमुक्तानिति। समानाभिहारो नाम सजातीयसम्वलनम्, तोयदेन मेघेन, विमुक्तान् उदबिन्दून जलकणान्, जलाशये न पश्यति।
समानाभिहाराच्चेत्यत्र चकारस्यानुक्तसमुच्चयार्थकत्वमाह। चकारेणेति।

अनुद्भवः स्वकारणे सूक्ष्मरूपेणावस्थानं, नच क्षीरकाले दध्नः असत्त्वादेव अनुपलब्धिर्न तु अनुद्भवादिति वाच्यम्। अस्मन्मते सत्कार्यवादस्याग्रे साधयिष्यमाणतया क्षीराद्यवस्थायां दध्यादेरपि तत्र सत्त्वात्।

तात्पर्यार्थमाह। एतदित्यादि। गगनकुसुमादिवदभावादेव प्रधानपुरुषादीनामपि अनुपलब्ध्या अभावः कुतो न सिध्यतीत्याशङ्कायामाह। न प्रत्यक्षनिवृत्तिमात्रादिति। तथा चानुपलब्धिमात्रस्य नाभावसाधकत्वं अपि तु योग्यानुपलब्धेरेवेत्यर्थः। अनुपलब्धिमात्रस्याभावसाधकत्वेऽतिप्रसङ्गमाह। गृहाद्विनिर्गत इति। न त्वेवमिति। गृहाद्विनिर्गतो गृहजनाभावं न निश्चिनोतीत्यर्थः। तर्हि कीदृशप्रत्यक्षनिवृत्त्या अभावनिश्चय इत्याकाङ्क्षायामाह। अपि त्विति। योग्या या प्रत्यक्षनिवृत्तिः तयेत्यर्थः। योग्यत्वं च प्रतियोगितद्व्याप्येतरयावदुपलम्भसामग्रीसमवधानं। तथाच प्रकृत्यादीनां योग्यत्वाभावेन तदुपलम्भाभावस्य प्रधानरूपप्रतियोगितद्व्याप्येतरप्रधानोपलम्भकसामग्र्या असत्त्वात् तादृशानुपलब्धेः तादृशसामग्रीसमवधानं नास्तीत्यर्थः। अथवा योग्यस्य या प्रत्यक्षनिवृत्तिः सैवाभावसाधिका योग्यत्वं च प्रत्यक्षप्रतिबन्धकराहित्यम्, प्रत्यक्षप्रतिबन्धकानि तु विषयगतानि अतिदूरत्वातिसमीपत्वोद्भूतरूपवत्त्वाद्यभावसूर्यादिकिरणाभिभूतत्वसजातीयवस्त्वन्तरमिश्रितत्वानि, इन्द्रियगतानि मनोनवस्थानेन्द्रियघातानि एतेषामुपलब्धिप्रतिबन्धकत्वादनुपलब्धिकारणत्वमुच्यते। एवं च पूर्वोक्तप्रतिबन्धकाभावेपि यद्यनुपलब्धिः तदा तदभावनिश्चयो भवतीत्यर्थः। प्रधानादेः योग्यत्वाभावान्न तदभावसिद्धिरित्यर्थः। शशशृङ्गादिस्थले शशे शृङ्गाभाव एव ज्ञायते तत्र च शृङ्गस्य प्रत्यक्षयोग्यतया तदभावनिश्चयः युक्त एवेति। प्रधानादीनाञ्च सूक्ष्मत्वेन प्रत्यक्षयोग्यता नास्तीति अनुपलब्धिमात्रात तदभावनिश्चयः प्रधानपुरुषाद्यभावनिश्चयः, प्रमाणिकानां प्रमाणैर्व्यवहियमाणानां न युक्त इति भावः।

उत्तरकारिकामवतारयति। कतमदिति। एतेषु पूर्वोक्तातिदूरत्वादिषु मध्ये, प्रधा-

**सौक्ष्म्यात्तदनुपलब्धिर्नाऽभावात्, कार्यतस्तदुपलब्धेः॥**
**महदादि तच्च कार्यं प्रकृतिसरूपं विरूपं च॥ ८॥**

"सौक्ष्म्यात्" इति। अथाभावादेव सप्तमरसवदेतेषामनुपलब्धिः कस्मान्न भवति? इत्यत आह—"नाभावात्" इति। कुतः? "कार्यतस्तदुपलब्धेः," 'तत्' इति प्रधानं परामृशति। पुरुषोपलब्धौ तु प्रमाणं वक्ष्यति, 'सङ्घातपरार्थत्वात्'—( का० १७ ) इति। इतरप्रमाणावधारिते हि प्रत्यक्षमप्रवर्तमानमयोग्यत्वान्न प्रवर्तते इति कल्प्यते। सप्तमस्तु रसो न प्रमाणेनाऽवधारित इति न तत्र प्रत्यक्षस्यायोग्यता शक्याऽध्यवसातुमित्यभिप्रायः।

किं पुनस्तत्कार्यं यतः प्रधानानुमानम्? इत्यत आह—"महदा-

---

दीनां प्रकृत्यादीनां, आदिना पुरुषादिपरिग्रहः। अनुपलब्धौ किं कारणमित्यर्थः।

नाभावादिति कारिकाद्वितीयपादमवतारयितुमाशङ्कते। अथेति। यथा मधुरादिभेदेन षड्विधा रसा उपलभ्यन्ते तद्व्यतिरिक्तस्तु सप्तमो रसः अभावादेव नोपलभ्यते तथा प्रधानादीनामपि अभावादेवानुपलब्धिः कुतो नेत्यर्थः। उत्तरयति। नाभावादिति। सप्तमरसवदभावान्न प्रधानाद्यनुपलब्धिरित्यर्थः। अत्रैव हेतुं जिज्ञासते। कुत इति। उत्तरयति। कार्यत इति। तदुपलब्धेः प्रधानोपलब्धेः। तथाच कार्यलिङ्गकानुमानेन प्रधाननिश्चयादित्यर्थः। अत्र तत्पदेन प्रधानस्यैव परामर्शः न तु पुरुषस्य तस्याकारणत्वेन कार्यरूपहेतुना तदनुमानासम्भवादित्याशयेनाह। तदिति। तच्छब्द इत्यर्थः। तर्हि पुरुषोपलब्धौ प्रमाणाभावात् पुरुषस्यासत्त्वादेवानुपलब्धिरिति पुरुषस्याभावः प्राप्त इत्याकाङ्क्षायामाह। पुरुषोपलब्धौ त्विति। वक्ष्यति मूलकार इति शेषः। कुत्र वक्ष्यति इत्यत आह। सङ्घातपरार्थत्वादितीति। कारिकायामिति शेषः।

ननु यथा अनुमानप्रमाणेन प्रधानादीनां सिद्धिः तथा अनुपलब्ध्या तदभावस्यापि सिद्धिः कुतो न भवति इत्याकाङ्क्षायामाह। इतरेति। पूर्वोक्तानुमानादिरूपप्रमाणेनावधारिते प्रधानादौ, या प्रत्यक्षस्याप्रवृत्तिः अभावः स अयोग्यत्वात् प्रत्यक्षयोग्यत्वाभावात् प्रवर्तते इत्यर्थः। ननु अयोग्यत्वात्तत्र प्रत्यक्षं न प्रवर्तते इत्यत्र किं मानमित्यत आह। कल्प्यते इति। अनुमीयत इत्यर्थः। तथाच प्रधानादयः अयोग्यत्वात् प्रत्यक्षाविषयाः विद्यमानत्वे सति प्रत्यक्षाविषयत्वात् परमाण्वादिवत् इत्यनुमानेनैव तत्र अयोग्यत्वात् प्रत्यक्षाविषयत्वं सिद्धिमिति विद्यमानता च तेषां कार्यलिङ्गकानुमानेनव सिद्धेत्यर्थः। ननु सप्तमरसस्यापि अभावो नाङ्गीक्रियतामपि तु तत्रापि प्रत्यक्षायोग्यत्वमेवाङ्गीक्रियतामित्यत आह। सप्तमस्त्विति। तथाच सप्तमरसस्य केनापि प्रमाणेन विद्यमानताप्रतीत्यभावात् न तत्र अयोग्यत्वात् प्रत्यक्षाविषयत्वकल्पना न्याय्येति भावः।

ननु घटादिरूपकार्येण दण्डादिरूपकारणस्यैवानुमानं स्यात् नतु प्रधानस्येत्याशङ्कायेन कार्येण प्रधानस्यानुमानं तत्कार्यं बोधयितुं प्रवृत्तं कारिकार्धमवतारयति।

दि तच्च कार्यम्" इति। एतच्च यथा गमकं तथोपरिष्टादुपपादयिष्यते। तस्य च कार्यस्य विवेकज्ञानोपयोगिनी सारूप्यवैरूप्ये आह—"प्रकृतिसरूपं विरूपं च" इति। एते तूपरिष्टाद्विभजनीये इति॥ ८॥

कार्यात् कारणमात्रं गम्यते। सन्ति चात्र वादिनां विप्रतिपत्तयः। तथा हि केचिदाहुः—'असतः सद् जायते' इति 'एकस्य स-

किं पुनरिति। एतच्चेति। महदादिकार्यञ्चेत्यर्थः। यथा येन प्रकारेण गमकं अनुमापकम्, प्रधानस्येति शेषः। उपरिष्टादिति। भेदानां परिमाणादित्यादिकारिकाव्याख्यावसर इत्यर्थः।

चतुर्थपादमवतारयति। तस्येति। विवेकज्ञानोपयोगिनीति। एतेन सारूप्यवैरूप्यज्ञानस्य विवेकज्ञानद्वारा मोक्षोपयोगित्वं बोधितम्। सारूप्यं साधर्म्यं समानो धर्मः, एवं वैरूप्यं वैधर्म्यं विरुद्धो धर्म इत्यर्थः। केनचिद्धर्मेण महदादीनां प्रकृतिसारूप्यमस्ति एवं केनचिद्धर्मेण तेषामेव प्रकृतिवैरूप्यमस्ति तथाच तादृशसारूप्यवैरूप्यज्ञानेन तेभ्यश्च सर्वेभ्यः पुरुषस्य वैधर्म्यज्ञानेन सत्त्वपुरुषान्यताख्यातिरूपविवेकज्ञानस्योत्पत्तिः भवेदेवेत्यर्थः। एते सरूपविरूपे, उपरिष्टात् हेतुमदनित्यमित्यादिकारिकायां, विभजनीये विविच्य प्रतिपादनीये, तथाच तत्रैव प्रधानस्य महदादीनां च साधर्म्यं तेभ्यश्च पुरुषस्य वैधर्म्यं प्रतिपादयिष्यत इति॥

सम्प्रति सत्कार्यवादसाधनपरां कारिकामवतारयितुं भूमिकामारचयति। कार्यात् कारणमात्रमिति। कार्यात् कार्यरूपहेतुना, कारणमात्रम् कारणत्वेन रूपेण कारणं, गम्यते अनुमीयते, नतु अस्येदं कारणमिति रीत्या कारणं प्रतीयत इत्यर्थः। तथा च महदादिरूपेण कार्येण कारणमात्रस्यैवानुमानं स्यात् नतु भवदभिमतनित्यत्वादिके प्रकृतौ सेत्स्यति इति भावः। ननु उक्तरीत्या अस्तु कारणमात्रस्यानुमितिः परन्तु धूमादिना वन्हिसामान्यानुमितिस्थले यदि इतरविशेषबाधनिश्चयः स्यात् तदा तत्र यथा अनुमितेः महानसीयवन्हिविषयकत्वं भवति तद्वदेवात्रापि लाघवज्ञानादिसहकारेणानुमितेः नित्यप्रधानादिरूपकारणविषयकत्वं सेत्स्यति इत्याशङ्कायामाह। सन्ति चेति। अत्र कार्यात् कारणानुमितिस्थले, वादिनां तत्तच्छास्त्रकाराणां नैयायिकबौद्धवेदान्तिनां विप्रतिपत्तयः विरुद्धाः प्रतिपत्तयः विरुद्धमतानीति यावत्, सन्तीत्यर्थः। तथाच परस्परविरुद्धमतानां नैयायिकादीनां निराकरणं विना प्रधानरूपकारणविशेषावधारणं न भवतीत्यर्थः, तान्येव विरुद्धमतानि निराकरणार्थं दर्शयति। तथा हीति। तत्र बौद्धानां मतमाह। केचिदाहुः असतः सज्जायत इति। शून्यवादिनो हि बौद्धाः विनष्टादेव बीजादङ्कुरोत्पत्तिर्दृश्यते एवं विनष्टादेव दुग्धाद्दध्याद्युत्पत्तिरितिरीत्या अभावादेव भावोत्पत्तिं अनुमिन्वन्ति। तथाहि कार्यजातं असदुपादानकम् भावत्वात् अङ्कुरादिवदित्यनुमानम्। अत एव न्यायदर्शने बौद्धानां पूर्वपक्षसूत्रम् 'अभावाद्भावोत्पत्तिर्नानुपमृद्य प्रादुर्भावात् इति। तथा च जगदुत्पत्तेः पूर्वं कार्यं कारणं वा किमपि नासीत् किन्तु शून्यमेव बभूव ततः अर्थक्रियाकारित्वलक्षणसत्त्वयोगि किञ्चित्कालावस्थायि कार्यं जायते। तस्यापि स्वरूपेण न सत्त्वम् इति वदन्ति।

वेदान्तिमतमाह। एकस्य सतो विवर्त इत्यादि। एकस्य स्वजातीयद्वितीयरहितस्य, सतः त्रिकालाबाधितस्य, विवर्तः उपादानविषमसत्ताककार्यापत्तिरूपः, कार्यजातं

तो विवर्तः कार्यजातं न वस्तुसत्' इत्यपरे अन्ये तु 'सतः असत् जायते' इति, 'सतः सत् जायते' इति वृद्धाः ।

तत्र पूर्वस्मिन् कल्पत्रये प्रधानं न सिद्ध्यति । सुखदुःखमोहभेदवत्स्वरूपपरिणामशब्दाद्यात्मकं हि जगत् कारणस्य प्रधानत्वं सत्त्वरजस्तमःस्वभावत्वमवगमयति ।

---

कार्यसमूहः वस्तुतः सन्नेत्यर्थः । इति अपरे वेदान्तिनः, आहुरिति पूर्वोक्तमनुषज्यते । अयमेषामभिप्रायः, एकमेवाद्वितीयमित्यादिश्रुत्या ब्रह्मणः एकत्वावगमात् तदुपादानकारणका एव एते सर्वेऽपि पदार्थाः ते च यथा शुक्तिकादौ भासमानं रजतं न वस्तुतः सत्यं तथैव असत्या एव तेषां विनाशश्च यथा शुक्तिस्वरूपज्ञानादविद्याकल्पितस्य रजतस्य विनाशः एवं अधिष्ठानरूपस्य ब्रह्मणः विज्ञानादेव विनाश इति ।

नैयायिककणादयोर्मतमाह । अन्ये त्विति । अन्ये नैयायिकवैशेषिकाः, सतः सन्मृपाद्दण्डादितः असत् कार्योत्पत्तिकालात्पूर्वकाले अविद्यमानं घटादिकार्यं जायते इति आहुरिति पूर्वेण सम्बन्धः ।

साङ्ख्यमतमाह । सतः सज्जायते इत्यादि । सतः सद्रूपात् कारणात् सद्रूपं कार्यं जायते इति वृद्धाः साङ्ख्याचार्या आहुरिति शेषः ।

तदेवं तत्तद्दार्शनिकमतं प्रतिपाद्य सम्प्रति साङ्ख्यमतातिरिक्तमते प्रधानस्य सिद्ध्यसम्भवं दर्शयति । तत्रेति । तत्र तेषु पक्षेषु, पूर्वस्मिन् पूर्वोक्ते, पक्षत्रये बौद्धवेदान्तिवैशेषिकपक्षेषु । प्रधानं न सिद्ध्यतीति । तथा च सतः सज्जायते इति मते यादृशं प्रधानं सिद्ध्यति तादृशं पूर्वोक्तेषु पक्षेषु न सिध्यतीत्यर्थः । कीदृशं तत्प्रधानं यदन्यमते न सिध्यतीत्याशङ्कायामाह । सुखदुःखेति । सुखदुःखमोहस्वरूपा ये भेदाः विशेषाः तद्वत् यत्स्वरूपं तेन रूपेण परिणामो येषां एवंभूता ये शब्दादयः आदिना स्पर्शादिपरिग्रहः तदात्मकमिदं जगत् स्वकारणस्य । सत्त्वरजस्तमःस्वभावस्वरूपं प्रधानत्वमवगमयति अनुमापयति इत्यर्थः । अयमर्थः कार्येण कारणानुमानस्थले कार्यं यद्गुणकं तद्गुणकस्यैव कारणस्यानुमितिर्भवति । यथा रक्तगुणविशिष्टेन घटेन रक्तगुणविशिष्टस्यैव कपालस्यानुमितिः नहि रक्तघटस्य अवयवः कपालः पीतवर्णको दृष्टः एवमेव कार्यस्य घटपटादेः सुखदुःखमोहात्मकत्वात् तत्कारणमपि सुखदुःखमोहात्मकमेव भवति नान्यादृशम् घटादीनां सुखादिरूपत्वं च यथा एकैव स्त्री स्वामिनं सुखाकरोति सपत्नीर्दुःखयति तामविन्दमानं पुरुषान्तरं मोहयति अनया च दिशा सर्व एव भावा व्याख्याता इत्यादिना ग्रन्थसन्दर्भेण स्वयमेव ग्रन्थकृता प्रतिपादयिष्यते । साङ्ख्यमते च कारणस्य प्रधानत्वं सत्त्वरजस्तमोरूपत्वमेव तत्र सुखं सत्त्वं दुःखं रजः मोहश्च तमः इति रीत्या कारणस्य सुखदुःखमोहात्मकता स्यात् तदेतत् सत्कार्यवादमन्तरेण अन्येषु बौद्धवेदान्तिनैयायिकाभिमतेषु असद्वादविवर्तवादासत्कार्यवादेषु न सम्भवत्येव ।

क्वचित्पुस्तके सुखदुःखमोहभेदवत्स्वरूपपरिणामशब्दाद्यात्मकत्वं हि ।इति भावप्रत्ययघटितः पाठोऽपि उपलभ्यते, स च एवं व्याख्येयः । जगतः कारणस्य प्रधानत्वं सुखदुःखमोहभेदवत्स्वरूपपरिणामशब्दाद्यात्मकत्वं तच्च तथाभूतं प्रधानत्वं पूर्वस्मिन् कल्पत्रये न सिद्ध्यतीत्यर्थः । प्रकर्षेण वैषम्यावस्थापरिहारेण, वैषम्यावस्थायां प्रकर्षस्या-

यदि पुनरसतः सज्जायेत असत् निरूपाख्यं कारणं सुखादिरूप-शब्दाद्यात्मकं कथं स्यात् ? सदसतोस्तादात्म्यानुपपत्तेः ।

अथैकस्य सतो विवर्तः शब्दादिप्रपञ्चः तथाऽपि सतः सज्जायत इति न स्यात् । न चास्याऽद्वयस्य प्रपञ्चात्मकत्वम्, अपि त्व-प्रपञ्चस्य प्रपञ्चात्मकतया प्रतीतिर्भ्रम एव ।

---

भावात् धीयन्ते निधीयन्ते विधन्ते सत्त्वादिगुणा यस्मिन् तत्प्रधानं तस्य भावः तत्त्वं इत्याशयेन प्रधानत्वस्य विवरणम् सत्त्वरजस्तमःस्वभावत्वमिति । सुखाद्या-त्मकसत्त्वादिगुणस्वरूपत्वमित्यर्थः । अयञ्च पाठः सत्त्वरजस्तमःस्वभावत्वमित्य-स्यानतिप्रयोजनकतया कथञ्चिदेव सङ्गमनीयः ।

ननु पूर्वस्मिन् कल्पत्रये कथं न प्रधानस्य सिद्धिः इत्याशङ्कां निराकरोति । यदि पुनरित्यादिना । बौद्धमते प्रधानासिद्धिमाह । असत इति । सज्जायेत इति वैनाशिक-मतमङ्गीक्रियेत तदा कार्यकारणयोस्तादात्म्यात् निरूपाख्यं सुखादिरूपशब्दाद्यात्मकं कथं स्यात् । अपि तु न स्यादेवेत्यर्थः । अत्रैव हेतुमाह । सदसतोरिति । सद्रूपस्य का-र्यस्य असद्रूपकारणेन सह अभेदासम्भवादिति । तथाच कार्यकारणयोस्तादात्म्या-न्यथानुपपत्त्या तैरपि जगतः कारणं असद्रूपं नाङ्गीकर्तुं शक्यमिति । अयमभि-प्रायः, कार्यकारणयोरभेदे असद्वादश्चेदङ्गीक्रियेत तदा असत् कारणं सुखादिरूप-शब्दाद्यात्मकं कथं स्यात सदसतोस्तादात्म्यासम्भवात । अत्रासत्त्वं नाम क्वचिदप्यु-पाधौ सत्त्वेन प्रमीयमाणत्वानधिकरणत्वं अस्ति चेदं शशशृङ्गादौ ननु निरूपाख्यत्वं शब्दवृत्त्यविषयत्वरूपं असम्भवापत्तेः, निरुपाख्यादिपदेनैव वृत्तिसम्बन्धेन शशशृङ्गा-दीनां सम्बध्यमानत्वात् निरुपाख्यादिपदानां अलीके अनुभावकत्वरूपशक्तिविरहेपि अननुभवरूपालीकविषयकविकल्पं प्रति योगेन लक्षणया सङ्केतविशेषेण वा अ-लीकोपस्थितिद्वारा जनकत्वमावश्यकमेव तादृशविकल्पस्य साक्षिसिद्धत्वात् अत एव 'पातञ्जलसूत्रे शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः' इति अनेन तादृशविकल्पस्य असद्वस्तुविषयकस्य शब्दज्ञानजन्यस्योक्तत्वात्, एवमेव 'वृत्तयः पञ्चतय्यः क्लिष्टाक्लिष्टाः प्रमाणविपर्ययविकल्पनिद्रास्मृतयः' इति सूत्रे वृत्तिज्ञानस्य पञ्चधा विभागेन तत्र विपर्ययरूपात्सद्रूपाधिष्ठानविषयकात् भ्रमात् पार्थक्येन विकल्पः पातञ्जलसूत्र एवोक्तः । नच अलीकस्य निर्धर्मकत्वे तत्र निरूपाख्यादिपदानां योगादिवृत्त्यसम्भव इति वा-च्यम् । तस्येतरधर्मशून्यत्वेपि अभावस्य विकल्पविषयत्वादेः धर्मस्य तत्र स्वीका-रेण योगेन वाचकशब्दरूपोपाख्याविरहस्यालीके प्रसिद्धस्योपस्थित्योक्तविरहाश्रया-लीकोपस्थितिसम्भवेन लक्षणासम्भवादनेन पदेनालीकं बोध्यमिति सङ्केतसम्भवात्, तथा चालीकं वृत्तिविषयमेवेति पूर्वोक्तमेवासत्त्वम् । तथा च न शून्यवादिमते उक्तप्र-धानस्य सिद्धिरिति ।

बौद्धमते प्रधानासिद्धिमुपपाद्य सम्प्रति वैदान्तिकविवर्तवादिमते तामाह । अथे-ति । तन्मते प्रपञ्चस्य मिथ्यात्वेन कारणस्य ब्रह्मणस्तेन सह तादात्म्यासम्भवात् । नच ब्रह्मणा सह प्रपञ्चस्य कल्पिततादात्म्यमस्त्येवेति वाच्यम् । तथापि स्वाभिमत-प्रधानसिद्ध्यसम्भवात् प्रधानं हि सद्रूपमिष्यते अस्माभिः कार्येण सहाभेदे कार्यस्य मिथ्यात्वेन तदभिन्नस्य कारणस्यापि मिथ्यात्वापत्तेः । अतो विवर्तवादे कार्यकारण-

येषामपि कणभक्षाक्षचरणादीनां सत एव कारणादसतो जन्म, तेषामपि सदसतोरेकत्वानुपपत्तेर्न कार्यात्मकं कारणमिति न तन्मते प्रधानसिद्धिः ।

अतः प्रधानसिद्ध्यर्थं प्रथमं तावत्सत्कार्यं प्रतिजानीते ।

**असदकरणादुपादानग्रहणात् सर्वसम्भवाभावात् ।**
**शक्तस्य शक्यकरणात् कारणभावाच्च सत् कार्यम् ॥९॥**

---

योर्वास्तवैक्याभावेन न प्रधानसिद्धिः ।

नच 'तदनन्यत्वमारम्भणशब्दादिभ्यः' इति सूत्रेण भगवता व्यासेन ब्रह्मणा सह कार्यस्य अभेदप्रतिपादनात् कुतो न एतन्मते प्रधानसिद्धिः इत्याशङ्कायामाह । न चास्याद्वयस्येति । अस्य अद्वयस्य ब्रह्मणः न प्रपञ्चरूपत्वमपि तु अप्रपञ्चस्य प्रपञ्चभिन्नस्य, प्रपञ्चात्मकतया प्रतीतिर्भ्रमरूपैव । अद्वितीयत्वं च ब्रह्मणः सदेव सौम्येदमग्र आसीत् एकमेवाद्वितीयम् ब्रह्म इत्यादिश्रुत्या सिद्धं भवति । ननु तदैक्षत बहुस्यां प्रजायेय तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः आकाशाद्वायुः वायोरग्निरित्यादिश्रुत्या अभिधीयमाना सृष्टिः ब्रह्मण एकत्वे कथमुपपद्यतामित्यत आह । अपि त्विति । अप्रपञ्चस्य प्रपञ्चभिन्नस्य प्रपञ्चात्मकतया या प्रतीतिः सा भ्रमरूपैव । तथाच यथा शुक्तिकादौ शुक्तिकाऽज्ञानरूपाविद्यया शुक्तिकावरणे सति तत्र प्रातिभासिकं रजतं प्रत्यक्षमपि न वस्तुसत् तस्य तादृशाज्ञाननिवृत्तौ सत्यां विनाशित्वात् एवमेव ब्रह्मणः अज्ञानेनावरणे सति तत्र आकाशादिकं परिदृश्यमानं न वस्तुसदपि तु यावदज्ञानं तस्य सत्ता सैव च व्यावहारिकी सत्तेत्युच्यते, तादृशाज्ञाननिवृत्तौ च सत्यां तत्कार्यस्य प्रपञ्चस्य विनाशेन तस्य सद्रूपत्वाभावेन ब्रह्मण एकत्वमुपपन्नमेव । अत एव ग्रन्थकृता न वस्तुसदित्युक्तम् प्रपञ्चस्य व्यावहारिकसत्त्वास्वीकारेपि पारमार्थिकसत्तानभ्युपगमात् । उक्तसूत्रे तु यथा शुक्तिकादौ प्रतिभासमानं रजतं न शुक्तिकातो भिन्नं एवमेव ब्रह्मणि अध्यस्तं कार्यजातं न ब्रह्मभिन्नं इति बोधयितुमेव नतु प्रपञ्चस्य वास्तवं ब्रह्मणा सहाभेदः एतच्च आरम्भणशब्दादिभ्यः इत्यनेन सूत्रकृतैव स्पष्टीकृतम् वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यमिति श्रुत्या कारणीभूतमृत्तिकाया यथा सत्यत्वम् घटपटादीनाञ्च मिथ्यात्वमेव एवं विवर्तवादस्यैवात्राश्रयणमिति भावः ।

सम्प्रति नैयायिकमते प्रधानासिद्धिमुपपादयति । येषामपीति । कणभक्षः कणादः वैशेषिकदर्शनकर्ता, अक्षचरणः गौतमः न्यायदर्शनकर्ता, आदिना तदनुयायिनां प्रशस्तपादवात्स्यायनादीनां तत्तद्भाष्यकारादीनां परिग्रहः । मत इति शेषः । सतः विद्यमानात् परमाण्वादेः, असतः उत्पत्तेः प्रागविद्यमानस्य । न कार्यात्मकं कारणमिति । कार्यकारणयोरभेदो न सम्भवति असतः सद्रूपत्वासम्भवादिति भावः ।

उक्तरीत्या बौद्धादिमतेषु सद्रूपेण कार्येण सह कारणैक्यात न प्रधानसिद्धिः सम्भवति त्रिगुणात्मककार्येण त्रिगुणात्मककारणस्यानुमानं हि सतः सत् जायते इति साङ्ख्यशास्त्रसिद्धान्तस्वीकारेणैव सम्भवति इत्याह । अत इति । यतः सत्कार्यातिरिक्तमते न प्रधानसिद्धिरत इत्यर्थः । प्रधानसिद्ध्यर्थं सुखदुःखमोहरूपत्रिगुणा-

"असदकरणात्" इति। "सत् कार्यम्" कारणव्यापारात् प्रागपीति शेषः। तथा च न सिद्धसाधनं नैयायिकतनयैरुद्भावनीयम्।

यद्यपि बीजमृत्पिण्डादिप्रध्वंसानन्तरमङ्कुरघटाद्युत्पत्तिरुपलभ्यते, तथापि न प्रध्वंसस्य कारणत्वम्, अपि तु भावस्यैव बीजाद्यवयवस्य। अभावात्तु भावोत्पत्तौ तस्य सर्वत्र सुलभत्वात् सर्वदा

---

त्मकप्रधानानुमानार्थम्। प्रतिजानीते कार्यस्य सत्त्वं साधयतीत्यर्थः।

ननु कार्यस्य सत्त्वं यदि साध्यते तदा नैयायिकमते सिद्धसाधनम्, तैरपि कारणव्यापारानन्तरं घटादिरूपकार्ये सत्त्वस्य स्वीकारात् इत्यत आह। कारणव्यापारात्प्रागपीति। तथाच नैयायिकैः कारणव्यापारानन्तरं कार्यस्य सत्त्वाभ्युपगमेपि तत्पूर्वं तत्सत्त्वानभ्युपगमात् अस्माभिस्तु कारणव्यापारपूर्वकालावच्छेदेन कार्ये सत्त्वस्य साधनीयतया नैयायिकतनयैः तनयवत् नैयायिकानुगमनशीलैः नैयायिकशिष्यैः, सिद्धसाधनं न प्रदर्शनीयमित्यर्थः।

अभावाद्भावोत्पत्तिर्नानुपमृद्य प्रादुर्भावात् इति बौद्धमतस्य दुष्टत्वं प्रतिपादयितुमाह। यद्यपीति। तथाच अभावस्य कारणत्वं प्रत्यक्षसिद्धमेव बीजमृत्पिण्डाद्यनन्तरमेव घटाद्युत्पत्तिदर्शनात् कार्यनियतपूर्ववर्त्यनन्यथासिद्धस्यैव कारणत्वादिति कथं कारणव्यापारात्पूर्वं कार्यस्य सत्त्वमिति भावः। निराकरोति। तथापीति। नच यदि ध्वंसस्य न कारणत्वं तदा कस्येत्यत आह। अपि त्विति। तथाच बीजावयवादीनामेवाङ्कुराद्युपादानकारणत्वमिति बीजध्वंसस्य अङ्कुरादिपूर्वं सत्त्वेपि न तस्य तथाविधकारणत्वम्। नच बीजध्वंसस्य बीजावयवस्य च अङ्कुराव्यवहितपूर्ववृत्तित्वसत्त्वेन विनिगमनाविरहादुभयोरपि कारणत्वं स्यादिति वाच्यम्। उभयोर्नियतपूर्ववृत्तित्वाविशेषेपि समवायेन द्रव्यं प्रति समवायेन द्रव्यस्य प्रतिबन्धकतया बीजावयवे समवायेनाङ्कुररूपकार्यं प्रति समवायेन बीजरूपद्रव्यस्य प्रतिबन्धकतया प्रतिबन्धकाभावस्य च कारणत्वेन बीजध्वंसस्य कारणत्वमिष्टमेव उपादानकारणत्वन्तु तस्य नास्ति अपि तु बीजावयवस्यैवेति। अभावाद्भावोत्पत्तौ को दोष इत्यत आह। अभावाद्भावोत्पत्ताविति। तस्य अभावस्य सर्वत्र सुलभत्वात् कालादौ सत्त्वात्, सर्वदा कार्योत्पत्तिप्रसङ्गापत्तिः। अयमभिप्रायः, बीजध्वंसस्य अङ्कुरोपादानकारणत्वे ध्वंसस्य ध्वंसाभावेन तस्य सर्वदा सत्त्वात् सर्वदा अङ्कुरोत्पत्तिः स्यात् नच अस्मन्मते कार्यमात्रस्य क्षणिकतया एकाङ्कुरनाशानन्तरं प्रतिक्षणमन्याङ्कुरोत्पत्तिर्भवत्येवेति वाच्यम्। तथापि यत्र यादृशाङ्कुरस्य आत्यन्तिको विनाशः तत्रापि पुनस्तादृशाङ्कुरोत्पत्तिः स्यात् तत्र ध्वंसरूपस्य कारणस्य विद्यमानत्वात्। एवमभावाद्भावोत्पत्त्यभ्युपगमे अभावत्वाविशेषात्कारणविशेषाभ्युपगमोऽनर्थकः स्यात् नहि बीजादीनामुपमृदितानां योऽभावस्तस्य च शशविषाणादीनां च निःस्वभावत्वाविशेषादभावत्वे कश्चिद्विशेषोस्ति येन बीजादेवाङ्कुरो जायते क्षीरादेव दधि इत्येवंजातीयकः कारणविशेषाभ्युपगमोऽर्थवान् स्यात् निर्विशेषस्य स्वभावस्य कारणत्वाभ्युपगमे शशविषाणादिभ्योप्यङ्कुरादयो जायेरन् नचैवं दृश्यते। इत्यादीनि आचार्योक्तानि, एवं घटपटादयो न अभावविकाराः अभावानन्वितत्वात् यत् येनानन्वितम् तत् तस्य

सर्वकार्योत्पादप्रसङ्ग इत्यादि न्यायवार्तिकतात्पर्यटीकायामस्माभिः प्रतिपादितम् ।

प्रपञ्चप्रत्ययश्चाऽसति बाधके न शक्यो मिथ्येति वदितुमिति कणभक्षाक्षचरणमतमवशिष्यते ।

तत्रेदं प्रतिज्ञातम्, "सत्" इति । अत्र हेतुमाह "असदकरणात्"

---

विकारो न भवति यथा हेमाननन्विताः घटशरावादयो हेम्नो न विकाराः। इति रीत्या भामत्युक्तानि दूषणान्यवसेयानि । न्यायवार्तिकतात्पर्यटीकायामिति । नष्ट-नन्वयविनष्टयोः शालियवबीजयोः कश्चिद्विशेषोऽस्ति येनैकस्माच्छालयङ्कुरो नान्यस्मादित्यादिग्रन्थेनेति शेषः ।

वेदान्तिमतं निराकर्तुमाह । प्रपञ्चप्रत्ययश्चेति । प्रपञ्चस्य घटपटादिरूपस्य, यः प्रत्ययः प्रत्यक्षादिरूपोऽनुभवः सः बाधके विरोधिप्रमाणेऽसति मिथ्याभूत इति वक्तुं न शक्य इत्यर्थः । शुक्तिरजतादेः प्रत्यक्षादिना प्रतीयमानत्वेपि मिथ्यात्वादसति-बाधके इत्युक्तम् । तथाच शुक्तिरजतादिस्थले नेदं रजतमिति विरोधिप्रमाणेन बाधितत्वात्तादृशज्ञानस्य मिथ्यात्वेपि घटपटादिभेदावगाहिप्रत्यक्षस्य न मिथ्यात्वं सम्भवति विरोधिप्रमाणाभावादिति । नच वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम् इत्यादिश्रुतिरेव बाधकप्रमाणरूपाऽस्तीति कुतो न मिथ्यात्वमिति चेदत्र केचित् । तस्याः श्रुतेः प्रपञ्चमिथ्यात्वप्रतिपादने न तात्पर्यम् अपि तु रलयोरभेदादारभ्यते, इत्यस्य आलम्यते इत्यर्थः बाहुलकात्कर्मणि ल्युटि आरम्भणमित्यस्य आलम्भनं स्पर्श इति यावत । वाचा इति तृतीयान्तस्य वाक्व्यवहारे लक्षणा तृतीयार्थश्च प्रयोजकत्वम् तथाच वाक्पूर्वकेणायं घटोऽनेन घटेनोदकमाहर इत्यादिव्यवहारेण हेतुना एतादृग्व्यवहारसिद्ध्यर्थं विकारः पृथुबुध्नोदराकारत्वादिलक्षणः संस्थानविशेषः, तत्प्रयुक्तं च घटः इति नामधेयम्, आरम्भणं मृद्द्रव्येण स्पृश्यते, उदकाहरणादिव्यवहारसिद्ध्यर्थं मृद्द्रव्यमेव संस्थानान्तरनामधेयान्तरभाग् भवतीति यावत् । अतो घटाद्यपि मृत्तिका मृद्द्रव्यम् इत्येव सत्यं प्रमाणप्रतिपन्नम्, न तु घटादिकं द्रव्यान्तरमिति । परे तु यत्रोत्तरकाले बाधज्ञानं तत्रैव बुद्धेः भ्रमत्वमङ्गीक्रियते यथा शुक्तिकायां नेदं रजतम् इति बाधेन रजतज्ञानस्य प्रकृते च प्रपञ्चे बाधज्ञानस्याभावेन न तत्प्रत्ययस्य मिथ्यात्वमपि तु वाचारम्भणमित्यादिश्रुतेः उपासनामात्रपरतैवेति वदन्ति । उक्तश्रुतेः कार्यकारणयोरभेदबोधन एव तात्पर्यमित्यपि वदन्ति । एवं प्रपञ्चस्य ब्रह्मणि अध्यासो न सम्भवति अध्यासस्तावद्यत्र अधिष्ठानसामान्यधर्मज्ञानं विशेषधर्मस्य चाज्ञानं तत्रैव यथा शुक्तिरजतादिस्थले शुक्तिकायाः इदंत्वादिसामान्यज्ञाने शुक्तित्वादिविशेषाज्ञाने च तादृशो भ्रमः न त्वन्यथा प्रकृते च त्वन्मते ब्रह्मणः निःसामान्यविशेषतया तादृशोऽध्यासो न सम्भवत्यत्येवेति ।

उक्तप्रकारेण मतद्वयं निरस्य सम्प्रति नैयायिकमतं निरसनीयमित्याह । इति कणभक्षाक्षचरणमतमिति । अवशिष्यते निरसनीयतया परिशिष्यते इत्यर्थः ।

तत्रेति । तथाच ग्रन्थकृतैव तन्मतं निरस्यते इति भावः । तत्र कणादादिमतनिरासार्थं, कार्यं सदितिप्रतिज्ञातं प्रतिज्ञावाक्यमभिहितं, मूलकृतेति शेषः । प्रतिज्ञा तावत् पक्षे साध्यवैशिष्ट्यबोधकं वाक्यम् अत्र च कार्यस्य पक्षत्वं सत्त्वस्य साध्यत्वं

इति। असच्चेत् कारणव्यापारात् पूर्वं कार्यम्, नाऽस्य सत्त्वं कर्तुं केनापि शक्यम्। न हि नीलं शिल्पिसहस्रेणाऽपि पीतं कर्तुं शक्यते। 'सदसत्त्वे घटस्य धर्मौ' इति चेत्, तथाऽपि असति धर्मिणि न तस्य धर्म इति सत्त्वं तदवस्थमेव, तथा च नाऽसत्त्वम्। असम्बद्धेना-

---

तयोर्वैशिष्ट्यबोधकं कार्यं सदिति वाक्यमतस्तस्य प्रतिज्ञात्वम्।

नतु किमिदं साध्यभूतं सत्त्वं नाम यद्युपादानसमवेतत्वमात्रं तदा सिद्धसाधनम्। घटोत्पत्तेः पूर्वंकपाले घटविरहेपि घटकाले कपाले घटसत्त्वे बाधकाभावात् यदि कार्यपूर्व-क्षणावच्छेदेन उपादानसमवेतत्वं तदा कार्यपूर्वक्षणस्य कार्यानधिकरणत्वनियमेन तत् क्षणावच्छेदेन कार्ये कपालसमवेतत्वग्रहासम्भवात् इति चेन्न। कारणव्यापारात् पूर्व-कालावच्छेदेन उपादानसमवेतत्वस्यैव साध्यत्वेन नोक्तदोषावकाशः। यद्यपि सत्कार्य-वादिनां मते कारणव्यापारस्यापि सत्त्वेन कारणव्यापारपूर्वकाल एवाप्रसिद्धः तथापि कारणव्यापाराभिव्यक्त्यधिकरणपूर्वक्षणावच्छेदेन उपादानसमवेतत्वं साध्यमिति न दोषः अधिकमग्रे व्यक्तीभविष्यति।

ननु परार्थानुमितिस्थले प्रतिज्ञाहेतूदाहरणादिपञ्चावयववाक्येनैवानुमितिर्भवति, प्रकृते च सत्कार्यमिति प्रतिज्ञावाक्ये सत्यपि हेतुवाक्याभावात्कथं तत्सिद्धिः स्यात् इत्यत आह। अत्र हेतुमाहेति। ननु असदकरणरूपस्य हेतोः पक्षीभूतकार्यऽवृत्तित्वेन कथं तस्य हेतुत्वमिति चेत् कार्यं सत् क्रियमाणत्वात् यन्न सत् तत्क्रियमाणं न भवति यथा नीलं पीतं इति शेषवदनुमाने हेतुत्वोपयोगिव्यतिरेकव्याप्तिबोधकत्वादेवास्य हेतुत्वम्।

क्रियमाणत्वसत्त्वयोर्व्याप्तिं ग्राहयति। असच्चेदिति। तथाच कार्यं यदि कारण-व्यापारात्पूर्वमसत् स्यात् तर्हि क्रियमाणं न स्यात् इति तर्केण तस्य कारणव्यापारात्पूर्वं सत्त्वसिद्धिः उक्ततर्कमूलकव्याप्तिं दृष्टान्तयति। नहीति। नीलं नीलरूपं शिल्पिस-हस्रेण पीतरूपं कर्तुं न शक्यते तथा च नीलरूपस्य पीतरूपात्मनाऽसत्त्वात् यथा तस्य पीतरूपता न सम्भवति एवमेव असतः कार्यस्य सद्रूपता न सम्भवत्येवेति भावः।

ननु यथा प्रथमं नीलरूपवान् घटः पाकवशेन रक्तरूपतामापद्यते एवमेव तत्र नी-लरूपपीतरूपयोः घटधर्मत्वात् एकस्मिन्नपि कालभेदेन विरुद्धानां धर्माणां समावेश-स्योभयवादिसिद्धत्वात्। एवमेव सत्त्वासत्त्वयोः घटधर्मत्वमस्माभिरङ्गीक्रियते तयो-र्विरोधेपि घटोत्पत्तिपूर्वकालावच्छेदेन असत्त्वं घटोत्पत्तिकालावच्छेदेन च तस्य सत्त्वमङ्गीक्रियत इति न काप्यनुपपत्तिरित्याशयेनाशङ्कते। सदसत्त्वाविति। परिह-रति। तथापीति। सत्त्वासत्त्वयोधर्मत्वाङ्गीकारेऽपीत्यर्थः। धर्मिणि घटादिरूपे असति धर्मस्य असत्त्वस्य घटीयत्वं न स्यादेव इति धर्मिणो घटस्यापि सत्त्वं प्राप्तमेव इति कथं तस्य असत्त्वं, नहि अविद्यमाने धर्मिणि तद्धर्मत्वं सम्भवति विद्यमाने च तस्य सत्त्वेन कथं तत्रासत्त्वमिति एतदेवाह तथाचेति। घटोत्पत्तिपूर्वकाले तस्य विद्यमान-ताङ्गीकारे चेत्यर्थः। नासत्त्वम् असत्त्वस्य तद्धर्मत्वं न सम्भवति सत्त्वासत्त्वयो-र्विरुद्धत्वादिति भावः। उत्पत्तेः प्राक् घटः असन् इति व्यवहारः असत्त्वस्य घटसम्ब-न्धस्वीकारे एव स्यात् नान्यथा तथा सति रूपादिनाऽसम्बन्धेपि रूपवान् घट इति व्यवहारः स्यात् सम्बन्धश्च विद्यमानेनैवेति तद्धर्मो घटस्याविद्यमानतया तेन सह

तदात्मना चाऽसत्त्वेन कथमसन् घटः ? तस्मात् कारणव्यापारात्पूर्वमिव ततः प्रागपि सदेव कार्यमिति ।

कारणाच्चाऽस्य सतोऽभिव्यक्तिरेवाऽवशिष्यते । सतश्चाऽभिव्यक्तिरुपपन्ना । यथा पीडनेन तिलेषु तैलस्य, अवघातेन धान्येषु तण्डुलानाम्, दोहनेन सौरभेयीषु पयसः । असतः करणे तु न निदर्शनं किञ्चिदस्ति । न खल्वभिव्यज्यमानं चोत्पद्यमानं वा क्वचिदसत् दृष्टम् ।

इतश्च कारणव्यापारात् प्राक् सदेव कार्यम्—"उपादानग्रहणात्", उपादानानि—कारणानि, तेषां ग्रहणं-कार्येण सम्बन्धः । उपादानैः कार्यस्य सम्बन्धादिति यावत् ।

एतदुक्तं भवति-कार्येण सम्बद्धं कारणं कार्यस्य जनकम्, सम्बन्धश्च कार्यस्याऽसतो न सम्भवति, तस्मादिति ।

---

असत्त्वं घटत्वरूपं घटधर्मो वा न सम्भवत्येवेति पूर्वोक्तव्यवहारोऽनुपपन्न एवेत्यर्थः । निगमयति । तस्मादिति । ननु कारणव्यापारात्पूर्वमपि कार्यस्य सत्त्वाङ्गीकारे कारणव्यापारानर्थक्यमित्यत आह । कारणाच्चाऽस्येति । सतः सद्रूपस्य, अस्य कार्यस्य, कारणव्यापारात् अभिव्यक्तिः सूक्ष्मरूपेण स्थितस्य स्थूलरूपापत्तिः, अवशिष्यते जायते । तथाच पूर्वकाले तस्य सूक्ष्मरूपेण सत्त्वं कारणव्यापारेण च स्थूलरूपेण तस्य स्थितिर्भवति, तदर्थमेव च कारणव्यापारावश्यकतेति भावः ।

ननु सूक्ष्मरूपेणावस्थितस्य स्थूलरूपापत्तिः कारणव्यापाराद्भवति असत एव तस्योत्पत्तिर्वा भवतीत्यत्र विनिगमकाभाव इत्यत आह । सतश्चेति । पूर्वं सद्रूपस्य अभिव्यक्तिः उपपन्ना युक्ता, न त्वसत इति । अमुमेवार्थं दृष्टान्तेन साधयति । यथेति । तैलस्येति षष्ठ्यन्तत्रयं अभिव्यक्तिरिति पूर्वोक्तमनुषञ्जयति । त्वत्पक्षे न कोपि दृष्टान्त इत्याह । असत इति । करणे उत्पत्तौ, किञ्चिदपि निदर्शनम् दृष्टान्तो नास्तीत्यर्थः । तथा च वादिप्रतिवादिभ्यां निर्णीतस्यैव दृष्टान्तरूपतया अस्माभिरसत्त्वेन निर्णीतस्य शशशृङ्गादेः उत्पत्तिर्न कस्यापि सम्मता, पूर्वोक्तस्थले तिलादौ तु सत एव तैलस्य अभिव्यक्तेर्नैयायिकेनाप्यङ्गीकारात् सतः अभिव्यक्तौ तस्य दृष्टान्तत्वं सम्भवत्येवेति । एतदेव विशदयति । न खल्विति । अभिव्यज्यमानमिति स्वमताभिप्रायेण तन्मते तूत्पद्यमानमिति ।

दार्ढ्याय हेत्वन्तरमवतारयति । इतश्चेति । वक्ष्यमाणयुक्तेश्चेत्यर्थः । उपादीयते कार्यं यः तान्युपादानानि इत्यभिप्रायेण उपादानपदार्थमाह । उपादानानि कारणानीति । गृह्यतेऽनेनेति व्युत्पत्त्या ग्रहणपदं सम्बन्धपरं, विशिष्टधीनियामकत्वात् सम्बन्धस्य, तस्य च प्रतियोगिसाकाङ्क्षतया तत्पदाध्याहारेण तदर्थमाह । कार्येण सम्बन्ध इति ।

फलितार्थमाह । एतदुक्तम्भवतीति । कार्यं उत्पत्तेः प्राक् स्वोपादानसम्बद्धं तज्जन्यत्वादित्यनुमानेन उत्पत्तेः प्राक् उपादानसम्बद्धत्वसिद्धौ तेनैव हेतुना उत्पत्तेः पूर्वं सत्त्वं साधनीयमिति भावः ।

स्यादेतत्—असम्बद्धमेव कारणैः कार्यं कस्मान्न जन्यते ? तथा चाऽसदेवोत्पत्स्यत इत्यत आह—"सर्वसम्भवाभावात्" इति । अ-सम्बद्धस्य जन्यत्वे असम्बद्धत्वाविशेषेण सर्वं कार्यजातं सर्वस्माद्भ-वेत् । न चैतदस्ति, तस्मान्नाऽसम्बद्धमसम्बद्धेन जन्यते, अपि तु स-म्बद्धं सम्बद्धेन जन्यत इति । यथाऽऽहुः सांख्यवृद्धाः—

"असत्त्वे नाऽस्ति सम्बन्धः कारणैः सत्त्वसङ्गिभिः ।
असम्बद्धस्य चोत्पत्तिमिच्छतो न व्यवस्थितिः—" ॥ इति ।

स्यादेतत्—असम्बद्धमपि सत् तदेव करोति यत्र यत्कारणं शक्तं, शक्तिश्च कार्यदर्शनादवगम्यते । तेन नाऽऽव्यवस्थेत्यत आह–"शक्तस्य शक्यकरणात्" इति । सा शक्तिः शक्तकारणाश्रया, सर्वत्र वा स्यात्, शक्ये एव वा ? सर्वत्र चेत् , तदवस्थैवाऽव्यवस्था । शक्ये

---

पूर्वोक्तानुमाने उपादानजन्यत्वमस्तु उत्पत्तेः प्राक् उपादानसम्बद्धत्वं मास्तु इति व्यभिचारशङ्कामुद्भावयति । स्यादेतदिति । उक्ताशङ्कानिवर्तकानुकूलतर्कप्रदर्शनपरं कारिकांशार्थमाह । असम्बद्धस्येति । तथाच स्वोपादानजन्यत्वं यदि उत्पत्तेः प्राक् उपादानसम्बद्धत्वव्यभिचारि स्यात् तदा स्वानुपादानसमवायिकार्यवृत्ति स्यात् इति तर्केण व्यभिचारशङ्का निवर्तनीयेति भावः ।

असतः सम्बन्धाभावे वृद्धसम्मतिमाह । यथाहुः साङ्ख्यवृद्धा इति । असत्त्वे कार्यस्य उत्पत्तेः प्रागसत्त्वे, सत्त्वसङ्गिभिः कारणैः सद्रूपैः कारणैः, सम्बन्धो न सम्भवति सदसतोस्तादात्म्यानुपपत्तेः, अस्मन्मते च कार्यकारणयोस्तादात्म्यात् । मास्तु कारणैः सह कार्यस्य सम्बन्ध इत्यत आह । असम्बद्धस्येति । कारणैः सम्बन्ध-रहितस्य कार्यस्योत्पत्तिमिच्छतः मते इति शेषः । व्यवस्थितिः तन्तुभ्य एव पटः मृद्भ्य एव घट इति व्यवस्थितिः नियमो न स्यादित्यर्थः ।

कारणेन सह असम्बद्धस्य कार्यस्य उत्पत्तिमङ्गीकुर्वाणः असत्कार्यवादी पूर्वोक्ताव्यवस्थां निराकर्तुमाशङ्कते । स्यादेतदिति । कारणेन सह कार्यस्य सम्बन्धाभावेपि यत्कारणं यत्कार्यनिरूपितशक्तिमत् तत् तदेव कार्यं करोति इति नोक्ताव्यवस्थेत्यर्थः । ननु दण्डादिरूपकारणे घटादिरूपकार्यनिरूपितैव शक्तिः ननु पटरूपकार्यनिरूपिता इत्यत्र किं प्रमाणमित्यत आह । शक्तिश्चेति । तथाच शक्तेरतीन्द्रियतया येन कारणेन यत्कार्यं जायते तस्मिन् तत्कार्यनिरूपिता शक्तिरिति कार्यणैव तदनुमानं सम्भवतीत्यर्थः । उक्तरीत्या ऽसत्कार्यवाद्याशङ्कानिराकरणपरत्वेन मूलमवतार्य तादृशाशङ्कां निराकर्तुं विकल्पयति । सा शक्तिरित्यादिना । शक्तकारणाश्रया सा शक्तिः सर्वत्र वा स्याच्छक्य एव वेत्यन्वयः । शक्तं कार्यानुकूलशक्तिमत्कारणं तत् आश्रयो यस्याः तथाभूता, सर्वत्रेति निरूपकतासम्बन्धेनेत्यादि । तत्राद्यपक्षे पूर्वोक्ताव्यवस्थायास्तादवस्थ्यमाह । सर्वत्र चेदिति । सर्वं कार्यजातं सर्वस्माद्भवेदिति पूर्वोक्ताव्यवस्था तदवस्थैव शक्त्यविशेषादित्यर्थः । द्वितीयपक्षे सत्कार्यवाद एव विश्रान्तिरित्याह । शक्ये चेदिति । शक्ये चेत् असति शक्ये तत्र तन्निरूपिता, शक्तिरिति कथं वक्तव्यम् इति योजना । तथाच निरूप्यनिरूपकभावरूपस्यापि सम्बन्धस्य सता सहैव सम्भवेन कथं अ-

चेत्कथमसति शक्ये तत्र इति वक्तव्यम्। शक्तिभेद एव एतादृशो यतः किञ्चिदेव कार्यं जनयेत् न सर्वमिति चेत्, हन्त भोः! शक्तिविशेषः कार्यसम्बद्धो वाऽसम्बद्धो वा? सम्बद्धत्वे नाऽसता सम्बन्ध इति सत् कार्यम्। असम्बद्धत्वे सैवाऽव्यवस्था, इति सुष्ठूक्तं "शक्तस्य शक्यकरणात्" इति।

इतश्च सत् कार्यमित्याह—"कारणभावाच्च", कार्यस्य कारणात्मकत्वात्। न हि कारणाद्भिन्नं कार्यम्, कारणं च सदिति कथं तदभिन्नं कार्यमसद्भवेत्?।

कार्यस्य कारणाभेदसाधनानि च प्रमाणानि—

न पटस्तन्तुभ्यो भिद्यते, तन्तुधर्मत्वात्। इह यद्यतो भिद्यते तत् तस्य धर्मो न भवति, यथा गौरश्वस्य। धर्मश्च पटस्तन्तूनां, तस्मान्नाऽर्थान्तरम्।

उपादानोपादेयभावाच्च नार्थान्तरत्वं तन्तुपटयोः, ययोरर्थान्त-

---

सता कार्येण तादृशसम्बन्धसम्भव इति अनायत्या कार्यस्य सत्त्वमङ्गीकार्यमेवेत्यर्थः।

पूर्वोक्तदूषणं परिहर्तुं पुनरपि असत्कार्यवादी आशङ्कते। शक्तिभेद एवेति। शक्तिभेदः शक्तिविशेषः, यतः शक्तिविशेषात् किञ्चिदेव कार्यं कार्यविशेष एव, तथाच शक्तिविशेषेण कार्यविशेष एव जन्यते इति घटादिरूपकार्यस्य पूर्वमसत्त्वेपि न सर्वस्मात् सर्वं कार्यजातं भवेदितिरीत्या पूर्वोक्ताव्यवस्थायाः प्रसङ्ग इति भावः। उक्तरीत्या शक्तिविशेषाङ्गीकारेपि पूर्वोक्तदोषस्य तादवस्थ्यमेवेत्याह। हन्त भोः इति। उपसंहरति। इति सुष्ठूक्तमिति। यतः शक्तं कारणं शक्यसम्बद्धमेव सत् कार्यं करोति नासम्बद्धमतः शक्तस्य शक्यकरणादिति सुष्ठु निर्दोषमभिहितमित्यर्थः।

सत्कार्यसाधकं हेत्वन्तरमवतारयति। इतश्चेति। कारणभावः कारणतादात्म्ये कारणाभिन्नत्वमिति यावत्। तथाच कार्यं सत् सद्रूपकारणाभिन्नत्वात् इत्यनुमानेन कार्यस्य सत्त्वं साधनीयमिति भावः। ननु कार्यस्य कारणाभिन्नत्वे किं मानमित्याशङ्कायामाह। कार्यस्येति। उच्यन्ते इति शेषः। तान्येव प्रमाणान्याह। न पटः इति। पटः तन्तुभ्यो न भिद्यते इत्यन्वयः। प्रतिज्ञावाक्यमभिधाय हेतुवाक्यमाह। तन्तुधर्मत्वादिति। तदवस्थाविशेषात्मकत्वादित्यर्थः। उक्तानुमाने अन्वयदृष्टान्तासम्भवेन व्यतिरेकदृष्टान्तमाह। इह यद्यतो भिद्यते इत्यादिना। इह परिदृश्यमानपदार्थेषु, तथाच व्यापकस्य तद्धर्मत्वाभावस्य निवृत्त्या व्याप्यस्य तद्भेदस्य निवृत्तिरूपाभेदस्य पटे सिद्धिरिति भावः। उपनयवाक्यमाह। धर्मश्च पटस्तन्तूनामिति। निगमयति। तस्मान्नार्थान्तरमिति। तस्मात् तन्त्वभेदव्याप्यतन्तुधर्मत्ववत्त्वात्, अन्यो अर्थः अर्थान्तरम् भिन्नपदार्थः तन्न भवति इत्यनर्थान्तरम् अभिन्न इति यावत्। एतेन एतन्मते न्यायस्य पञ्चावयवत्वमङ्गीकृतम्, ननु वेदान्तिकादिवत् त्र्यवयवत्वमपीति सूचितम्। केचित्तु तन्तुधर्मत्वादित्यस्य तन्त्वभाववद्वृत्तित्वादित्यर्थमाहुः।

प्रमाणान्तरमाह। उपादानोपादेयभावाच्चेति। उपादानानि समवायिकार-

रत्वं न तयोरुपादानोपादेयभावः, यथा घटपटयोः। उपादानोपादेयभावश्च तन्तुपटयोः तस्मान्नाऽर्थान्तरत्वम् ।

इतश्च नाऽर्थान्तरत्वं तन्तुपटयोः, संयोगाप्राप्त्यभावात्, अर्थान्तरत्वे हि संयोगो दृष्टो यथा कुण्डबदरयोः, अप्राप्तिर्वा यथा हिमवद्विन्ध्ययोः। न चेह संयोगाप्राप्ती, तस्मान्नाऽर्थान्तरत्वमिति ।

इतश्च पटस्तन्तुभ्यो न भिद्यते, गुरुत्वान्तरकार्याग्रहणात्। इह

---

णानि, उपादेयम् कार्यम्, तथाच समवायिकारणकार्यभावादित्यर्थः। व्यतिरेकदृष्टान्तमाह। यथोरिति। अर्थान्तरत्वं भेदः । उपनयमाह । उपादानोपादेयभावश्चेति। निगमयति। तस्मादिति।

पुनरपि प्रमाणान्तरेण तत्साधयति। इतश्चेति । संयोगाप्राप्त्यभावादिति। संयोगाभाववत्त्वे सति असम्बन्धाभावादित्यर्थः । विशेषणमात्रोपादाने हिमवद्विन्ध्ययोर्व्यभिचारः तयोः संयोगाभावेपि परस्परं भेदस्य सर्वजनसिद्धत्वात्, अतः विशेष्योपादानम् । तन्मात्रोपादाने च घटभूतलयोर्व्यभिचारः तयोरप्राप्त्यभावेपि भेदस्य अवश्यमङ्गीकारादत उभयोपादानम् । केचित्तु संयोगाप्राप्त्यभावादित्यस्य संयोगानाश्रितत्वात् विभागानाश्रितत्वाच्चेति हेतुद्वये तात्पर्यमाहुः। तदेतत् हिमवद्विन्ध्यान्तर्भावेण व्यभिचारादुपेक्षणीयमेव। उक्तहेतौ व्यतिरेकदृष्टान्तमाह । अर्थान्तरत्वे हीति। अप्राप्तिर्वा इत्यत्र दृष्ट इतिपदं दृष्टा इति लिङ्गविपरिणामेन योजनीयम्। यद्यपि हिमवद्विन्ध्ययोरपि कालिकादिरूपः सम्बन्धोऽस्त्येव तथापि विशिष्टबुद्धिनियामकस्यैव सम्बन्धत्वेन हिमवति विन्ध्यः विन्ध्ये वा हिमवानितिविशिष्टबुद्ध्यनुत्पत्त्या न तस्य प्राप्तिरूपसम्बन्धत्वमिति भावः। न च तथापि रूपादिना घटादेः संयोगाप्राप्त्योरभावात् तत्र व्यभिचार इति वाच्यम्। गुणगुणिनोरभेदस्यापि अस्माभिः स्वीक्रियमाणतयोक्तदोषानवकाशात्।

हेत्वन्तरमाह। गुरुत्वान्तरकार्याग्रहणादिति । उपादाननिष्ठगुरुत्वापेक्षया अतिरिक्तं यद्गुरुत्वं तस्य यत्कार्यं पतनरूपक्रियाविशेषः तस्य पटरूपकार्ये अग्रहणादित्यर्थः। अयमभिप्रायः, गुरुत्वं तावत् आद्यपतनासमवायिकारणीभूतो गुणविशेषः, स च न प्रत्यक्षः, तथा सति अधःस्थितस्य वस्तुनः गुरुत्वस्य त्वगिन्द्रियेण ग्रहणप्रसङ्गात्। ऊर्ध्वंस्थितस्यैव वस्तुनो गुरुत्वं गृह्यते इत्यपि न नियमः, अन्यत्रासञ्जितस्य ऊर्ध्वस्थितस्य वस्तुनोऽपि तद्ग्रहणापत्तेः, तस्मादतीन्द्रियमेव तत्। अनुमीयते च पतनरूपक्रियया इत्येवावश्यमभ्युपेयम् । एवं सति द्रव्याणां गुरुत्वप्रकर्षाप्रकर्षावपि नित्यानुमेयाविति सिध्यति। तथाहि तुलायां द्वे कोट्यौ भवतः तत्रैकस्यां कोटौ गुञ्जादिद्रव्यमवस्थापनीयम्, अपरकोटौ च तोलनीयं वस्तु अवस्थाप्यं, तत्र यदि गुञ्जादिद्रव्यापेक्षया तोलनीयवस्तुनः गुरुत्वं अपकृष्टं प्रकृष्टं वा न भवेत्तदा एकस्यापि कोटेरवनतिर्न भवेत्, यतो हि गुरुत्वं आद्यपतन एव कारणं द्वितीयादिपतनस्य वेगेनैवोत्पत्तेः, आद्याच्च पतनाद्वेगाख्यः संस्कारः उत्पद्यते ततश्च द्वितीयं पतनमितिरीत्या क्रियासन्तानः उत्पद्यते, तत्र यद्येकस्मिन् तुलाद्रव्ये समानगुरुत्वे द्वे वस्तुनी आसज्येते तर्हि तन्निष्ठगुरुत्वमपि समानवेगारम्भिकामेव आद्यपतनक्रियां कुर्यात्

यद्यस्माद्भिन्नम् तस्मात् तस्य गुरुत्वान्तरकार्यं गृह्यते, यथैकपलिकस्य स्वस्तिकस्य यो गुरुत्वकार्योऽवनतिविशेषस्तस्माद्द्विपलिकस्य स्वस्तिकस्य गुरुत्वकार्योऽवनतिभेदोऽधिकः । न च तथा तन्तुगुरुत्वकार्यात् पटगुरुत्वकार्यान्तरं दृश्यते । तस्मादभिन्नस्तन्तुभ्यः पट इति । तान्येतान्यभेदसाधनान्यवीतानि ।

एवमभेदे सिद्धे, तन्तव एव तेन तेन संस्थानभेदेन परिणताः, पटः न तन्तुभ्योऽर्थान्तरं पटः ।

स्वात्मनि क्रियानिरोधबुद्धिव्यपदेशार्थक्रियाभेदाश्च नैकान्तिकं

---

एवं सति कोट्यन्तरस्थितद्रव्यावनतिरपरकोटिस्थितद्रव्यवेगप्रतिबद्धा भवति । एक कोटिस्थितद्रव्यगुरुत्वस्य कोट्यन्तरावस्थितद्रव्यगुरुत्वापेक्षया अधिकत्वे तु तेन प्रकृष्टवेगजनिकायाः क्रियाया एवोत्पादेन तत्कोटौ गुरुत्वकार्यावनतिविशेषो भवति । एवं च कपालद्वयापेक्षया घटो यदि भिन्नः स्यात् तदा समानगुरुत्वं कपालचतुष्टयं गृहीत्वा कपालद्वयेन घटं निर्माय अवशिष्टकपालद्वयेन स घटस्तोलनीयः, यदि कपाल द्वयापेक्षयाऽतिरिक्तः कश्चन अवयवी स्यात् तदा गुरुत्वमपि अधिकमभविष्यदिति तत्कार्यं अवनातिविशेषोपि गृह्येत, तदग्रहणात् घटो न कपालापेक्षया भिन्न इति सिद्धम् । अत एव ग्रन्थकृता गुरुत्वान्तराग्रहणादित्यनुक्त्वा गुरुत्वान्तरकार्याग्रहणादित्युक्तम्, गुरुत्वस्यातीन्द्रियतया तदग्रहणस्य तदभेदसाधकत्वासम्भवात् ।

अत्रापि व्यतिरेकोदाहरणं दर्शयति । इहेति । गुरुत्वान्तरकार्यं न्यूनाधिकगुरुत्वकार्यं पतनं, गृह्यते अनुभूयते । दृष्टान्तमाह । यथैकपलिकस्येति । तोलकचतुष्टयात्मकैकपलेन परिमितस्य, स्वस्तिकस्य तन्नाख्यभूषणविशेषस्य, अवनतिविशेषः पतनाख्यक्रियाविशेषः । उपनयमाह । न च तथेति । निगमनमाह । तस्मादिति ।

अस्य चावीतस्य व्यतिरेकिणः उदाहरणमग्रेऽभिधास्यते इत्यादिना ग्रन्थेन निरूप्यत्वेन प्रतिज्ञातस्य अवीतस्योदाहरणमिदमेवेत्याह । तान्येतानीति ।

ननु पटस्य यदि तन्त्वभिन्नत्वं तदा कारणव्यापारस्यानावश्यकतापत्तिः तन्तुरूपस्य पटस्य कारणीभूतवेमादिव्यापारपूर्वकालेपि विद्यमानत्वादित्याशङ्कामपहरति । एवमभेद इति । एवं पूर्वोक्तरीत्या अनुमानप्रमाणेन, संस्थानभेदेन अवयवसन्निवेशविशेषेण, तथाच कार्यकारणयोरभेदेपि तादृशसंस्थानविशेषविशिष्टतन्तूनामेव पटरूपतया तादृशसंस्थानविशेषस्य च कारणव्यापारेणाभिव्यज्यमानतया तदर्थमेव कारणव्यापारस्याप्यावश्यकतेति भावः ।

ये तु नैयायिकाः पटः तन्तुभ्यो भिद्यते तन्तुषु उत्पद्यमानत्वादित्यादिना पूर्वोक्ताऽभेदसाधकानुमाने सत्प्रतिपक्षमाक्षिपन्ति । तान्प्रत्याह । स्वात्मनि क्रियेत्यादिना । स्वाभिन्ने पटादिरूपकार्यात्मके वस्तुनि, क्रिया उत्पत्तिः, निरोधः विनाशः, तयोर्या बुद्धिः पट उत्पद्यते पटो विनश्यति इत्यादिरूपा, व्यपदेशः तन्तुषु पटः इत्याकारको व्यवहारः, अर्थक्रिया तत्तत्कार्यकारित्वम्, तेषां भेदाः द्वन्द्वान्ते श्रूयमाणस्य भेदशब्दस्य प्रत्येकमभिसम्बन्धात्, क्रियानिरोधबुद्धिभेदः व्यपदेशभेदः अर्थक्रियाभे-

भेदं साधयितुमर्हन्ति। एकस्मिन्नपि तत्तद्विशेषाविर्भावतिरोभावा- भ्यामेतेषामविरोधात्। यथा हि कूर्मस्याऽङ्गानि कूर्मशरीरे निवि- शमानानि तिरोभवन्ति, निःसरन्ति चाऽऽविर्भवन्ति, न तु कूर्मत- स्तदङ्गान्युत्पद्यन्ते प्रध्वंसन्ते वा। एवमकस्या मृदः सुवर्णस्य वा घ- टमुकुटादयो विशेषा निःसरन्त आविर्भवन्त उत्पद्यन्त इत्युच्यन्ते, निविशमानास्तिरोभवन्ति विनश्यन्तीत्युच्यन्ते। न पुनरसतामुत्पा- दः सतां वा निरोधः। यथाऽऽह भगवान् कृष्णद्वैपायनः—

"नाऽसतो विद्यते भावो नाऽभावो विद्यते सतः—"

गी० २—१६ इति।

---

दश्च इति लभ्यते। नैकान्तिकमिति। पारमार्थिकं, भेदं साधयितुं नाहन्तीत्यर्थः। तथा- हि तन्तुपटयोरभेदे पट उत्पद्यते इति बुद्धसत्त्वेपि तन्तुर्नोत्पद्यते इति बुद्धिभेदो न स्यात्, एवं पटो विनश्यति इत्याकारकबुद्धिसत्त्वे तन्तुर्न विनश्यति इति बुद्धिभेदो न स्यात्। एवमेव तन्तुषु पटः इत्याधाराधेयावगाहिनी प्रतीतिर्न स्यात्। एवं प्रावरणसीवनादि- ति रूपक्रियाभेदोपि न स्यात् इतिरीत्या पूर्वोक्तसत्प्रतिपक्षहेतुभिः कथं तन्तुपटयोरभेदः सेत्स्यति इति भावः।

केचित्तु क्रियानिरोधौ च बुद्धिव्यपदेशार्थक्रियाव्यवस्थाभेदाश्च क्रियानिरोधबुद्धि- व्यपदेशार्थक्रियाव्यवस्थाभेदाः इति समासमङ्गीकुर्वन्तः दृश्यमानौ पटस्य उत्पत्ति- ध्वंसौ अभिन्ने तन्तौ अनुपपन्नौ तयोर्भेदं साधयतः। एवं बुद्धिभेदः पृथक् हेतुः, तथाच तन्तव इमे पटश्चायमिति ज्ञानवैलक्षण्यमपि भेदसाधकम् इति रीत्या वदन्ति।

क्रियानिरोधबुद्धिव्यपदेशार्थक्रियाभेदानां पारमार्थिकभेदासाधकत्वे हेतुमाह। एकस्मिन्नपीति। अभिन्नेऽपीत्यर्थः। तत्तद्विशेषेति। घटादिरूपो यो विशेषः तस्य यः आविर्भावः अभिव्यक्तिः, एवं यः तिरोभावः कारणे लयः, ताभ्याम्, एतेषां क्रियानिरोधबुद्धिव्यपदेशार्थक्रियाभेदानां, अविरोधात् कार्यकारणाभिन्नत्वसाधकहेतु- विरोधाभावात्। तथाच क्रियानिरोधबुद्धिभेदादिरूपाणां पूर्वोक्तहेतूनां न भेदसाधकत्वं तेषां व्यभिचरितत्वात् इति नोक्ताभेदसाधकहेतूनां सत्प्रतिपक्षितत्वमिति भावः।

एतदेव बोधयितुं आदौ क्रियानिरोधयोः भेदस्य भेदव्यभिचारित्वं दृष्टान्तेन प्रद- र्शयति। यथा हीति। निःसरन्ति इति शतृप्रत्ययान्तम्, अङ्गानि इति पूर्वोक्तेन सम्बध्यते। प्रध्वंसन्ते इत्यत्र कूर्मे इति शेषः। दार्ष्टान्तिके योजयति। एवमिति। असतां कार्याभिव्यक्तिप्राक्काले अविद्यमानानाम्, कारणव्यापारादुत्पाद इति न, नैव सतां पदार्थानां निरोधः अत्यन्तासत्त्वरूपेण परैरङ्गीक्रियमाणो ध्वंसः, उक्तयु- क्तेरिति शेषः।

उक्तार्थे भगवद्गीतावाक्यं प्रमाणयति। नासतो विद्यते भाव इति। असतः अविद्यमानस्य भावः उत्पत्तिः न विद्यते अपि तु सूक्ष्मरूपेण विद्यमानस्यैव, अन्यथा अत्यन्तासतः शशविषाणादेरपि कदाचिदुत्पत्तिः स्यात्, सतः विद्यमानस्य अभावः प्रध्वंसरूपोपि न विद्यते, किन्तु अभिव्यक्तावस्था एव खलु कार्यस्योत्पत्तिः, एवं सूक्ष्म- रूपेणावस्थानमेव च विनाश इति भावः।

यथा कूर्मः स्वावयवेभ्यः सङ्कोचविकासिभ्यो न भिन्नः, एवं घट-मुकुटादयोऽपि मृत्सुवर्णादिभ्यो न भिन्नाः ।

एवञ्च 'इह तन्तुषु पटः' इति व्यपदेशो यथा 'इह वने तिलकाः' इत्युपपन्नः ।

न चाऽर्थक्रियाभेदोऽपि भेदमापादयति, एकस्याऽपि नानार्थ-क्रियादर्शनात् । यथैक एव वह्निर्दाहकः पाचकः प्रकाशकश्चेति । ना-ऽप्यर्थक्रियाव्यवस्था वस्तुभेदे हेतुः, तेषामेव समस्तव्यस्तानामर्थ-क्रियाव्यवस्थादर्शनात् । यथा प्रत्येकं विष्टयो वर्त्मदर्शनलक्षणामर्थ-क्रियां कुर्वन्ति, न तु शिबिकावहनम्, मिलितास्तु शिबिकामुद्व-

---

नन्वुक्तरीत्या घटादेराविर्भावतिरोभावभिन्नयोः उत्पत्तिनिरोधयोरनङ्गीकारेपि ताभ्यामेव अवयवावयविनोः भेदः सेत्स्यति इत्याशङ्कायामाह । यथेति । घटादेरनु-त्पन्नतावस्थायां मृदादेः संकोचशालित्वं, अभिव्यक्तावस्थायां च विकाशशालित्वं बोध्यम् ।

एवं व्यपदेशभेदस्यापि भेदसाधकत्वं नास्तीत्याह । एवञ्चेति । उक्तरीत्या अभे-दस्यव सिद्धिसम्भवेनेत्यर्थः । तथाच व्यपदेशभेदस्य क्वचिद्भेदसामानाधिकरण्येपि न तस्य भेदसाधकत्वम्, इह वने तिलकाः इत्यादिस्थले भेदाभावेपि तादृशव्यपदेशा-त् । नच तादृशस्थले आधाराधेयावगाहिबोधजनकस्य तादृशव्यपदेशस्य बाधकप्रत्यक्ष-प्रमाणादिसत्त्वात् औपचारिकत्वेपि उक्तस्थले इह तन्तुषु पटः इति व्यपदेशस्य औपचा-रिकत्वे प्रमाणाभावेन मुख्यार्थताया एवाङ्गीकारावश्यकत्वेन तस्य भेदसाधकत्वम-स्त्येवेति वाच्यम् । वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम् इत्यादिश्रुति-रूपानुकूलतर्कसहकृतस्याभेदसाधकप्रमाणस्य बलवत्त्वेन उक्तव्यपदेशस्य औपचा-रिकताया एव न्याय्यत्वात् ।

अर्थक्रियाभेदस्य साधकत्वं निराकरोति । नचेति । अर्थक्रियाभेदोपि भेदं न आपा-दयति'साधयति, तस्य व्यभिचारित्वादिति शेषः । व्यभिचारमेवाह । एकस्यापीति । तथाच यत्र यत्र भिन्नक्रियाकारित्वं तत्र तत्र वस्तुभेदः इति व्याप्तिर्न सम्भवतीत्युक्त-हेतोर्न भेदसाधकत्वसम्भवः । अत्रैव दृष्टान्तमाह । यथा एक एवेति । तत्र वह्निभेदाभावेपि दाहपाकप्रकाशरूपपरस्परभिन्नकार्यकारित्वस्य सत्त्वाद्व्यभिचारः स्फुट एव ।

नन्वर्थक्रियाभेदो न विभिन्नार्थक्रियाकारित्वरूपः अपि तु अर्थक्रियाव्यवस्था-रूपः परस्परविरुद्धार्थक्रियाकारित्वमिति यावत् । स चास्त्येव भेदसाधकः उक्त-स्थले च दाहपाकादिरूपार्थक्रियाणां परस्परविरोधाभावेन हेतोरसत्त्वान्न व्यभिचार इत्याशङ्कायामाह । नापीति । वस्तुभेदे वस्तुभेदसाधने । व्यभिचारमाह । तेषा-मेवेति । तदभिन्नवस्तूनामित्यर्थः । समस्तानां मिलितानां, व्यस्तानां पृथक्पृथक्केषाम् । अत्रैव दृष्टान्तमाह । यथेति । विष्टयः वाहकाः भृत्यविशेषाः, वर्त्म मार्गः, लक्षणाम् स्वरूपाम्, शिबिका वाहनविशेषः ।

हन्ति, एवं तन्तवः प्रत्येकं प्रावरणमकुर्वाणा अपि मिलिता आवि॰र्भूतपटभावाः प्रावरिष्यन्ति ।

स्यादेतत्—आविर्भावः पटस्य कारणव्यापारात् प्राक् सन् अ सन् वा? असंश्चेत् प्राप्तं तर्ह्यसदुत्पादनम्। अथ सन्, कृतं तर्हि कारणव्यापारेण। न हि सति कार्ये कारणव्यापारप्रयोजनं पश्यामः। आविर्भावे चाऽऽविर्भावान्तरकल्पनेऽनवस्थाप्रसङ्गः। तस्मा॰दाविर्भूतपटभावास्तन्तवः क्रियन्त इति रिक्तं वचः।

मैवम्। अथाऽसदुत्पद्यत इति मते केयमसदुत्पत्तिः? सती,

---

दार्ष्टान्तिके योजयति। एवमिति। आविर्भूतपटभावाः आविर्भूतः अभिव्यक्तः पटभावो पटरूपो धर्मो येषां तथाभूताः, प्रावरिष्यन्ति प्रावरणरूपकार्यकारिणो भवि॰ष्यन्ति। तथाच वर्त्मसंदर्शनादिरूपार्थक्रियायां विष्टयो न परस्परापेक्षा भवन्ति शिबि॰कावहने तु मिलिता एवार्थक्रियाकारिण इति अर्थक्रियाव्यवस्थासत्त्वेपि समुदायस्य प्रत्येकानतिरिक्ततया न तत्र भेदः, तथा अत्रापि अर्थक्रियाव्यवस्था सत्त्वेऽपि न तयोः परस्परं भेदसिद्धिः सम्भवति इति भावः।

कारणव्यापारात्पूर्वं विद्यमानस्यैव कार्यस्य तेनाभिव्यक्तिरिति पूर्वोक्तसाङ्ख्यसि॰द्धान्ते येयं कार्यस्याभिव्यक्तिः सा सती असती वा, सती चेत् कारणव्यापारात्पूर्वमपि घटादेः प्रत्यक्षत्वापत्तिः कारणव्यापारानर्थक्यं च, असती चेत् तस्या अप्याविर्भावा॰न्तरमित्यनवस्था स्यात्, किञ्च असन्नपि आविर्भावः उत्पद्यते इत्यङ्गीकारे अस॰तः घटादेरपि उत्पत्तिः स्यादित्यभिप्रायवान्तार्किकः आशङ्कते। स्यादेतदिति। एतत् वक्ष्यमाणम्, स्यादित्यर्थः। तदेवाह। आविर्भाव इति। असन्नित्यत्रापि कारणव्या॰पारात्प्राग् इत्यन्वेति। कारणव्यापारेणाङ्गीक्रियमाणो आविर्भावः कारणव्यापारा॰त्पूर्वं सन्नसन्वा इति विकल्पः। द्वितीये दूषणमाह। असंश्चेदिति। तर्हि असतः उ॰त्पादनम् उत्पत्तिः, प्राप्ता सिद्धेत्यर्थः। एवं च यदि असतः उत्पादनमङ्गीकार्यमेव तदा असतो घटादेरपि उत्पादनाङ्गीकारे बाधकाभावात् सत्कार्यसाधनं पूर्वोक्तं असङ्ग॰तमेव स्यादिति न प्रधानादिसिद्धिसम्भव इति भावः। आद्ये दूषणमाह। अथ स॰न्निति। कारणव्यापारात्प्रागपि यदि पटाविर्भावो विद्यमान एव तदा कारणव्यापारेण कृतम् अलम्, तस्य प्रयोजनाभावादिति भावः। तदेव विशदयति। न हीति। कारण॰व्यापारस्य प्रयोजनं कार्यमेव, सति च तस्मिन् स निष्प्रयोजनक एवेति शङ्कितुरभिप्रा॰यः। नच आविर्भावः सन्नेवाङ्गीक्रियते कारणव्यापारेण तस्याप्याविर्भाव एव भवतीति न असतः उत्पादनाङ्गीकारापत्तिः, नापि कारणव्यापारानर्थक्यमित्याशङ्कायामाह। आविर्भावे चेति। आविर्भावस्य यो आविर्भावः स सन् असन् वा, असंश्चेत् प्राप्तं तर्हि असदुत्पादनम् इत्यादिरीत्या पूर्वोक्तदूषणस्य तत्रापि जागरूकतया सत एव तस्यापि आविर्भावः सोपि आविर्भावः सन्नेवाविर्भवति इत्यादिरूपा अनवस्था स्यात्, नचेयं प्रामाणिकी, इति आविर्भूतपटभावाः तन्तवः क्रियन्ते इति यद्वचः उक्तं, तत् रिक्तं पूर्वोक्तदोषदुष्टत्वादसारमित्यर्थः।

सिद्धान्ती प्रतिबन्द्युत्तरमाह। मैवमिति। नैयायिकमते असतः या उत्पत्तिः तैर॰

असती वा ? सती चेत्, कृतं तर्हि कारणैः । असती चेत्, तस्या अप्युत्पत्त्यन्तरमित्यनवस्था ।

अथ—उत्पत्तिः पटान्नाऽर्थान्तरम्, अपि तु पट एवाऽसौ, तथाऽपि यावदुक्तं भवति 'पटः'इति, तावदुक्तं भवति 'उत्पद्यते'इति । ततश्च 'पटः'इत्युक्ते 'उत्पद्यते'इति न वाच्यम्, पौनरुक्त्यात्, 'विनश्यति'इत्यपि न वाच्यम्, उत्पत्तिविनाशयोर्युगपदेकत्र विरोधात् ।

तस्मादियं पटोत्पत्तिः स्वकारणसमवायो वा, स्वसत्तासमवायो

---

ङ्गीक्रियते सा उत्पत्तिः सती असती वा इतिरीत्या आविर्भावाङ्गीकारे यो दोषः स एव उत्पत्त्यङ्गीकारेपि स्यादेवेति "यश्चोभयोः समो दोषः परिहारोपि वा समः । नैकः पर्यनुयोक्तव्यः तादृगर्थविचारणे । इति न्यायेन एतादृशदोषानुद्भावनमेवोचितमिति भावः।

अथ उत्पत्तिर्नाम आद्यक्षणसम्बन्धः, क्षणे आद्यत्वञ्च स्वाधिकरणक्षणध्वंसानधिकरणत्वं, स च सम्बन्धः न संयोगादिरूपः गुणादीनामुत्पत्तौ तदसम्भवादिति स्वरूपसम्बन्ध एव, सच स्वरूपसम्बन्धः प्रतियोगिस्वरूप एवेति पटोत्पत्तिरपि पटरूपैवेति तस्याप्युत्पत्तिः पटरूपैवेति न कारणव्यापारानर्थक्यं नाप्यनवस्था इति भवदुक्तदूषणस्य मन्मतेऽसम्भवात् कथं यश्चोभयोः इति न्यायस्यात्र प्रसर इत्याशयेनाशङ्कते । अथेति । पटोत्पत्तिः न पटभिन्ना । अपि तु पटरूपैवेत्यर्थः । असौ पटोत्पत्तिः । निराकरोति । तथापीति । उक्तरीत्या उत्पत्तेः पटानतिरिक्तत्वाङ्गीकारे इत्यर्थः । पटपदार्थस्य उत्पत्तिपदार्थानतिरिक्ततया पट उत्पद्यते इति प्रयोगस्य सर्वप्रामाणिकसम्प्रतिपन्नस्य पौनरुक्त्यदोषदुष्टत्वापत्तिः । एवं घटो घटः इत्यादिवाक्याच्छाब्दबोधाभावेन उद्देश्यतावच्छेदकविधेययोर्भेदस्य शाब्दबोधं प्रति कारणत्वेन तादृशवाक्याच्छाब्दबोधानुपपत्तिरपि स्यात् । दूषणान्तरमप्याह । विनश्यति इत्यपि न वाच्यमित्यादिना । पटो विनश्यति इत्यादि प्रयोगस्यापि सर्वप्रामाणिकसम्प्रतिपन्नस्य विरुद्धार्थप्रतिपादकत्वरूपदोषदुष्टत्वापत्तिः स्यात् । अत्रैव हेतुमाह । उत्पत्तिविनाशयोरिति । कालान्तरावच्छेदेन एकत्र उत्पत्तिविनाशयोः सम्भवादाह । युगपदिति । एककालावच्छेदेनेत्यर्थः । विभिन्नाधिकरणेषु एककालावच्छेदेन विभिन्नपदार्थयोरुत्पत्तिविनाशयोः सम्भवादाह । एकत्रेति । एकदेश इत्यर्थः । तथाच पटपदस्य उत्पत्तिपदसमानार्थकतया उत्पत्तिविनाशयोरेकत्र युगपद्विरोधेन पटो विनश्यति इति वाक्यस्योक्तदोषदुष्टत्वं स्यादेवेति भावः ।

पूर्वोक्तरीत्या उत्पत्तेः उत्पत्त्यङ्गीकारेऽनवस्था, अनङ्गीकारे च कारणव्यापारानर्थक्यं, पटाद्यभिन्नत्वाङ्गीकारे च पूर्वोक्तयोर्वाक्ययोर्दुष्टत्वापत्तिः, अतः उत्पत्तेः लक्षणान्तरमेव कर्तव्यमित्याशयेनाह । तस्मादियमिति । यतः पूर्वोक्तदोषः तस्मादित्यर्थः । स्वकारणसमवाय इति । स्वस्य कार्यस्य यत् कारणं तस्मिन् समवायः समवायरूपसम्बन्धविशेष एव पटोत्पत्तिः नतु तदतिरिक्ता, तथाच पटाभिव्यक्तिपूर्वकाले तन्तुना सह पटसमवायस्याभावेन तदा न पट उत्पद्यते इति व्यवहारः । उक्तलक्षणस्य कारणत्वघटितत्वेन गौरवादाह । स्वसत्तासमवाय इति । स्वस्मिन् पटादिरूपकार्ये यः सत्तासमवायः सत्तारूपजातिविशेषस्य समवायात्मकसम्बन्धविशेषः, स एवोत्पत्तिः । उभयथापि

वा, उभयथाऽपि नोत्पद्यते, अथ च तदर्थानि कारणानि व्याप्रार्यन्ते। एवं सत एव घटादेराविर्भावाय कारणापेक्षेत्युपपन्नम्।

---

उक्तप्रकारद्वयस्यापि उत्पत्तिस्वरूपत्वाङ्गीकारेपि। नोत्पद्यते उत्पत्तिरिति शेषः। भव-न्मते समवायस्य नित्यतया तस्योत्पत्त्यसम्भवेन तदात्मकोत्पत्तेरपि उत्पत्तिर्न सम्भव-त्येवेति भावः। भवदुक्तरीत्या उत्पत्तेर्नित्यत्वं तथापि प्रकृते किमायातमित्यत आह। अथ चेति। तदर्थानि उत्पत्तिप्रयोजनकानि, कारणानि व्याप्रार्यन्ते व्यापारवन्ति क्रिय-न्ते, लौकैरिति शेषः। एवं उक्तरीत्या अस्मन्मतेपि सत एव कारणव्यापारात्प्राग्विद्यमा-नस्यैव, कार्यस्य आविर्भावाय कारणापेक्षा इति उपपन्नम् युक्तमित्यर्थः। भवन्मते सम-वायस्वरूपोत्पत्तेः प्राक् विद्यमानत्वेपि यथा तदर्थं लौकैः कारणानि व्याप्रार्यन्ते तथा अस्मन्मतेपि प्राक्विद्यमानस्यैव कार्यस्याभिव्यक्तये कारणानि लौकैर्व्याप्रार्यन्ते इति समानमेवोत्तरमिति भावः।

ननूक्तरीत्या प्रतिबन्द्युत्तरेण नैयायिकस्य पर्यनुयोगासम्भवेपि साङ्ख्यशास्त्राध्येतॄ-णां पूर्वोक्तरीत्या आविर्भावः सन् असन् वा इति विकल्पे प्रतिपादितशङ्कायाः अनिरा-सेन तेषां कथं सत्कार्यवादनिश्चयः स्यात् इति चेदुच्यते। सत्कार्यवादाङ्गीकर्तॄणां मते कार्यस्य सत्त्वाङ्गीकारेपि सर्वकार्याणां अवस्थातः अनित्यत्वं स्वरूपेण च नित्यत्वमि-त्येवाङ्गीक्रियते। तथाच अवस्थानां उपजननापायधर्मवत्स्वरूपानित्यत्वाङ्गीकारात् व्य-क्तावस्थारूपस्याविर्भावस्य असत्येवोत्पत्तिरङ्गीक्रियते इति न पूर्वोक्तदूषणावकाशः। नच तथासति सत्कार्यवादहानिः, कार्यस्य सूक्ष्मावस्थाया एवास्माभिरसत्तारूपत्वा-भ्युपगमात्, नच तथापि अभिव्यक्तेरपि अभिव्यक्त्यङ्गीकारे अनवस्थापत्तिरिति वाच्यम्। एतादृशानवस्थायाः प्रामाणिकत्वेनादोषात् अत एवोक्तं सूत्रकृता "पारम्प-र्यतोऽन्वेषणा बीजाङ्कुरवदिति" साङ्ख्य सू० अ० १-सू० १२२-। अत्र विज्ञानभिक्षुः अदोषत्वादित्यर्थः, बीजाङ्कुराभ्यां चात्रायमेव विशेषो यद्बीजाङ्कुरस्थले क्रमिकपरम्प-रयाऽनवस्था, अभिव्यक्तौ चैककालीनपरम्परयेति प्रामाणिकत्वं तु तुल्यमेवेति। सदेव सौम्येदमग्र आसीत् इत्यादिश्रुतिरूपप्रमाणसिद्धसत्कार्यवादान्यथानुपपत्त्या कल्प्यमानायः अस्या अनवस्थायाः प्रामाणिकत्वे न विवादलेशोपीति भावः।

परे तु असत्कार्यवादमतेपि घटादीनां या उत्पत्तिः सा उत्पद्यते न वा, उत्पद्यते चेत् तस्या अपि उत्पत्त्यन्तरं, नोत्पद्यते चेत् असत्त्वान्नोत्पद्यते उत नित्यत्वात्, आद्ये घटादीनामुत्पत्त्यभावात्सदानुपलब्धिप्रसङ्गः, द्वितीये तु सर्वदा घटादिरूपकार्यो-पलम्भप्रसङ्गः, इति दूषणस्य जागरूकतया तद्वारणार्थं उत्पत्तेरुत्पत्तिः न ततो भिन्ना अपि तु तद्रूपैवेत्यस्यैवावश्यं वक्तव्यतया तद्वदेव आविर्भावस्थलेपि आविर्भावस्या-विर्भावः नातिरिक्तः अपि तु पूर्वाविर्भावरूप एवेति अस्माभिरपि समाधातुं शक्यत्वा-न्नोक्तदोषावसरः, अत एवोक्तं सूत्रकृता 'उत्पत्तिवद्वाऽदोषः' अ० १ सू० १२३ इति। नच तथापि आविर्भावस्याविर्भावान्तरास्वीकारेऽपि तस्य सत्त्वेन तदर्थं कारणव्या-पारोपि व्यर्थ एवेति वाच्यम्। सत एव घटादेरभिव्यक्तिरिति सिद्धान्ते घटादीनां सत्त्वाङ्गीकारेपि अभिव्यक्तेः कारणव्यापारात्पूर्वमसत्त्वाभ्युपगमात्र कारणव्यापारा-नर्थक्यमपीति वदन्ति। साङ्ख्यचन्द्रिकाकारास्तु तत्तत्कार्याभिव्यक्तेः तत्तत्काय-निष्ठसत्त्वगुणरूपतया तस्य च नित्यत्वेपि तमसा प्रतिबद्धत्वात्र तस्या व्यवहा-

न च पटरूपेण कारणानां सम्बन्धः, तद्रूपस्याऽक्रियात्वात्, क्रियासम्बन्धित्वाच्च कारकाणाम्, अन्यथा कारणत्वाभावात्।

तस्मात् सत् कार्यमिति पुष्कलम्।

तदेवं प्रधानसाधनानुगुणं सत्कार्यमुपपाद्य यादृशं तत् प्रधानं साधनीयं तादृशमादर्शयितुं विवेकज्ञानोपयोगिनी व्यक्ताव्यक्तसारूप्यवैरूप्ये तावदाह—

हेतुमदनित्यमव्यापि सक्रियमनेकमाश्रितं लिङ्गम्।
सावयवं परतन्त्रं व्यक्तं, विपरीतमव्यक्तम्॥ १०॥

"हेतुमत्" इति। व्यक्तं हेतुमत्, हेतुः कारणम, तद्वत्, यस्य

---

रोपयोगित्वं अभिव्यञ्जकसामग्र्या उत्तेजकेन तमसः प्रतिबन्धात् तस्या व्यवहारोपयोगित्वं भवत्येवेति न सत्कार्यवादे कापि क्षतिरित्याहुः।

उत्पत्तेः स्वकारणसमवायस्वरूपत्वाङ्गीकारे समवायस्य नित्यत्वेपि तदर्थं कारणापेक्षा यथा युज्यते तथैव अभिव्यक्तेः पूर्वं सत्त्वेपि तदर्थं कारणापेक्षा युक्तैवेति पूर्वोक्तं उत्पत्तेः स्वकारणसमवायस्वरूपतामनङ्गीकुर्वन् तार्किकः आशङ्कते। नचेति। पटेति कार्यमात्रोपलक्षणम्, तस्य यद्रूपं तेन सह यः कारणानां कुविन्दादीनां सम्बन्धः कारणत्वरूपः स एव पटोत्पत्तिपदार्थः पटादिकार्योत्पत्त्यनुकूलव्यापारवत्त्वं कारणस्य यदुच्यते तत् पटरूपानुकूलव्यापारवत्त्वरूपमिति यावत्। तथा च पटरूपस्य पूर्वमसत्त्वेन तस्यैवोत्पत्तिपदार्थत्वमित्याशयः। निराकरोति। तद्रूपस्येति। पटरूपस्येत्यर्थः। अक्रियात्वादिति। तस्य गुणरूपत्वेन क्रियारूपत्वासम्भवादिति भावः। नच पटरूपस्य क्रियारूपत्वं न भवतु तथापि तेन सह कारणानां सम्बन्धः कुतो न भवतीत्याशङ्कायामाह। क्रियासम्बन्धित्वाच्चेति। तथाच तत्सम्बन्धस्य जनकत्वरूपस्य कारणे सत्त्वेपि तस्य क्रियात्वाभावेन न तस्य कारणत्वं सम्भवति कारयति। इति कारणमिति व्युत्पत्त्या क्रियासम्बन्धिन एव कारणरूपत्वादुक्तस्थले तदभावात् एतदेवाह। अन्यथेति। क्रियासम्बन्धित्वास्वीकारे, कारणत्वमेव न स्यात् उत्पत्तेश्च धात्वर्थरूपतया क्रियात्वमक्षतमेव, धात्वर्थो हि क्रिया ज्ञेयो भाव इत्यभिधीयते। इति वचनात्। रूपस्य तु धात्वर्थत्वाभावेन न तद्रूपत्वसम्भव इति। उपसंहरति। तस्मादिति। यतः सत्कार्यवादातिरिक्तमतस्य सदोषत्वं सत्कार्यवादस्यैव च निर्दोषत्वमतः, सत्कार्यमिति। मतमिति शेषः। पुष्कलम् युक्तिश्रुतिरूपप्रमाणानुगुणत्वात् श्रेष्ठमित्यर्थः॥

कारिकान्तरमवतारयति। तदेवमिति। पूर्वोक्तप्रकारेणेत्यर्थः। प्रधानसाधनानुगुणं यादृशं प्रधानं साधनीयं तादृशप्रधानसिद्ध्युपयोगिनं कार्यस्य सत्त्वमुपपाद्य युक्त्या व्यवस्थाप्य। विवेकज्ञानोपयोगीति। कृतव्याख्यानमेतत्।

विवृणोति। व्यक्तमिति। व्यक्तम् प्रधानपुरुषातिरिक्तं महत्तत्त्वादिपञ्चमहाभूतात्मकपदार्थजातम्, अयं च लक्ष्यनिर्देशः। साधर्म्यमाह। हेतुमदिति। हेतुमत्पदार्थमाह। कारणमिति। तद्वत्ता च स्वजन्याविर्भावाश्रयत्वसम्बन्धेन, तथाच कादाचित्काविर्भावाश्रयत्वमिति पर्यवसन्नम्। नच अन्तःकरणस्य मनोरूपस्य नित्यतया कथं तत्रोक्तहेतुमत्त्वसाधर्म्यसङ्गतिरित्याशङ्कायामाह। यस्य चेति। तथाच अन्तःकरणा-

च यो हेतुस्तमुपरिष्टाद्वक्ष्यति ।

"अनित्यम्," विनाशि, तिरोभावीति यावत् ।

"अव्यापि," सर्वं परिणामिनं न व्याप्नोति ।

कारणेन हि कार्यमाविष्टम्, न कार्येण कारणम् । न च बुद्ध्यादयः प्रधानं वेविषतीत्यव्यापकाः ।

"सक्रियम्," परिस्पन्दवत् । तथा हि बुद्ध्यादयः उपात्तमुपात्तं देहं त्यजन्ति, देहान्तरं चोपाददते, इति तेषां परिस्पन्दः । शरीरपृथिव्यादीनां च परिस्पन्दः प्रसिद्ध एव ।

---

दीनामपि अनित्यताया अग्रे वक्ष्यमाणतया न तत्रोक्तलक्षणाव्याप्तिरिति भावः । उपरिष्टात् प्रकृतेर्महांस्ततोऽहङ्कारः इत्यादिकारिकायाम् । वक्ष्यति मूलकार इति शेषः । साधर्म्यान्तरं व्याचष्टे । अनित्यं विनाशीति । विनाशप्रतियोगित्वमित्यर्थः । सत्कार्यवादिमते अत्यन्तासत्त्वरूपस्य विनाशस्य घटादावभावेपि तिरोभावरूपस्य तस्य तत्र सत्त्वमक्षतमेवेत्याशयेन तात्पर्यार्थमाह । तिरोभावीति यावदिति । यद्यपि प्रागभावाप्रतियोगित्वे सति नाशाप्रतियोगित्वस्य नित्यत्वरूपतया अनित्यत्वमपि प्रागभावप्रतियोगित्व ध्वंसप्रतियोगित्वान्यतररूपमेव तन्त्रान्तरकृतामभिमतं, तथापि प्रागभावस्य प्रमाणाभावेन अनङ्गीकारात् नित्यत्वलक्षणे तद्प्रतियोगित्वस्यानिवेशनीयतया अनित्यत्वमपि न तादृशान्यतररूपमपि तु नाशप्रतियोगित्वस्वरूपमेवेति ।

अव्यापित्वरूपं साधर्म्यान्तरं व्याचष्टे । सर्वमिति । तथाच सर्वपरिणाम्यव्यापकत्वमिति पर्यवसन्नं, तेन महत्तत्त्वादेः अन्तःकरणादिरूपस्य किञ्चित्परिणामिव्यापकत्वेपि न तेषु लक्षणाव्याप्तिः तेषां यत्किञ्चित्परिणामिव्यापकत्वेपि प्रकृत्यादिरूपपरिणाम्यव्यापकत्वेन सर्वपरिणामिव्यापकत्वाभावात् । परिणामिपदानुपादाने प्रकृत्यादौ सर्वान्तर्गतपुरुषव्यापकत्वाभावेन तत्रातिव्याप्तिः स्यात् अतस्तदुपादानम् । महत्तत्त्वादीनामव्यापकत्वे हेतुमाह । कारणेन हीति । आविष्टम् व्याप्तम्, तथाच महत्तत्त्वादीनां कार्यतया तेषां कारणव्याप्यत्वं स्यादेव नतु प्रधानस्य महत्तत्त्वव्याप्यत्वं कार्येण कारणव्याप्त्यभावात्, इत्याशयेनाह । न कार्येणेति । आविष्टमिति पूर्वोक्तमनुषज्यते । बुद्ध्यादय इति । वेविषति व्याप्नुवन्ति, तेषां प्रधानकार्यत्वात् इति शेषः ।

क्रियाशब्दस्य धात्वर्थमात्रपरतया परिणामात्मकक्रियायाः प्रधानेपि सत्त्वेन तत्रोक्तलक्षणातिव्याप्तिरित्याशयेन क्रियाशब्दस्य परिस्पन्दार्थकतामाह । सक्रियं परिस्पन्दवदिति । परिस्पन्दो हि नैयायिकाद्यभिमतकर्मरूपः स च न प्रधानादिषु सम्भवति तेषां विभुतया क्रियाश्रयत्वाभावात् । बुद्ध्यादीनां क्रियाश्रयत्वमुपपादयति । तथाहीत्यादिना । उपात्तम् गृहीतम्, देहं त्यजन्ति मरणसमये इति शेषः, देहान्तरं अन्यदेहं उपाददते गृह्णन्ति जन्मकाल इति शेषः । तथा च पूर्वदेहसंयोगनाश उत्तरदेहसंयोगश्च बुद्ध्यादीनां कर्मवत्त्वाभावे न स्यादेवेति तेषां कर्मवत्त्वं सिद्धम्, शरीरादीनां कर्मवत्त्वं प्रत्यक्षसिद्धमेवेत्याह । शरीरपृथिव्यादीनामिति । प्रत्यक्षसिद्धक्रियाश्रयस्य शरीरस्य पृथिवीत्वेपि पृथगुपन्यासः गोबलीवर्दन्यायेन बोध्यः । प्रसिद्धः प्रत्यक्षप्रमाणसिद्धः ।

"अनेकम्," प्रतिपुरुषं बुद्ध्यादीनां भेदात् । पृथिव्याद्यपि शरीरघटादिभेदेनाऽनेकमेव ।

"आश्रितम्," स्वकारणमाश्रितम् । बुद्ध्यादिकार्याणामभेदेऽपि कथञ्चिद्भेदविवक्षयाऽऽश्रयाश्रयिभावः, यथा 'इह वने तिलकाः' इत्युक्तम् ।

"लिङ्गम्," प्रधानस्य । यथा चैते बुद्ध्यादयः प्रधानस्य लिङ्गं

---

अनेकत्वं न एकभिन्नत्वं वस्तुमात्रस्यैव एकत्वात् तद्भिन्नत्वाप्रसिद्धेः, अपि तु स्वसजातीयद्वितीयसहितत्वं इत्याशयेन बुद्ध्यादीनां अनेकत्वं दर्शयति । प्रतिपुरुषमिति । पुरुषभेदेन बुद्ध्यादीनां भिन्नत्वात्, अन्यथा तत्त्वसाक्षात्कारे एकस्य जाते बुद्धेर्विनाशात् एकस्य मुक्ततायां सर्वमुक्तत्वापत्तिः स्यात् । यद्यपि पुरुषस्य प्रतिशरीरं भिन्नत्वेन तत्र स्वजातीयद्वितीयसहितत्वरूपानेकत्वलक्षणस्यातिव्याप्तिः सम्भवति । तथापि अस्य प्रधानवैधर्म्यरूपताया एवाङ्गीकरणीयतया नोक्तदोषावसरः । अतएव वक्ष्यति ग्रन्थकारः "एवमनेकत्वं व्यक्तसाधर्म्यं तत्कथमुच्यते तद्विपरीतः पुमानिति" इत्यादिना ग्रन्थसन्दर्भेण । नच स्वसजातीयद्वितीयसहितत्वं यद्यनेकत्वं तदा प्रकृतावतिव्याप्तिः । तस्या अपि परिणामित्वादिना स्वसजातीयमहत्तत्त्वादिरूपद्वितीयसहितत्वात् । नच तत्त्वविभाजकोपाधिमत्त्वेन साजात्यं विवक्षणीयं, स्वाश्रयप्रतियोगिकान्योन्याभावसमानाधिकरणतत्त्वावभाजकोपाधिमत्त्वं स्वप्रतियोगिवृत्तित्व स्वानुयोगिवृत्तित्वोभयसम्बन्धेन भेदविशिष्टतत्त्वविभाजकोपाधिमत्त्वमिति यावत् । तथाच प्रधानस्वरूपतत्त्वविभाजकोपाधेः तादृशोभयसम्बन्धेन भेदविशिष्टत्वाभावान्नोक्तस्थलेऽतिव्याप्तिरिति वाच्यम् । प्रकृतेरपि प्रतिक्षणपरिणामिनो हीत्यादिना परिणामित्वाभ्युपगमात् तत्रापि स्वसजातीयद्वितीयकत्वरूपानेकत्वसम्भवात् इति चेन्न । स्वप्रतियोगिवृत्तित्व स्वप्रतियोगिसमानकालीनस्वानुयोगिवृत्तित्वोभयसम्बन्धेन भेदविशिष्टस्वस्य तत्त्वविजकोपाधौ निवेशादुक्तातिव्याप्तिविरहात् । परे तु प्रकृतेः परिणामित्वेपि तस्याः पूर्वप्रकृतिभिन्नत्वाभावेन न तत्रोक्तलक्षणातिव्याप्तिसम्भव इति वदन्ति ।

साधर्म्यान्तरं व्याचष्टे । आश्रितमिति । आश्रयाश्रयिभावस्याग्रे प्रदर्शनीयतया सत्त्वविशिष्टप्रकृतेः रजोविशिष्टप्रकृत्या आश्रयाश्रयिभावसम्भवात् तत्रातिव्याप्तिः स्यादत आह । स्वकारणमिति । तथाच बुद्ध्यादीनां स्वकारणाप्रसिद्ध्या तदाश्रितत्वरूपस्य लक्षणस्य नातिव्याप्तिरिति भावः । नच पूर्वं कार्यकारणयोरभेदस्य प्रतिपादिततया महत्तत्त्वादीनां स्वकारणीभूतप्रधानाश्रितत्वं न सम्भवतीति कथं तत्र लक्षणसमन्वय इत्यत आह । अभेदेपीति । कथञ्चिदिति । प्रकृतित्व महत्तत्त्वादिरूपयोः भेदविवक्षयेत्यर्थः । अत्रैव पूर्वोक्तं दृष्टान्तं स्मारयति । यथेति । उक्तमिति । सत्कार्यसाधनावसर इति शेषः ।

लिङ्गत्वं अनुमापकत्वं तस्य च प्रधानेपि सत्त्वेन तत्रातिव्याप्तिः तस्य पुरुषलिङ्गत्वात् एतच्च अग्रे कारिकायां स्फुटीभविष्यति इति तत्रातिव्याप्तिनिराकरणार्थमाह । प्रधानस्येति । प्रधानानुमापकत्वलक्षणस्य महत्तत्त्वादिषु सत्त्वं प्रतिपादयितुमाह । यथा चैत इति । बुद्ध्यादय इति । आदिना अन्तःकरणादिव्यक्तपरिग्रहः । उपरिष्टादि-

तथोपरिष्टाद्वक्ष्यति। प्रधानं तु न प्रधानस्य लिङ्गं पुरुषस्य लिङ्ग भवदपीति भावः।

"सावयवम्," अवयवनमवयवः, अन्वयवानामवयविनां मिथः संश्लेषो मिश्रणं संयोग इति यावत्। अप्राप्तिपूर्विका प्राप्तिः संयोगः। तेन सह वर्तत इति सावयवम्।

तथा हि—पृथिव्यादयः परस्परं संयुज्यन्ते, एवमन्येऽपि, न तु प्रधानस्य बुद्ध्यादिभिः संयोगः, तादात्म्यात्। नाऽपि सत्त्वरजस्तमसां परस्परं संयोगः, अप्राप्तेरभावात्।

"परतन्त्रम्," बुद्ध्यादि। बुद्ध्या स्वकार्येऽहङ्कारे जनयितव्ये प्रकृत्यापूरोऽपेक्ष्यते, अन्यथा क्षीणा सती नाऽलमहङ्कारं जनयितुमिति स्थितिः। एवमहङ्कारादिभिरपि स्वकार्यजनने इति सर्वं स्वकार्येषु प्रकृत्याऽऽपूरमपेक्षते। तेन परां प्रकृतिमपेक्षमाणं कारणमपि स्वकार्यजनने परतन्त्रं व्यक्तम्।

---

ति। भेदानां परिमाणादित्यादि कारिकायामित्यर्थः। प्रधानस्येत्यस्य प्रयोजनमाह। प्रधानन्त्विति। लिङ्गत्वाभावं तस्याशङ्क्य निराकरोति। पुरुषस्येति।

सावयवपदस्य अवयवसमवेतत्वार्थकत्वे परमाणावव्याप्तिः तस्य अवयवसमवेतत्वाभावात् इत्याशयेन सावयवपदार्थमाह। अवयवनमिति। अवपूर्वकस्य युवमिश्रणे इति धातोः ल्युटि रूपमिदं, मिथः परस्परम्। तथाच परस्परसंयोगवत् प्रतियोगितानुयोगितान्यतरसम्बन्धेन संयोगाश्रय इति यावत्। मिश्रणं न समानाभिहाररूपमपि तु संयोग एवेत्याह। संयोग इति। संयोगलक्षणमाह। अप्राप्तिपूर्विका प्राप्तिरिति। समन्वयप्रकारं दर्शयति। तथाहीति। प्रधानस्य बुद्ध्यादिभिः संयोगाभावे हेतुमाह। तादात्म्यादिति। एतेन अप्राप्तिपूर्विका इति विशेषणस्य सार्थक्यमपि दर्शितम्। न च तथापि सत्त्वरजस्तमोगुणैः प्रकृतेः सत्त्वादीनां परस्परसंयोगसत्त्वात् तस्यां संयोगानुयोगित्वसत्त्वादतिव्याप्तिरिति आकाङ्क्षायामाह। नापीति। सत्त्वरजस्तमसां परस्परं संयोगाभावे हेतुमाह। अप्राप्तेरभावादिति। तथाच तत्सम्बन्धस्य नित्यतया न तत्राप्राप्तिपूर्वकत्वमिति भावः।

परतन्त्रमित्यस्य बुद्ध्यादौ समन्वयप्रकारं दर्शयति। बुद्ध्या स्वकार्ये इति। प्रकृतिसाहाय्यम् प्रकृतेः।अनुप्रवेश इति यावत्। नच बुद्ध्यादयः स्वकार्यजनने प्रकृतिसाहाय्यानपेक्षा एव स्वतः स्वकार्यं जनयन्ति इत्याशङ्कायामाह। अन्यथेति। प्रकृत्यापूरं विना, क्षीणा सती असमर्था सती अहङ्कारं जनयितुं नालम् न समर्था स्यात्। तथाच बुद्धः प्रकृतिनिरपेक्षायाः अहङ्कारादिरूपतत्त्वान्तरजनने सामर्थ्यमेव नास्ति, अन्यथा बुद्धिः यदि प्रकृतिसाहाय्यं विना अहङ्कारं जनयिष्यति तदा बुद्धेः अवयवानां अहङ्कारभावेन परिणामस्य स्वीकारावश्यकत्वेन अहङ्कारस्थितिकाले बुद्धेः स्थितिरेव न स्यात्। नचेदं सम्भवति तस्मात् सा परतन्त्रैवेति। बुद्धेः परतन्त्रतां व्युत्पाद्य अहङ्कारादीनामपि तामाह। एवमिति। स्वकार्यजनने पञ्चतन्मात्रादिषोडशगणजनने। प्रकृत्यापूरो अपेक्ष्यते इति पूर्वोक्तमनुपज्यते। फलितार्थमाह। तेनेति। उक्तरीत्या बुद्ध्यादीनां

"विपरीतमव्यक्तम्," व्यक्तात्। अहेतुमत्, नित्यं, व्यापि, निष्क्रियम्, यद्यप्यव्यक्तस्याऽस्ति परिणामलक्षणा क्रिया, तथाऽपि परिस्पन्दो नाऽस्ति। एकम्, अनाश्रितम्, अलिङ्गम्, अनवयवम्, स्वतन्त्रम्, अव्यक्तम्।

तदनेन प्रबन्धेन व्यक्ताव्यक्तयोर्वैधर्म्यमुक्तम्। सम्प्रति तयोः साधर्म्यम्, पुरुषाच्च वैधर्म्यमाह—

**त्रिगुणमविवेकि विषयः सामान्यमचेतनं प्रसवधर्मि।**
**व्यक्तं, तथा प्रधानम्, तद्विपरीतस्तथा च पुमान्॥११॥**

"त्रिगुणम्" इति। त्रयो गुणाः सुखदुःखमोहा अस्येति त्रिगुण-

---

स्वस्वकार्यजनने प्रकृत्यापूरस्य आवश्यकत्वेन, कारणमपि व्यक्तं स्वकार्यजनने प्रकृतिमपेक्षमाणं परतन्त्रमिति सिध्यति।

व्यक्तानां साधर्म्याण्यभिधाय तेषामभावस्य अव्यक्तसाधर्म्यं बोधायतुमाह। विपरीतमिति। कस्माद्वैपरीत्यं अव्यक्तस्येत्याकाङ्क्षायामाह। व्यक्तादिति। अहेतुमत् आविर्भावरूपस्य हेतुमत्त्वस्य प्रकृतावसत्त्वात्। अजामेकामित्यादिश्रुत्या प्रकृतेरजात्वव्यवस्थापनादिति भावः। नित्यम् अविनाशीत्यर्थः, तिरोभावरूपस्य तस्य तत्राभावात्। व्यापीति सर्वपरिणामिव्यापकमित्यर्थः, तेन पुरुषापेक्षय ऽधिकदेशवृत्तित्वरूपस्य व्यापकत्वस्य तत्राभावेऽपि न क्षतिः। नच प्रकृतेः परिणामितया तस्यां च तद्व्यापकत्वाभावेन अव्याप्तिरिति वाच्यम्। सततपरिणामिभिः स्वीयसत्त्वादिगुणैः स्वावयवभूतैः स्वस्यापि अवयवोत्पादकत्वेन व्यापकत्वमपि तत्राक्षतमेवेति भावः। निष्क्रियमिति। कर्मत्वरूपजातिमत्कर्मरहितमित्यर्थः। क्रियाशब्दस्य धात्वर्थमात्रपरत्वे तस्य प्रकृतौ परिणामरूपक्रियायाः सत्त्वेन अव्याप्तिमाह। यद्यपीति। एकमिति। स्वसजातीयरहितमित्यर्थः। अजामेकामित्यादिना एकत्वस्य प्रतिपादितत्वात्। अनाश्रितमिति। स्वकारणानाश्रितमित्यर्थः। तस्याः कारणाभावादिति भावः। अलिङ्गमिति। प्रधानानुमापकमित्यर्थः। स्वेन स्वस्यानुमानासम्भवादिति भावः। अनवयवमिति। संयोगाभाववदित्यर्थः। अप्राप्तिपूर्वकप्राप्तिरूपस्य तस्य प्रधानेऽसम्भवात् तस्य नित्यतया अप्राप्तेरभावात्। स्वतन्त्रमिति। स्वकार्यजनने प्रकृत्यनपेक्षमित्यर्थः। स्वस्यैव तद्रूपत्वात् तेन पुरुषार्थादिरूपस्य हेतोः अपेक्षत्वेऽपि न क्षतिः। अव्यक्तमिति सर्वत्र पूर्वोक्तेष्वनुषज्यते।

अग्रिमकारिकामवतारयति। तदनेनेत्यादिना। तयोः व्यक्ताव्यक्तयोः परस्परं साधर्म्यं पुरुषाच्च तयोर्वैधर्म्यमाहेत्यर्थः।

त्रिगुणमिति साधर्म्य व्याचष्टे। त्रयो गुणा अस्येति। के ते त्रयो गुणा इत्याकाङ्क्षायामाह। सुखदुःखमोहा इति। यद्यपि अत्र तन्त्रे सत्त्वरजस्तमसामेव पुरुषोपकारकत्वात् पुरुषबन्धकमहदादिनिर्मातृत्वाच्च गुणपदाभिधेयत्वं ननु सुखदुःखमोहानां तथापि धर्मधर्मिणोरभेदात् सुखादय एवात्र गुणपदेनाभिप्रेताः ननु सत्त्वादिरूपा इति। केचित्तु कारिकास्थत्रिगुणपदस्य सत्त्वाद्यर्थकत्वे व्यक्ताव्यक्तयोः तथाविधगुणाश्रयत्वा-

म्। तदनेन सुखादीनामात्मगुणत्वं पराभिमतमपाकृतम्।

"अविवेकि"। यथा प्रधानं न स्वतो विविच्यते, एवं महदादयोऽपि न प्रधानात् विविच्यन्ते, तदात्मकत्वात्।

अथ वा सम्भूयकारिताऽत्राऽविवेकिता। न हि किञ्चिदेकं पर्याप्तं

भावेन तयोः साधर्म्यानुपपत्तिः अजामेकामित्यादिश्रुत्या प्रकृतेः तदाश्रयत्वेपि महत्तत्त्वादिषु तत्सत्त्वे मानाभावः। नच कार्यस्य कारणगुणाश्रयतया अव्यक्तस्य तादृशगुणवत्त्वेन तत्कार्यस्य महत्तत्त्वादेरपि तादृशगुणवत्त्वं सिद्ध्यतीति वाच्यम्। तयोः कार्यकारणभावस्य इदानीमसिद्धेः। किञ्च व्यक्तस्य सुखदुःखात्मकतया कारणस्य प्रधानस्य तदात्मकत्वसाधनेन तत एव सत्त्वादिगुणाश्रयताया अपि साधयिष्यमाणत्वादिदानीं गुणपदस्य सत्त्वादिगुणपरत्वव्याख्यानमनुचितम्। अपि च सत्त्वादिगुणानां महत्तत्त्वादिषु परिणामेन रूपान्तरीभावात सत्त्वादिपदवाच्यत्वमेव न सम्भवति दुग्धादिषु परिणामेन दधिभावमापन्नेषु तत्पदप्रयोगस्यासम्भवात् अतः गुणपदं सुखदुःखमोहपरतया व्याचष्टे। सुखदुःखमोहा इतीति वदन्ति।

सुखदुःखादीनामात्मगुणतायाः नैयायिकादिभिरङ्गीकृततया कथमेतादृशगुणत्रयवत्त्वं प्रधानादौ इत्याशङ्कायामाह। तदनेनेति। सुखादीनां व्यक्ताव्यक्तधर्मत्वकथनेनेत्यर्थः। परेषां नैयायिकादीनां, अभिमतं इच्छाद्वेषप्रयत्नसुखदुःखज्ञानान्यात्मनो लिङ्गम् इत्यादि सूत्रेण सम्मतं, सुखादीनामिति। आदिना दुःखादिपरिग्रहः। आत्मगुणत्वं आत्मसमवेतगुणत्वं, पराकृतम् निरस्तमित्यर्थः। असङ्गो ह्येष पुरुष इत्यादिश्रुत्या आत्मनो निर्लेपताया एव प्रतिपादिततया तत्र तादृशगुणस्वीकारे उक्तश्रुतिविरोधः स्यादिति भावः।

साधर्म्यान्तरं व्याचष्टे। अविवेकीति। विवेकः भेदः तदभाववानित्यर्थः। नचोक्तलक्षणमसम्भवि प्रधानादौ पुरुषभेदसत्त्वादिति वाच्यम्। प्रधानप्रतियोगिकभेदाभाववत्त्वस्योक्तत्वात्, प्रधाने पुरुषभेदसत्त्वेपि प्रधानप्रतियोगिकभेदासत्त्वात। उक्तस्य साधर्म्यस्य समन्वयप्रकारं दर्शयति। प्रधानमिति। स्वतः स्वस्मात्, न विविच्यते न भिद्यते, स्वस्मिन् स्वप्रतियोगिकभेदासत्त्वादित्यर्थः। महत्तत्त्वादीनां प्रधानाभेदमुपपादयति। एवं महात्तत्त्वादय इति। तेषां प्रधानाभिन्नत्वे हेतुमाह। तदात्मकत्वादिति प्रधानात्मकत्वादित्यर्थः। तथाच कार्यकारणयोरभेदस्य सत्कार्यसाधनावसरे साधितत्वेन महदादीनां प्रधानकार्यत्वेन प्रधानाभिन्नत्वं तत्राक्षतमेवेति भावः।

अविवेकित्वशब्दस्य अभेदार्थकत्वे प्रधानशब्दस्य अश्रुतस्य लक्षणघटकत्वाङ्गीकारेऽस्वरसादर्थान्तरमाश्रित्य व्याचष्टे। अथवेति। अत्र एतत्कारिकायां घटकत्वं सप्तम्यर्थः। अविवेकित्वं अविवेकित्वपदार्थः। सम्भूयकारित्वं परस्परसहकारेण कार्यजनकत्वम्। उक्तार्थस्य समन्वयप्रकारं दर्शयति। नहीति। किञ्चित वस्तु, एकं द्वितीयरहितं सत्, स्वकार्यं स्वप्रयोज्यकार्यजनने न पर्याप्तं न समर्थम्, अपि तु सम्भूय मिलित्वेत्यर्थः। तत्र व्यक्ताव्यक्तयोर्मध्ये कस्यचित् कस्यापि, एकस्मात् सजातीयद्वितीयानपेक्षात् सम्भवः उत्पत्तिः नास्ति। तथाच प्रकृतेरपि एकस्या एव न महत्तत्त्वादिरूपकार्यजनकत्वं अपि तु अदृष्टादिसाहाय्येनैव कार्यजनकत्वमिति तत्रापि

स्वकार्यं, अपि तु सम्भूय । तन्न नैकस्मात् पश्च कस्यचित् केनाचि॰त्सम्भव इति ।

ये त्वाहुः-विज्ञानमेव हर्षविषादमोहशब्दाद्यात्मकम, न पुनरितोऽन्यस्तद्धर्मेति, तान् प्रत्याह-"विषय" इति । विषयः=ग्राह्यः, विज्ञानाद्बहिरिति यावत् ।

अत एव "साधारणम्" घटादिवदनेकैः पुरुषैर्गृहीतमित्यर्थः । विज्ञानाकारत्वे तु असाधारण्याद्विज्ञानानां वृत्तिरूपाणां तेऽप्यसाधार॰

---

अविवेकित्वं स्पष्टमेव । महत्तत्त्वादौ तु परतन्त्रमितिसाधर्म्यंव्याख्यानावसरे पूर्वमेव स्पष्टीकृतमिति ।

बौद्धविशेषास्तु विज्ञानातिरिक्तपदार्थस्य सत्तामेव नाङ्गीकुर्वन्ति । तथाहि घटज्ञानपटज्ञानादीनां तावद्भेदः ज्ञानातिरिक्तपदार्थाभ्युपगन्त्रापि अवश्यमङ्गीकर्तव्य एव, अन्यथा घटज्ञानपटज्ञानयोरविशेषापत्तिः, इति ज्ञानेनैव घटपटादिव्यवहारभेदोपपत्तौ बाह्यार्थवस्तुकल्पनायां प्रमाणाभावः । किञ्च विषयस्य विज्ञानस्य च पृथक् सत्त्वाभ्युपगमे विषयाभावे तद्विज्ञानसत्ता तदभावे च विषयसत्तोपलभ्येत नच तथास्ति अतः तयोः पृथक् सत्ता नास्त्येव । एवं विज्ञानस्य विषयसत्तापेक्षाया स्वप्नादिस्थले अभावेन जागरादिस्थलेपि तत्सत्तां विना तदुपपत्तौ तत्सत्ताङ्गीकारे प्रमाणाभावः । नच यदि बाह्योर्थः नास्ति तदा विज्ञानानां वैचित्र्यं नोपपद्येत इति वाच्यम् । वासनावैचित्र्यादेव विज्ञानवैचित्र्योपपत्तेः । संसारस्यानादितया बीजाङ्कुरवत् वासनानामपि परस्परवैचित्र्यं सङ्गतमेव । स्वप्नादिविज्ञानस्य वासनादिजन्यतायां उभयवादिसम्प्रतिपन्नतया जागरादिस्थलेपि वासनायाः कारणत्वेनैवोपपत्तौ विषयसत्ताङ्गीकारे प्रमाणाभाव इति वदन्ति । तन्मतं दूषयितुमाह । ये त्वाहुरिति । हर्षः सुखं, विषादः दुःखं, मोहः तमःपरिणामविशेषः, शब्दादिश्च आकारो यस्य तथाभूतम्, विज्ञानमेव, एवकारव्यवच्छेद्यमाह । न पुनरिति । इतः विज्ञानात्, अन्यः तद्धर्मा तद्विज्ञानं धर्मो यस्य एवम्भूतः इति आहुः, तान् प्रति बौद्धविशेषान् लक्षीकृत्य आह । कारिकाकार इति शेषः । विषय इतीति । विज्ञानस्य इच्छादिविषयत्वेन तेषां विज्ञानस्वरूपताङ्गीकारेपि मतं न निराकृतमित्याशयेनाह । ग्राह्य इति । ज्ञानविषय इत्यर्थः । तथा च विज्ञानस्य इच्छाविषयत्वेपि ज्ञानविषयत्वाभावात् तत्र उक्तलक्षणमेव न संगच्छेत यदि विज्ञानातिरिक्तपदार्थस्य सत्तां नाङ्गीकुर्यात् । नच विज्ञानस्य ज्ञानविषयत्वाङ्गीकारेपि न सौगतमतखण्डनं सम्भवति तैः घटपटादीनां ज्ञानरूपत्वेपि तज्ज्ञाने ज्ञानविषयत्वस्याङ्गीकर्तुं शक्यत्वादित्यत आह । विज्ञानाद्बहिरिति । तथाच विज्ञानभिन्नत्वं प्रधानादीनां साधर्म्यम्, विज्ञानरूपस्य आत्मनः विज्ञानभिन्नत्वाभावान्न तत्रोक्तलक्षणातिव्याप्तिः ।

साधर्म्यान्तरमाह । अत एवेति । विज्ञानभिन्नत्वादेवेत्यर्थः । सामान्यपदार्थमाह । साधारणमिति । पुरुषभेदेपि अभिन्नमित्यर्थः । विज्ञानाकारत्वे तेषां साधारणत्वं न स्यादित्याह । विज्ञानाकारत्वे त्विति । घटपटादीनां विज्ञानस्वरूपत्वे इत्यर्थः । विज्ञानानां असाधारणत्वात् एकैकपुरुषवेद्यत्वात्, विज्ञानानां एकैकपुरुषवेद्यत्वे हेतुगर्भविशेषणमाह । वृत्तिरूपाणामिति । तत्तद्विषयाकारान्तःकरणवृत्तिप्रतिबिम्बाना॰

णाः स्युः, विज्ञानं यथा परेण न गृह्यते, परबुद्धेरप्रत्यक्षत्वादित्यभिप्रायः। तथा च नर्तकीभ्रूलताभङ्गे एकस्मिन् बहूनां प्रतिसन्धानं युक्तम्। अन्यथा तन्न स्यादिति भावः।

---

मित्यर्थः। तथा च तत्तदन्तःकरणवृत्तिप्रतिबिम्बानां तत्तदात्मनैव वेद्यत्वात्तासां साधारण्यं न सम्भवतीति भावः। तेपि घटपटादयोपि, असाधारणाः एकैकपुरुषवेद्याः स्युः। अत्रैव दृष्टान्तमाह। विज्ञानं यथा परेणेति। विज्ञानं परकीयं परेण यथा न गृह्यते तथा घटादयोपि परेणाग्राह्याः स्युरित्यर्थः। एकविज्ञानस्य अपरविज्ञानाविषयत्वे हेतुमाह। परबुद्धेरप्रत्यक्षत्वादिति। परेणेति शेषः।

अस्तु घटादीनां असाधारण्यमित्याशङ्कायामाह। तथा चेति। साधारणत्वाङ्गीकारे चेत्यर्थः। एकस्मिन्निति। एतेन तत्र नर्तकीभ्रूलताभङ्गस्य पुरुषभेदेन भिन्नत्वं नास्तीति सूचितम्। भङ्गः कौटिल्यम्, बहूनां दर्शकपुरुषाणाम् प्रतिसन्धानम् प्रत्यभिज्ञानम्, युक्तमिति। नर्तकीभ्रूलताभङ्गस्य विज्ञानभिन्नत्वेन सर्वसाधारणत्वसम्भवात् इति भावः। अन्यथा नर्तकीभ्रूलताभङ्गस्य विज्ञानरूपत्वाङ्गीकारे बहूनां प्रतिसन्धानं न स्यादिति।

अयं भावः नर्तकीभ्रूलताभङ्गदर्शनोत्तरं चैत्रेण नर्तकीभ्रूलताभङ्गं दृष्टवानसीति पृष्टः मैत्रः अहो दृष्टवानस्मीत्येवं वदति तदेतदेकस्यैव अर्थस्य अनेकैर्युगपद्गृहीतत्वरूपं साधारण्यं विज्ञानस्वरूपत्वे नोपपद्यते, स्वप्नस्थले तु चैत्रीयविज्ञानविषयस्य स्वप्नस्य मैत्रेणाज्ञानमेव भवति न तथा अत्र, तस्मात् स्वप्नस्थलवज्जागरादिस्थले भासमानस्य न विज्ञानरूपत्वं सेत्स्यति इति। न चोक्तस्थलेपि एकस्यैव विज्ञानरूपस्य अर्थस्य अन्येनापि ग्रहणं भवति इति नोक्तस्थले प्रतिसन्धानानुपपत्तिरिति वाच्यम्। तथा सति एकस्य घटज्ञानकाले सर्वस्यापि तद्वत्त्वप्रसङ्गात्।

एवं येषां पदार्थानां नानात्वसत्त्वेपि यस्य एकत्वं प्रमाणेन निश्चीयते तत्तेभ्यः भिन्नमिति नियमः। दृष्टो हि गोव्यक्तीनां भेदेपि गोत्वस्य एकत्वेन निश्चीयमानस्य गोव्यक्तिभ्यो भेदः। तथा च चैत्रमैत्रादिनिष्ठानां नर्तकीभ्रूलताभङ्गज्ञानानां भिन्नत्वेपि नर्तकीभ्रूलताभङ्गस्य उक्तप्रतिसन्धानेन एकतया सिद्धत्वेन तस्य विज्ञानाद्भिन्नत्वं सिद्धमेवेति।

न च स्वप्नज्ञानवज्जागरितज्ञानस्य असद्विषयकत्वं साध्यमिति कथं विज्ञानातिरिक्तवस्तुसिद्धिरिति वाच्यम्। उक्तानुमाने बाध्यत्वस्यैवोपाधित्वात्। तस्य असद्विषयकत्ववादिनापि जागरितप्रत्ययस्य बाध्यत्वं स्वाप्नस्य अबाध्यत्वमङ्गीकार्यमेव अन्यथा स्वप्नप्रत्ययस्य निरालम्बनत्वमेव न सिद्ध्येत् तस्य हि जाग्रत्प्रत्ययबाध्यत्वादेव निरालम्बनत्वं साधनीयं जाग्रत्प्रत्ययस्य च बाध्यत्वाङ्गीकारे तस्य स्वाप्नप्रत्ययबाधकत्वं न सम्भवति बाध्यस्यैव बाधकत्वासम्भवात् इति उक्तानुमाने उपाधेः सत्त्वात् न तेनासद्विषयकत्वसिद्धिरिति भावः।

न च ज्ञानार्थयोः सहोपलम्भनियमादेव एकस्यासत्त्वं सिद्धमिति वाच्यम्। ज्ञानार्थयोः सहोपलम्भ इत्यत्र साहित्यं यदि सहवृत्तित्वं तदा विरुद्धोयं हेतुः साहित्यस्य भेदव्याप्यत्वेन तद्विरुद्धाभेदसाधकत्वासम्भवात्। यदि च साहित्यं ऐक्यमेव तदा सहोपलम्भ इत्यस्य एकोपलम्भनियमादित्यर्थः पर्यवसन्नः। तच्च न सम्भवात सह श

"अचेतनम्" 'सर्व एव प्रधानबुद्ध्यादयोऽचेतनाः न तु वैनाशिकवत् चैतन्यं बुद्धेरित्यर्थः ।

"प्रसवधर्मि"—प्रसवरूपो धर्मो यः सोऽस्याऽस्तीति प्रसवधर्मि । प्रसवधर्मेति वक्तव्ये मत्वर्थीयः प्रसवधर्मस्य नित्ययोगमाख्यातुम् । सरूपविरूपपरिणामाभ्यां न कदाचिदपि वियुज्यते इत्यर्थः ।

व्यक्तधर्ममव्यक्तेऽतिदिशति—"तथा प्रधानम्" इति । यथा व्यक्तं तथाऽव्यक्तमित्यर्थः ।

ताभ्यां वैधर्म्यं पुरुषस्याऽऽह—"तद्विपरीतः पुमान्" इति ।

---

वद्भूस्य एकत्ववाचकत्वाभावात् । तत्र लक्षणाङ्गीकारेपि वा एकोपलम्भ इत्यस्य एकत्वप्रकारकोपलम्भः एकाभिन्नोपलम्भो वा, नाद्यः, बाह्यत्वान्तरत्वरूपविरुद्धधर्मनिश्चयेन तयोरेकत्वप्रकारकोपलम्भासम्भवात्, न च ज्ञानाकार एव विषयः आन्तरः सन् बाह्यतयाऽवभासत इति वाच्यम् । तथापि बाह्यत्वान्तरत्वरूपविरुद्धधर्माध्यासेन तयोरेकत्वनिश्चयासम्भवात्, त्वन्मते बाह्यपदार्थस्यालीकतया बाह्यवदवभासते इत्यस्य वक्तुमशक्यत्वाच्च, प्रसिद्धस्यैव सादृश्यप्रतियोगित्वात् । न द्वितीयः, एकाभिन्नोपलम्भस्य एकत्वासाधकत्वात् न हि घटयोरेकोप्युपलम्भस्तयोरैक्यं साधयितुं प्रभवति । न चैकत्वेनोपलम्भनियमस्य तत्साधकत्वसम्भवः तस्य पूर्वमेव निरस्तत्वादिति ।

साधर्म्यान्तरमाह । अचेतनमिति । बुद्ध्यादय इति । आदिना अन्तः करणादिपरिग्रहः । यथा च बुद्ध्यादीनामचेतनत्वं तथोपपादयिष्यति । वैनाशिकवत् भावमात्रस्य क्षणिकत्ववादिबौद्धविशेषवत् ।

प्रसवधर्मि इति । प्रसवः परिणामः, तद्रूपो यो धर्मः तद्वदित्यर्थः, तथा चप्रसवधर्म इत्यत्र कर्मधारयानन्तरं मत्वर्थीयेन प्रत्ययेन तादृशार्थलाभः, न च प्रसवरूपो धर्मोऽस्यास्तीति प्रसवधर्मा इति बहुव्रीहिसमासेनेव तादृशार्थलाभसम्भवे न कर्मधारयान्मत्वर्थीयो बहुव्रीहिश्चेत्तदर्थप्रतिपत्तिकर इत्यनुशासनात् कथमत्र मत्वर्थीयेन प्रत्ययघटितस्य प्रयोगस्य साधुत्वं सम्भवति इत्याशङ्कायामाह । प्रसवधर्मा इति वक्तव्ये इति । प्रसवधर्मा इत्यनेन प्रसवरूपधर्माश्रयत्वस्य बोधसम्भवेपि प्रसवरूपधर्मप्रतियोगिकनित्यसम्बन्धस्य बोधासम्भवेन तस्यैव चात्र विवक्षितत्वेन तदर्थं मतुबर्थप्रत्ययः आवश्यक एव, बहुव्रीहेः मत्वर्थीयप्रत्ययजन्यबोधजनकत्वाभावेन बहुव्रीहिश्चेत्तदर्थप्रतिपत्तिकर इत्यस्योक्तस्थलेऽभावात् मत्वर्थीयघटितप्रयोगः साधुरेवेति भावः । न च मत्वर्थीयेन कथं नित्ययोगस्य बोधः तस्य तद्वाचकत्वाभावादिति वाच्यम्, भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने । सम्बन्धेऽस्तिविवक्षायां भवन्ति मतुबादयः ॥ इत्यादिना नित्यसम्बन्धवाचकतायाः तस्मिन् सिद्धत्वात् । प्रसवधर्मस्य नित्ययोगाख्यानेन तात्पर्यार्थमाह । सरूपेति । प्रलयादौ प्रकृतेः । सरूपपरिणामरूपधर्मवत्त्वं सर्गे तु विरूपपरिणामरूपवत्त्वमिति परिणामरूपधर्मवत्त्वस्य तत्र नित्ययोगः सम्भवत्येवेति भावः ।

एतस्य व्यक्ताव्यक्तसाधर्म्यतामाह । व्यक्तवदिति । व्यक्तधर्मम् व्यक्तधर्मं त्रिगुणत्वादि, अव्यक्ते प्रधानापरपर्याये, अतिदिशति सादृश्यवाचकपदघटिततथापदेन बोधयति इत्यर्थः । तद्विपरीत इति । ताभ्यां व्यक्ताव्यक्ताभ्य

स्यादेतत्—अहेतुमत्त्वनित्यत्वादि प्रधानसाधर्म्यमस्ति पुरुषस्य, एवमनेकत्वं व्यक्तसाधर्म्यम्, तत्कथमुच्यते 'तद्विपरीतः पुमान्' इति ? अत आह—"तथा च" इति । चकारोऽप्यर्थः । यद्यप्यहेतुमत्त्वादिकं साधर्म्यम्, तथाऽप्यत्रैगुण्यादिवैपरीत्यमस्त्येवेत्यर्थः ॥ ११ ॥

त्रिगुणमित्युक्तम्, तत्र के ते त्रयो गुणाः ? किं च तल्लक्षणम् ? इत्यत आह—

**प्रीत्यप्रीतिविषादात्मकाः प्रकाशप्रवृत्तिनियमार्थाः ।**
**अन्योऽन्याभिभवाश्रयजननमिथुनवृत्तयश्च गुणाः ॥१२॥**

"गुणाः" इति परार्थाः । "सत्त्वं लघु प्रकाशकम्—" (का० १३) इत्यत्र च सत्त्वादयः क्रमेण निर्देक्ष्यन्ते । तदनागतावेक्षणेन तन्त्रयु-

---

विपरीतः व्यक्ताव्यक्तधर्मविरोधिधर्मवानित्यर्थः । तथाच हेतुमत्त्वादयो ये पूर्वं व्यक्तधर्मा उक्ता एवं त्रिगुणत्वादयो व्यक्ताव्यक्तधर्माः तदभाववान् पुरुष इत्यर्थः, नच व्यक्ताव्यक्तसाधर्म्यस्य हेतुमत्त्वादेरभावस्य पुरुषे सत्त्वेपि अव्यक्तसाधर्म्यस्य अहेतुमत्त्वनित्यत्वादेः, एवमनेकत्वस्य व्यक्तसाधर्म्यस्य तत्र सत्त्वात् कथं तस्य तद्वैपरीत्यमित्याशङ्क्य तथाचेतिपदस्य तथापीत्यर्थकतामभ्युपगम्य निराकरोति । स्यादेतदिति । चकारोऽप्यर्थ इति । तथाच तथाचेत्यस्य तत्सदृशोऽपि इत्यर्थः । एतदेव स्फुटयति । यद्यपीति । अहेतुमत्त्वादीत्यादिना नित्यत्वादिपरिग्रहः । अत्रैगुण्यादीत्यादिना विवेकित्व अविषयत्व असाधारणत्व चेतनत्व अप्रसवधर्मित्वानां परिग्रहः । तथाच पुरुषस्य पूर्वोक्ताहेतुमत्त्वादिरूपसाधर्म्यसत्त्वेपि अत्रिगुणत्वादिरूपव्यक्ताव्यक्तवृत्तिधर्मविरुद्धधर्मवत्त्वात् तद्विपरीतत्वं तत्रास्त्येवेति भावः ॥

कारिकान्तरमवतारयति । त्रिगुणमित्युक्तमिति । कारिकाघटकस्य गुणपदस्य 'द्रव्याश्रय्यगुणवान् संयोगविभागयोरकारणमनपेक्ष' इत्यादि वैशेषिकादिसम्मतगुणपरत्वं नास्ति, तेषां परिणामरूपक्रियाश्रयत्वासम्भवात् इत्याशयेनात्र गुणपदस्य परार्थमात्रार्थकतामाह । गुणा इति परार्था इति । परोपकारका इत्यर्थः । तथाच यथा प्रधानयागोपकरणानि अङ्गानि गुणा इति व्यपदिश्यन्ते यथा वा प्रधानस्य राज्ञः उपकारकाः अमात्यादयस्तथैव पुरुषस्य भोगापवर्गसाधकाः सत्त्वादयोपि गुणशब्देन व्यवह्रियन्ते इति भावः ।

नच प्रीत्यप्रीतिविषादानां परस्परविरुद्धत्वेन गुणानां प्रत्येकस्य तद्रूपात्मकत्वं न सम्भवति नहि एकस्य वस्तुनः अन्धकारप्रकाशात्मकत्वमिति गुणानां प्रीत्यप्रीतिविषादात्मकत्वं एकैकस्य एकैकरूपत्वमेव वाच्यमिति कस्य किमात्मकत्वमित्यत आह । सत्त्वं लघु प्रकाशकमित्यत्रेति । इत्यत्र इति कारिकायां, नच अग्रिमकारिकायां निर्दिष्टानां सत्त्वादीनां कथमिह ग्रहणं इत्यत आह । तदनागतावेक्षणेनेति । यथापूर्वमनुपलब्धमपि वक्ष्यमाणं सिंहावलोकनन्यायेनानुपजननीयमित्युक्तं एवमेव अत्रापि अग्रिमकारिकायां वक्ष्यमाणानां सत्त्वरजस्तमसां यथासङ्ख्यं क्रमेण प्रीत्यप्रीतिविषादात्मकत्वमवगन्तव्यमित्यर्थः । प्रकारान्तरेण यथासङ्ख्यं प्रीत्याद्यात्मकत्वमाह । तन्त्रयुक्त्या चेति । तन्त्रं प्रकृतशास्त्रं, तस्य युक्तिः अप्रतिषिद्धं परमतमनुमतं भवति

कत्या वा प्रीत्यादीनां यथासंख्यं वेदितव्यम्।

एतदुक्तं भवति—प्रीतिः-सुखम्, प्रीत्यात्मकः सत्त्वगुणः। अप्रीतिः-दुःखम्, अप्रीत्यात्मको रजोगुणः। विषादो-मोहः, विषादात्मकस्तमोगुण इत्यर्थः।

ये तु मन्यन्ते " न प्रीतिर्दुःखाभावादतिरिच्यते, एवं दुःखमपि न प्रीत्यभावादन्यदिति, तान् प्रति " आत्म" ग्रहणम्।

नेतरेतराभावाः सुखादयः, अपि तु भावाः, आत्मशब्दस्य भाववचनत्वात्, प्रीतिरात्मा-भावो येषां ते प्रीत्यात्मानः। एवमन्यदपि व्याख्येयम्। भावरूपता चैषामनुभवसिद्धा। परस्पराभावात्मकत्वे तु परस्पराश्रयापत्तेरेकस्याऽप्यसिद्धावुभयासिद्धिरिति भावः।

---

इत्याकारिका तयेत्यर्थः। तथाच भगवता कृष्णद्वैपायनेन 'सत्त्वं रजस्तम इति गुणाः प्रकृतिसम्भवाः। निबध्नन्ति महाबाहो देहे देहिनमव्ययम्। इत्यादिषु सत्त्वरजस्तमसामेव क्रमेण निर्देशात् अत्रापि सत्त्वरजस्तमसां यथासङ्ख्यं क्रमो ग्राह्य इति भावः।

एतदेव विशदयति। प्रीतिः सुखमित्यादिना। प्रीत्यप्रीतिविषादात्मकाः इत्यत्र द्वन्द्वान्ते श्रूयमाणस्य आत्मशब्दस्य प्रत्येकमभिसम्बन्धात् प्रीत्यात्मकः अप्रीत्यात्मकः इत्यर्थकतामाह। प्रीत्यात्मकः सत्त्वगुण इति।

प्रीत्यप्रीतिविषादा इत्यनेनैव सामञ्जस्ये आत्मपदं व्यर्थमित्याशङ्कां निराकर्तुमाह। ये तु मन्यन्त इति। दुःखाभावादतिरिच्यते इति। तथा च दुःखाभावस्य अभावरूपतया कथं सत्त्वगुणस्य तदात्मकत्वमिति शङ्कितुरभिप्रायः। तान् प्रतीति। प्रीत्यप्रीत्योरितरेतराभावरूपतावादिनं लक्ष्यीकृत्य, तन्मतनिराकरणायात्मग्रहणमित्यर्थः। आत्मपदोपादानेन कथं तन्मतनिराकरणमित्यत आह। न इतरेतराभावाः सुखादय इति। अपि तु सद्रूपा एवेत्यर्थः। आत्मशब्देन कथं तेषां सद्रूपत्वलाभ इत्यत आह। आत्मशब्दस्य भाववचनत्वादिति। तथा च 'आत्मा देहे धृतौ जीवे स्वभावे परमात्मनि' इति कोशेन आत्मशब्दस्य भाववाचकतायाः सिद्धत्वात् सुखस्य भावरूपत्वं कारिकात एव लब्धमिति भावः। एवमन्यदपीति। अप्रीत्यात्मान इत्यादीत्यर्थः। नच कारिकायां भाववाचकस्य आत्मशब्दस्य श्रुतत्वेपि इतरेतराभावरूपताङ्गीकारेणैव सामञ्जस्ये तेषां भावरूपत्वे प्रमाणाभाव इत्याशङ्कायामाह। भावरूपता चैषामिति। सुखदुःखानां भावरूपता अनुभवसिद्धा, अनुभवेन अहं सुखी अहं दुःखी इत्यादिरूपेण तेषां भावरूपत्वं सिद्धमेव अभावस्वरूपत्वे तु घटो नास्तीत्यादाविव सुखादिसत्त्वे निषेधोल्लेखोपि स्यात् नचायमनुभवसिद्ध इति भावः, नच यथा नैयायिकादिना तमसः तेजोभावरूपत्वाङ्गीकारेपि अत्र तमोऽस्ति इत्यादि भावोल्लेखानुभव उपपाद्यते एवमेवात्रापि तादृशानुभवसत्त्वेपि तस्याभावरूपत्वं न विरुद्ध्यते इत्याशङ्कायामाह। परस्पराभावात्मकत्वे त्विति। सुखस्य दुःखाभावरूपत्वे दुःखस्य च सुखाभावरूपत्वे इत्यर्थः। परस्पराश्रयापत्तेः। अन्योन्याश्रयापत्तेरित्यर्थः। तथाच अभावबुद्धिं प्रति प्रतियोगिज्ञानस्य कारणत्वेन सुखबुद्धिं प्रति दुःखज्ञानस्य, दुःखस्यापि सुखाभावरूपत्वेन तद्बुद्धिं प्रति च सुखज्ञानस्य कारणत्वावश्यकत्वेन स्वग्रहसापेक्षग्रहसापेक्षग्रहकत्वरूपान्योन्याश्रयापत्त्या न तयोः परस्पराभावरूपत्वसम्भव इति भावः।

स्वरूपमेषामुक्त्वा प्रयोजनमाह–"प्रकाशप्रवृत्तिनियमार्थाः" इति। अत्राऽपि यथासङ्ख्यमेव। रजः प्रवर्तकत्वात् सर्वत्र लघु सत्त्वं प्रवर्तयेत्, यदि तमसा गुरुणा न नियम्येत, तमोनियतं तु क्वचिदेव प्रवर्तयतीति भवति तमो नियमार्थम्।

प्रयोजनमुक्त्वा क्रियामाह—"अन्योन्याभिभवाश्रयजननमिथुनवृत्तयश्च" इति। वृत्तिः–क्रिया, सा च प्रत्येकमभिसम्बध्यते। "अन्योन्याभिभववृत्तयः", एषामन्यतमेनार्थऽवशादुद्भूतेनान्यदभिभूयते।

तथा हि सत्त्वं रजस्तमसी अभिभूय शान्तामात्मनो वृत्तिं प्रति

---

कारिकाद्वितीयपादं व्याचष्टे। स्वरूपमेषामिति। एषाम् सत्त्वादिगुणानाम्। प्रयोजनमिति। तथाच प्रकाशप्रवृत्तिनियमार्थाः इत्यत्र अर्थपदस्य प्रयोजनपरत्वमिति भावः। यथासङ्ख्यमिति। सत्त्वरजोस्तमोगुणानां यथासङ्ख्यं प्रकाशःप्रवृत्तिःनियमश्चेति प्रयोजनानि इत्यर्थः। प्रकाशः ज्ञानं, प्रवृत्तिः तत्फलं प्रयत्नादि, ज्ञानप्रयत्नाभ्यामेव सकलकार्यसिद्धिसम्भवे नियमस्य तत्प्रयोजनकस्य तमसश्चाङ्गीकारे मानाभाव इत्याशङ्कायामाह। रजः प्रवर्तकत्वादिति। अत्र रज इति कर्तृवाचकं पदम् रजोगुण इत्यर्थः। प्रवृत्तिरूपप्रयोजनकत्वात् लघु सत्त्वं सर्वत्र प्रवर्तयेत्, तथाच सर्वस्यैव प्रकाशः स्यात् यदि गुरुणा तमसा रजो न नियम्येत, तमसा नियमे तु यत्र तमसा प्रतिबन्धो न क्रियेत तत्रैव रजसा सत्त्वस्य प्रवृत्त्या न सर्वस्य प्रकाशः इति रजोनियामकतया तमसः स्वीकारो आवश्यक एवेति नियमार्थम् नियमप्रयोजनकं तमः भवति इत्यर्थः।

कारिकाद्वितीयार्धव्याख्यानमाह। प्रयोजनमुक्त्वेति। नचात्र क्रियावाचकशब्दाभावात् कथमस्य क्रियाबोधकत्वमित्याशङ्कां वृत्तिपदस्य क्रियार्थकत्वेन निराकरोति। वृत्तिः क्रियेति। सा च प्रत्येकमिति। अभिभवश्च आश्रयश्च जननं च मिथुनं च अभिभवाश्रयजननमिथुनानि अन्योन्यस्य अभिभवाश्रयजननमिथुनानि अन्योन्याभिभवाश्रयजननमिथुनानि तानि वृत्तयो येषां ते अन्योन्याभिभवाश्रयजननमिथुनवृत्तयः इति द्वन्द्वान्ते श्रूयमाणत्वात् वृत्तिपदस्य प्रत्येकमभिसम्बन्धो बोध्यः, उपलक्षणञ्चैतत् तदादौ श्रूयमाणस्य अन्योन्यपदस्यापि प्रत्येकं सम्बन्धो बोध्यः द्वन्द्वादौ तदन्ते च श्रूयमाणं पदं प्रत्येकमभिसम्बध्यते इति न्यायात्, तत्र सत्त्वादीनां अन्योन्याभिभवक्रियां स्पष्टयति। एषामिति। एषां सत्त्वादित्रयाणां मध्ये, अन्यतमेन एकैकेन, उद्भूतेन स्वकार्यजननोन्मुखेन, तेषामुद्भवे को हेतुरित्याशङ्कायामाह। अर्थवशादिति। धर्माधर्मादिप्रयोज्यसुखदुःखादिसाक्षात्काररूपप्रयोजनसामर्थ्येनेत्यर्थः। तथाच अनागतावस्थस्य भोगस्यैव तेषामुद्भवे हेतुत्वमिति भावः। अन्यत् गुणान्तरं अभिभूयते स्वस्वकार्यजननानभिमुखं क्रियते। एतदेवोपपादयति। तथाहीति। सत्त्वं आत्मनः आत्मसम्बन्धिनीम्, शान्ताम् सुखादिप्रयोज्यां वृत्तिं क्रियां प्रतिलभते प्राप्नोति। शान्ता घोराश्च मूढाश्च इत्यादिकारिकायां पञ्चमहाभूतानां शान्तघोरमूढाख्यवृत्त्याख्यस्वीकारेण सत्त्वादिगुणानां तादृशवृत्तिजनकत्वादिति भावः। ननु शान्तघोरवृत्त्योः परस्परविरुद्धत्वेन यथा सत्त्वं शान्तां वृत्तिं लभते तथा रजस्तमसी अपि आत्मनो घोरमूढे वृत्ती

लभते, एवं रजः सत्त्वतमसी अभिभूय घोराम्, एवं तमः सत्त्वरजसी अभिभूय मूढामिति ।

'अन्योन्याश्रयवृत्तयः' । यद्यप्याधाराधेयभावेन नाऽयमर्थो घटते, तथाऽपि यदपेक्षया यस्य क्रिया स तस्याऽऽश्रयः ।

तथा हि—सत्त्वं प्रवृत्तिनियमावाश्रित्य रजस्तमसोः प्रकाशेनोपकरोति, रजः प्रकाशनियमावाश्रित्य प्रवृत्त्या इतरयोः, तमः प्रकाशप्रवृत्ती आश्रित्य नियमेनेतरयोरिति ।

"अन्योन्यजननवृत्तयः" । अन्यतमोऽन्यतमं जनयति । जननं च गुणानां सदृशरूपः परिणामः । अत एव न हेतुमत्त्वम्, तत्त्वान्तरस्य

---

लभेतुरिति परस्परविरुद्धवृत्तीनां एकस्मिन् क्षणे स्वीकारापत्तिः परस्परस्य परस्परकार्यजननप्रतिबन्धे च परस्परप्रतिबन्धादेकस्या अपि वृत्तेरनुत्पादापत्तिरित्यत उक्तम् । सत्त्वतमसो अभिभूयेति । तथाच उद्भूतानां रज आदीनामेव तत्तद्वृत्तिप्रतिबन्धे सामर्थ्यादुक्तस्थले तयोरभिभूतत्वेन न तादृशवृत्तिजननप्रतिबन्धकत्वसम्भव इति भावः । घोरामिति । आत्मनो वृत्ति प्रतिलभते इति पूर्वोक्तमनुषज्यते । एवमग्रेऽपि ।

अन्योन्याश्रयेति । नच सत्त्वस्य प्रकृत्याश्रितत्वेन रज आद्याश्रितत्वाभावेन कथमन्योन्याश्रितत्वं तयोरित्याशङ्कां निराकरोति । यद्यपीति । आधाराधेयभावरूपः आश्रयशब्दार्थोऽत्र न घटते गुणानां परस्पराधाराधेयभावानभ्युपगमादिति शेषः । तथापीति । यस्य क्रिया यदपेक्षया यत् अपेक्ष्य भवति सः तस्याश्रयः, तथाच स्वप्रयोज्यकार्यप्रयोजकत्वरूपं सहकारित्वमेवात्राश्रयशब्दार्थ इति भावः । गुणानां परस्पराश्रयत्वं स्पष्टयति । तथाहीति । सत्त्वं सत्त्वगुणः रजस्तमसोः प्रवृत्तिनियमौ कार्यभूतावित्ति शेषः । आश्रित्य सहकारित्वेनोपादाय प्रकाशेन स्वकार्यण रजस्तमसी उपकरोति, एवं रजः सत्त्वतमसोः कार्यभूतौ प्रकाशनियमावाश्रित्य प्रवृत्त्या स्वकार्येण इतरयोः सत्त्वतमसोः, उपकरोतीति पूर्वोक्तमनुषज्यते । एवमग्रेऽपि । एतच्च सव (१६) कारिकायां व्यक्तीभविष्यति ।

अन्योन्यजननेति । अत्र च जननं न उत्पादनं सत्त्वादिगुणानां नित्यत्वेन तदसम्भवादित्यत आह । जननं च परिणाम इति । ननु कोसौ गुणानां परिणामः यत्र गुणाः अन्योन्यमपेक्ष्य तादृशपरिणामोत्पादका इत्याशङ्कायामाह । स चेति । परिणामश्चेत्यर्थः । सदृश इति । सरूपपरिणाम इति यावत, तथाच प्रलयकालेपि सत्त्वादयः सदृशपरिणामानि सत्त्वादीनि उत्पादयन्ति इति तत्रापि गुणान्तरयोः सहकारित्वमस्त्येव । नच अन्योन्याश्रयवृत्तयः इत्यनेनास्याभेद इति वाच्यम् तत्र विरूपपरिणामरूपस्वकार्ये इतरसहकारित्वं अत्र च सरूपपरिणामरूपस्वकार्ये तत्सहकारित्वं विवक्षितमिति तयोर्भेदात, नच सदृशपरिणामं प्रति तस्य जनकत्वे सत्त्वादिरूपस्य सदृशपरिणामस्य हेतुमत्त्वापत्तिरित्याशङ्कायामाह । अत एवेति । सदृशपरिणामप्रयोजकत्वादेवेत्यर्थः । तथापि कुतो न तस्य हेतुमत्त्वमित्याशङ्कायामाह । तत्त्वान्तरस्येति । तथा च हेतुमत्त्वमित्यत्र तत्त्वान्तरप्रयोज्यत्वरूपं हेतुमत्त्वं विवक्षितं तच न सत्त्वादेः सम्भवति तस्य सत्त्वगुणजन्यत्वेन तत्त्वान्तरजन्यत्वाभावात्र तत्र तल्लक्षणाति या-

हेतोरभावात् । नाऽप्यनित्यत्वम् , तत्त्वान्तरे लयाभावात् ।

'अन्योन्यमिथुनवृत्तयः" । अन्योन्यसहचराः, अविनाभाववृत्तय इति यावत् । 'चः' समुच्चये । भवति चाऽत्राऽऽगमः—

"अन्योऽन्यमिथुनाः सर्वे सर्वे सर्वत्र गामिनः ।
रजसो मिथुनं सत्त्वं सत्त्वस्य मिथुनं रजः ॥
तमसश्चाऽपि मिथुनं ते सत्त्वरजसी उभे ।
उभयोः सत्त्वरजसोर्मिथुनं तम उच्यते ॥
नैषामादिः सम्प्रयोगो वियोगो वोपलभ्यते"—

इति ( दे. भा. ३ । ८ ) ।

"प्रकाशप्रवृत्तिनियमार्थाः" इत्युक्तम् , तत्र के ते इत्थम्भूताः कुतश्चेत्यत आह—

---

प्तिरिति भावः । नच तथापि पूर्वसत्त्वगुणस्य विनाशित्वेन अनित्यत्वापत्तिरित्यत आह । नाप्यनित्यत्वमिति । तत्त्वान्तरे लयवत्त्वमेवानित्यत्वं उक्तस्थले तस्य तत्त्वान्तरत्वाभावेन तत्र न तल्लक्षणातिव्याप्तिरिति ।

अन्योन्यमिथुनवृत्तय इत्यस्यार्थमाह । अन्योन्यसहचरा इति । सहचरा इत्यस्यार्थमाह । अविनाभाववृत्तय इति यावत् । चकारस्य समुच्चयार्थकतामाह । चः समुच्चये इति । अन्योन्यमिथुनवृत्तयश्चेत्यत्र चकारः समुच्चयार्थः, तेन सर्वेषामेव तेषां तेषु सम्भवोऽस्तीति बोधितम् ।

विशेषतश्चैतत् 'अन्योन्याभिभवाश्चैते विरुद्धन्ति परस्परम् । तथाऽन्योन्याश्रयाः सर्वे न तिष्ठन्ति निराश्रयाः इत्यारभ्य 'यथा स्त्री पुरुषश्चैव मिथुनं च परस्परम् । तथा गुणाः समायान्ति युग्मभावं परस्परम् । नैषामादिः सम्प्रयोगो वियोगो वापलभ्यते ॥ इत्यन्तेन ग्रन्थसन्दर्भेण प्रपञ्चितं देवीभागवते इति । नच एतादृशगुणानां अन्योन्याभिभवादिवृत्तिस्वीकारे प्रमाणाभाव इत्याशङ्कायामाह । भवति चात्रागम इति । इति । अत्र च गुणानां अन्योन्यसहचरादिरूपवृत्तिमत्त्वे च । आगमः देवीभागवतादिरूपः भवति अस्तीत्यर्थः । तमेवागममाह । अन्योन्येति । अन्योन्यमिथुनाः, अन्योन्यसहचराः अत एव सर्वे सत्त्वरजस्तमोगुणाः सर्वत्रगामिनः महत्तत्त्वादिसकलकार्येषु प्रविष्टा इत्यर्थः । तत्र एतेषामन्योन्यसाहचर्यं दर्शयति । रजसो मिथुनं सत्त्वमिति । गुणवासनानामनादित्वमनन्तत्वञ्चाह । नैषामादिरिति । एषां गुणानाम् आदिः उत्पत्तिर्नास्ति सम्प्रयोगः संयोगोपि नास्ति अप्राप्तिपूर्वकप्राप्तिरूपस्य तस्य तेषु अभावात् अत एव संयोगाभावात् विप्रयोगो विभागोपि नास्तीत्यर्थः । नच एतेषु संयोगविभागानङ्गीकारे 'एते गुणाः संयोगविभागधर्माण इति योगभाष्यविरोध इति वाच्यम् , तादृशवाक्यस्य पुरुषेण सह गुणानां संयोगविभागधर्माण इत्यर्थकतया अन्योन्यं संयोगविभागाप्रतिपादकतया अविरोधात् । व्यक्तीभविष्यति चोदुपरिष्टादिति॥

कारिकान्तरमवतारयति । प्रकाशप्रवृत्तिनियमार्था इत्युक्तमिति । इत्थम्भूताः प्रीत्याद्यात्मकाः, प्रकाशाद्यर्थाः अन्योन्याभिभवादिक्रियाश्च के किंनामानः, कुतश्च कस्मात्कारणात् ते इत्थंभूताः इत्यतः इत्याकाङ्क्षायां कारिकाकार इति शेषः ।

**सत्त्वं लघु प्रकाशकमिष्टमुपष्टम्भकं चलं च रजः ।**
**गुरु वरणकमेव तमः, प्रदीपवच्चार्थतो वृत्तिः ॥१३॥**

"सत्त्वम्" इति । सत्त्वमेव लघु प्रकाशकमिष्टं सांख्याचार्यैः । तत्र कार्योद्गमने हेतुर्धर्मो लाघवं गौरवप्रतिद्वन्द्वि, यतोऽग्नेरूर्ध्वंज्वलनं भवति । तदेव लाघवं कस्यचित्तिर्यग्गमने हेतुर्भवति, यथा वायोः ।

---

कारिकाप्रथमपादं व्याचष्टे। सत्त्वमेवेति । तथाच गुरु वरणकमेव तम इत्यत्र एवकारः सत्त्वमेव रज एव तम एवेति भिन्नक्रमः सन् सर्वत्रानुषञ्जनीयः । वक्ष्यति चाग्रे 'एवकारः भिन्नक्रमः प्रत्येकमभिसम्बध्यत' इति । 'इष्टमित्यत्र कर्तृवाचकपदं पूरयति । साङ्ख्याचार्यैरिति । कपिलासुरिपञ्चशिखादिभिरित्यर्थः । तथाहि कपिलसूत्रम् "लघ्वादिधर्मैः साधर्म्यं वैधर्म्यं च गुणानाम्' अयमस्यार्थः, गुणानां सत्त्वादीनां लघुत्वादिभिः साधर्म्यं वैधर्म्यं च रजस्तमोभ्यां सह एवमितरेषां चलत्वादिना साधर्म्यवैधर्म्ये बोध्ये । नन्वेतत् तदा स्यात् यदि सत्त्वादिव्यक्तयो अनेकाः स्युः तत्रैव मानं नास्तीति वाच्यम्, उत्कृष्टं सत्त्वं मध्यमं सत्त्वं निकृष्टं सत्त्वमित्यादिरूपेण सत्त्वादिव्यक्तीनामपि नानात्वात् । नच एतन्मते सत्त्वरजस्तमोगुणानां मूलकारणतया तेषां चानन्तत्वे वशेषिकाविशेषापत्तिरिति वाच्यम् । वैशेषिकैर्मूलकारणानां परमाणूनां स्पर्शादिसहितत्वाङ्गीकारात्, एभिश्च सत्त्वादीनां तदनङ्गीकारादेव विशेषात् । नचात्र विनिगमकाभावः । शब्दस्पर्शविहीनं तु रूपादिभिरसंयुतम् । त्रिगुणं तज्जगद्योनिरनादिप्रभवाप्ययम् । इतिविष्णुपुराणादिरूपप्रमाणस्यैव विनिगमकत्वादिति । एवं पञ्चशिखाचार्या अपि "सत्त्वं नाम प्रसादलाघवानभिष्वङ्गप्रीतितितिक्षासन्तोषादिरूपानन्तभेदं समासतः सुखात्मकम्, इत्यादिना सत्त्वस्य लघुत्वं उक्तवन्तः ।

न च सत्त्वरूपस्य गुणस्य सत्त्व एव प्रमाणं नास्तीत्याशङ्कायामाह । तत्रेति । कार्योद्गमने कार्यस्य पदार्थस्य उद्गमने ऊर्ध्वगमने यो हेतुस्तदेव लाघवं तच्च गुरुत्वविरोधि गुरुत्वस्य पतनकारणत्वेन तत्सत्त्वे ऊर्ध्वगमनासम्भवात्, नच सत्यपि लोष्टादौ गुरुत्वे तस्यापि उपरिक्षेपणे सति ऊर्ध्वगमनं भवत्येवेति वाच्यम्, स्वाभाविकोर्ध्वगमनस्यैव लाघवजन्यत्वेन उक्तोर्ध्वगमनस्य तादृशत्वाभावेन तथात्वासम्भवात् । नच गुरुत्वाभावेनैवोर्ध्वगमनादिसिद्धौ लाघवसत्त्वे प्रमाणाभाव इति वाच्यम् । तथा सति उक्तरीत्या लघुत्वाभावेनैव पतनादिसिद्धौ गुरुत्वस्यापि तदभावरूपत्वापत्तिः, तस्मादाद्यपतनासमवायिकारणतया गौरवरूपस्य गुणस्येवाद्योर्ध्वगमनासमवायिकारणतया लाघवरूपस्य गुणान्तरस्यापि सिद्धेरप्रत्यूहत्वम् । पतनासमवायिकारणस्य गुरुत्वस्य कार्यानुमेयत्वमिवोर्ध्वगमनासमवायिकारणस्य लघुत्वस्यापि कार्यानुमेयत्वमेव न तु प्रत्यक्षत्वमित्याशयेन तस्य कार्यं दर्शयति । यत इति । यतः यस्मात् गुणविशेषात् अग्नेरूर्ध्वज्वलनं भवति तत् लाघवमित्यर्थः । नच तथा सति ऊर्ध्वगमनासमवायिकारणतया लघुत्वस्य गुणान्तरत्वस्वीकारे तिर्यग्गमनासमवायिकारणतया गौरवलाघवाभ्यामतिरिक्तस्य गुणस्यापि सिद्धिप्रसङ्ग इत्याशङ्कायामाह । तदेव लाघवमिति । तथाच ऊर्ध्वगमनासमवायिकारणत्वेनानुमितस्य लाघवगुणस्यैव तिर्यग्गमनहेतुत्वसम्भवे तदर्थं गुणान्तरस्वीकारे गौरवमिति भावः । नच तथासति अधोगमनं प्रत्यपि उक्तक्रा-

एवं करणानां वृत्तिपटुत्वहेतुर्लाघवम्, गुरुत्वे हि मन्दानि स्युरिति सत्त्वस्य प्रकाशात्मकत्वमुक्तम्।

सत्त्वतमसी स्वयमक्रियतया स्वकार्यप्रवृत्तिं प्रत्यवसीदन्ती रजसोपष्टभ्येते—अवसादात् प्रच्याव्य स्वकार्ये उत्साहं-प्रयत्नं कार्येते। तदिदमुक्तम्—"उपष्टम्भकम्" इति। कस्मादित्यत उक्तम्—"चलम्" इति। तदनेन रजसः प्रवृत्त्यर्थत्वं दर्शितम्।

---

घवस्यैव हेतुत्वसम्भवे तदर्थमपि गुणान्तरस्वीकारानर्थक्यमापद्येतेति वाच्यम्। ऊर्ध्वगमनरूपकार्यस्य अधोगमनरूपकार्यविरुद्धत्वेन तदुभयं प्रति कारणत्वस्य एकजातीयेऽसम्भवात्। नच तथापि ऊर्ध्वगमनतिर्यग्गमनोभयं प्रति लाघवस्य कारणत्वे एकस्मिन् काले एकस्य वस्तुनः तिर्यग्गमनोर्ध्वगमनरूपकार्यद्वयापत्तिरिति वाच्यम्। अधोगमनविरुद्धगमनं प्रति तस्य हेतुत्वस्वीकारेण तादृशापत्त्यभावात्। नच तथापि अग्नौ लाघवरूपकारणसत्त्वात्तत्रापि कदाचित्तिर्यग्गमनरूपकर्मण उत्पत्त्यापत्तिरिति वाच्यम्। वाय्वपेक्षया प्रकृष्टसत्त्वगुणस्य तेजसः ऊर्ध्वज्वलनं अपकृष्टसत्त्वस्य वायोश्च तिर्यग्गमनमितिरीत्या तादृशापत्तिनिवारणसम्भवात्। उक्तरीत्या द्विविधं लाघवमभिधाय अन्यविधमिन्द्रियादीनां लाघवमाह। एवमिति। यथा लाघवमग्न्यादेरूर्ध्वज्वलनहेतुस्तथेत्यर्थः। करणानां करणं त्रयोदशविधमित्यादिकारिकायां निरूपयिष्यमाणानां इन्द्रियादीनां,वृत्तौ सन्निकर्षादिरूपव्यापारे पटुत्वं शीघ्रकारित्वं सन्निकर्षादिरूपव्यापारं प्रति अव्यवधानेन कारणत्वमिति यावत्, तत्र हेतुः कारणीभूतो यो धर्मः सोपि लाघवमेवेत्यर्थः। तथाच झटिति विषयग्रहणेन तत्प्रयोजकीभूतो लाघवरूपो धर्मः इन्द्रियादावनुमेय इति भावः। नन्वस्तु इन्द्रियेषु वृत्तिपटुत्वं तथापि तत्र लाघवगुणो मास्तु इत्याशङ्कायामनुकूलतर्कमाह। गुरुत्वे हीति। तथाच करणानि यदि गुरुत्ववन्ति स्युः तदा मन्दानि स्युः इति तर्केण तादृशाशङ्काऽपनेयेति भावः। मन्दानि झटिति स्वस्वविषयप्रकाशनासमर्थानि करणानीत्यनुपज्यते। पूर्वोक्तरीत्या इन्द्रियादिगतस्य सत्त्वस्य वृत्तिपटुत्वहेतुत्वेन तस्य सत्त्वं लघु प्रकाशकमित्यनेन प्रकाशात्मकत्वमुक्तमित्याशयः।

रजःस्वरूपप्रतिपादनपरं कारिकाद्वितीयपादं व्याचष्टे। सत्त्वतमसी इति। सत्त्वतमोगुणावित्यर्थः। स्वयं गुणान्तरानपेक्षौ, अक्रियतया क्रियारहितत्वेन स्वस्वकार्यप्रवृत्तिं प्रति स्वस्वकार्याणि प्रकाशनियमादिरूपाणि तेषु या प्रवृत्तिः उत्पादनानुकूला क्रिया तस्याम्, स्वस्वकार्योत्पादन इति यावत्। अवसीदन्ती असमर्थे शिथिलीभूते एतच्च सत्त्वतमसोर्विशेषणम्, रजसा रजोगुणेन उपष्टभ्येते। उपष्टम्भपदार्थमाह। अवसादादिति। स्वस्वकार्यजननशैथिल्यरूपात् प्रच्याव्य निवर्त्य स्वकार्ये प्रकाशादिरूपे उत्साहः आलस्यविरोधी गुणविशेषः,प्रयत्नः प्रवृत्तिः तौ कार्यते प्रवृत्तिजननाय प्रेर्येते इत्यर्थः। तथाच उपष्टभ्नाति उत्तेजयति इत्युपष्टम्भकम् इति व्युत्पत्त्या रजसः उत्साहप्रयत्नोत्पादकतया सत्त्वतमोगुणोपष्टम्भकत्वं सिद्धम्, तथाच सत्त्वादिगुणस्य प्रकाशादिकार्यकारित्वान्यथानुपपत्त्या रजोगुणः सिद्ध इति भावः। तत् सत्त्वरजसोः प्रवर्तकत्वात्, उपष्टम्भकं रजः इदमुक्तम्। कस्मात् कारणात् रजस उपष्टम्भकत्वमित्याशङ्कते कस्मादिति। इत्यतः इत्याशङ्कायाम्, तथाच

रजस्तु चलतया परितस्त्रैगुण्यं चालयत् गुरुणाऽऽवृण्वता च तमसा तत्र तत्र प्रवृत्तिप्रतिबन्धकेन क्वचिदेव प्रवर्त्यत इति ततस्ततो व्यावृत्त्या तमो नियामकमुक्तम्-"गुरु वरणकमेव तमः" इति । एवकारः प्रत्येकं भिन्नक्रमः सम्बध्यते, सत्त्वमेव, रज एव, तम एवेति ।

ननु एते परस्परविरोधशीला गुणाः सुन्दोपसुन्दवत् परस्परं ध्वंसन्त इत्येव युक्तं प्रागेव तेषामेकक्रियाकर्तृताया इत्यत आह—

---

रजसः चलतया सर्वदा प्रवृत्तिशीलत्वेन प्रवाहस्य तदन्तर्गततृणादिचालकत्वमिव रजसोपि सत्त्वतमसोः प्रवर्तकत्वं सङ्गतमिति भावः ।

गुरु वरणकमेव तमः इति तृतीयपादं व्याख्यास्यन् तमसः आवश्यकतां प्रदर्शयति । रजस्त्वित्यादिना । चलतया सततप्रवृत्तिमत्त्वेन परितः सर्वास्मन् स्थले त्रैगुण्यं त्रिगुणात्मकमिन्द्रियादि त्रयो गुणाः वा स्वस्यापि प्रवृत्तिः स्वत एवेति तस्य त्रैगुण्यं प्रति चालकत्वमक्षतमेव, । चालयत् प्रवर्तयत्, एवंभूतं रजः, गुरुणा यतो घटादेः पतनादिकं भवति तथाभूतेन, आवृण्वता तमः अर्थमिव घटादिकं आच्छादयता, अत एव प्रवृत्तिप्रतिबन्धकेन सत्त्वगुणप्रवृत्तिप्रतिबन्धकेन क्वचिदेव प्रवर्त्यते घटपटादिरूपविषय एव न तु विप्रकृष्टव्यवहितयोरपि । तथाच तमस अभावे रजोगुणप्रयोज्यायाः सत्त्वगुणप्रवृत्तेः प्रतिबन्धकस्याभावेन सर्वदा सर्वत्र सत्त्वगुणस्य प्रवृत्त्यापत्तिरिति सार्वज्ञ्यमेव स्यादतस्तमोगुणोपि अवश्यं स्वीकर्तव्य इति भावः ।

तत्र तत्रेति । यत्र यत्र रजोगुणक्रिया न जीवस्योपकारिणी तत्र तत्रेत्यर्थः । इत्यतः कारणात् ततस्ततः विप्रकृष्टादेर्व्यावृत्त्या व्यावर्तनेन तमो नियामकमुक्तम् । गुरु वरणकमेव तम इत्यत्र एवकारः सत्त्वमेव लघु प्रकाशकम्, रज एव उपष्टम्भकम् चलं, तम एव गुरु वरणकं इति सर्वत्र योजनीय इत्याशयेनाह । एवकारः भिन्नक्रम इति । वरणकपदार्थेन तदर्थान्वयो न अपि तु तमः पदार्थेनेत्यर्थः । सत्त्वरजोभ्यामेव तस्यान्वयः नतु लघुपदार्थेनत्याशयेनाह । सत्त्वमेवेत्यादि ।

ननु सत्त्वादिगुणानां प्रकाशादिविभिन्नार्थजनकत्वे तेषां कार्याणां परस्परविरुद्धत्वादन्योन्याभिभवाश्रयेति पूर्वकारिकायां परस्परसहकारेण कार्यकारित्वरूपमन्योन्याश्रयवृत्तित्वं कथं संगच्छते नहि परस्परविरोधिनः शत्रवः सम्भूयैककार्यकारिणो दृश्यन्ते इत्याशयेनाशङ्कते । नन्विति । परस्परविरोधशीलाः परस्परविरुद्धस्वभावाः । गुणाः सत्त्वादयः परस्परम् अन्योन्यम् ध्वंसेरन् विनाशकाः स्युः । अत्रैव दृष्टान्तमाह । सुन्देति । पुरा किल सुन्दोपसुन्दाख्यौ द्वावसुरौ तपः प्रभावात् ईश्वरादात्मस्वस्वभ्रात्रोः परस्परस्मादन्यस्मात् वधाभावरूपवरौ तस्माच्च वरादुत्पन्नातिशयदर्पौ सर्वानेवत्रासयामासतुः । ततश्च काचिदबला तिलोत्तमा नाम्नी तयोः समीपमुपगतवती तां चोभावपि परिणिणीषू परस्परं युद्धं कृत्वा परस्परस्मात् मृताविति हि पौराणिकी कथा अत्र अनुसन्धेया । सुन्दोपसुन्दौ यथा परस्परं जघ्नतुः एवमेव गुणा अपि परस्परं ध्वंसेरन्नित्याशयः । तेषां गुणानां एकक्रियाकर्तृतायाः प्रागेव ते ध्वंसेरन् इति योजना, तथाच तेषां गुणानां परस्परविरुद्धत्वेन मेलनमेव न सम्भवति, सद्भावे च अन्योन्यसहकारेण कार्यजनकत्वं दूरत एव निरस्तमित्यर्थः ।

"प्रदीपवच्चार्थतो वृत्तिः" इति। दृष्टमेतत्, यथा वर्त्तितैलेऽनलविरोधिनी, अथ मिलिते सहाऽनलेन रूपप्रकाशलक्षणं कार्यं कुरुतः। यथा च वातपित्तश्लेष्माणः परस्परविरोधिनः शरीरधारणलक्षणकार्यकारिणः। एवं सत्त्वरजस्तमांसि मिथो विरुद्धान्यप्यनुवर्त्स्यन्ति स्वकार्यं करिष्यन्ति च।

"अर्थतः" इति। पुरुषार्थत इति यावत्, तथा च वक्ष्यति—

"पुरुषार्थ एव हेतुर्न केनचित् कार्यते करणम्"—इति।

(का० ३१)

अत्र च सुखदुःखमोहाः परस्परविरोधिनः स्वस्वानुरूपाणि

---

उक्ताशङ्कानिराकरणपरं कारिकाचतुर्थपादं व्याचष्टे। दृष्टमेतदिति। एतत् परस्परविरुद्धानां सम्भूय एककार्यकारित्वं दृष्टमित्यर्थः। कुत्र दृष्टमित्याशङ्कायामाह। यथेति। वर्त्तिः तूलकादिनिर्मितावयविविशेषः, तैलं प्रसिद्धं ते अनलविरोधिनी अनलः अग्निः विरोधी ययोः तथाभूते तयोरनलदाह्यत्वात्। अथ च एवमपि, अग्निना सह मिलिते रूपप्रकाशस्वरूपं कार्यं कुरुत इत्यर्थः।

अथोक्तस्थले वर्त्तितैलयोरनलविरोधित्वेऽपि तयोः परस्परं विरोधाभावेन उक्तगुणत्रयस्य च परस्परमपि विरोधात् सर्वेषामेव परस्परविरोधिनामेकक्रियाकर्तृत्वमुक्तदृष्टान्तेन न साधयितुं शक्यमित्याशङ्क्य प्रदीपवच्चेत्यत्र अनुक्तसमुच्चयार्थकचकारेण सूचितं सर्वांशेन उक्तानुगुणं दृष्टान्तमाह। यथा चेति। परस्परविरोधिन इति। वातपित्तश्लेष्मणां परस्परविरोधित्वं आयुर्वेदे प्रसिद्धम्। ते मिलिताः शरीरधारणरूपं कार्यं यथा कुर्वन्ति, एवं मिथः परस्परम्, विरुद्धानि अनुवर्त्स्यन्ति परस्परसहकारितामासादयिष्यन्ति, स्वकार्यं महदहङ्कारादिरूपं करिष्यन्ति चेत्यर्थः। वस्तुतस्तु तुल्यबलानामेव विरोधात्प्रकाशादिरूपे कार्ये सत्त्वस्य प्राधान्यादितरेषां चाङ्गत्वान्न तेषां समानबलत्वमिति न विरोधसम्भावना एवमन्यत्रापि। न च क्वचित्सत्त्वस्य प्राधान्यं क्वचिच्चेतरस्येत्यत्र को हेतुरित्यत आह। अर्थत इति। पुरुषार्थत इति विवरणम्। पुरुषार्थस्य अनागतावस्थस्य हेतुत्वे कारिकाकृत्सम्मतिमाह। तथा च वक्ष्यतीति।

न च सत्त्वादिगुणानामप्रत्यक्षत्वात्तेषां सुखदुःखमोहात्मकत्वे प्रमाणाभावः अतस्तेषां सुखदुःखमोहात्मकत्वमनुमानेन साधयति। अत्र चेति। अत्र परिदृश्यमानपदार्थेषु, विद्यमाना इति शेषः, स्वस्वानुरूपाणीत्यस्य विवरणं सुखदुःखमोहात्मकानीति। निमित्तानि कारणानि, कल्पयन्ति अनुमापयन्ति। तथा च प्रतिपद्यमानबाह्यपदार्थाः सुखदुःखमोहात्मककारणकाः सुखदुःखमोहात्मकत्वात् यत् यदात्मकं तत्तदात्मककारणकं यथा मृदात्मको घटः तदात्मककारणक इति व्याप्त्या कारणीभूतानां सुखदुःखमोहात्मकत्वं सिद्धमिति भावः।

केचित्तु न च त्रिगुणमविवेकीत्यादिना आत्मभिन्नस्य सर्वस्य त्रिगुणात्मकत्वं प्रतिपादितं तन्न सम्भवति, यत् यदात्मकं यदा यस्य भवति न तदा तत् अन्यात्मकमिति वक्तुंशक्यम्। तथा सति तस्यैव अन्यरूपेणापि तस्मिन्नेव काले प्रतीतिप्रसङ्गात्। न हि यदा यस्य यत् सुखरूपं तत् तदा तस्य दुःखरूपं प्रतीयते, अत एवोक्तं भामतीकृता "यदि पुनरेक

सुखदुःखमोहात्मकान्येव निमित्तानि कल्पयन्ति। तेषां च परस्परमभिभाव्याभिभावकभावान्नानात्वम्।

तद्यथा—एकैव स्त्री रूपयौवनकुलशीलसम्पन्ना स्वामिनं सुखाकरोति। तत्कस्य हेतोः? स्वामिनं प्रति तस्याः सुखरूपसमुद्भवात्। सैव स्त्री सपत्नीर्दुःखाकरोति, तत् कस्य हेतोः? ताः प्रति तस्या दुःखरूपसमुद्भवात्। एवं पुरुषान्तरं तामविन्दमानं सैव मोहयति, तत् कस्य हेतोः? तं प्रति तस्या मोहरूपसमुद्भवात्। अनया च स्त्रिया सर्वे भावा व्याख्याताः।

तत्र यत् सुखहेतुः तत् सुखात्मकं सत्त्वम्, यत् दुःखहेतुस्तत् दुः

एव सुखादिस्वभावा भवेयुः ततः स्वरूपत्वात् हेमन्तेपि चन्दनः सुखः स्यात्, न हि चन्दनः कदाचिदचन्दनः, तथा निदाघेपि कुङ्कुमपङ्कः सुखः स्यात् न ह्यसौ कदाचिदकुङ्कुमपङ्क इति, एवं कण्टकः क्रमेलकस्य सुख इति मनुष्यादीनामपि प्राणभृतां सुखः स्यात्, न ह्यसौ कांश्चित्प्रत्येव कण्टक इति, तस्मात् असुखादिस्वभावाः अपि चन्दनकुङ्कुमादयो जातिकालाद्यवस्थाद्यपेक्षया सुखदुःखादिहेतवो न तु स्वयं सुखादिस्वभावा इति रमणीय" इति। इत्याशङ्कायामाह। अत्र च सुखदुःखमोहा इति। अत्र गुणस्वभावनिरूपणावसरे इदं ध्येयमिति शेषः। परस्परविरोधिनः ये सुखदुःखमोहास्ते स्वभाविशेषेण वर्तमाना अपि नाकस्मादेव उद्भवन्ति येन सर्वान्प्रत्यविशेषेण ते आगच्छेयुरपि तु स्वस्योद्भवे निमित्तानि कल्पयन्ति अपेक्षन्ते इत्यन्वयः। निमित्तान्यपि च न यानि कानिचिदपितु स्वस्वानुरूपाणि स्वस्वप्रादुर्भावानुकूलानि सुखदुःखमोहात्मकान्येव कल्पयन्ति। तत्र सुखं स्वोद्भवे धर्मापेक्षं सुखात्मकं सत्त्वरूपं निमित्तमपेक्षते दुःखं च स्वोद्भवेऽधर्मापेक्षं दुःखात्मकं रजोनिमित्तमपेक्षते मोहश्च स्वप्रादुर्भावेऽधर्मापेक्षं मोहात्मकं तमोनिमित्तमपेक्षत इत्यर्थं इति वदन्ति।

ननु यथा एकस्य वस्तुनः सुखदुःखमोहात्मकत्वं तथा तत्कारणस्य एकस्यैव गुणस्य सुखदुःखमोहात्मकत्वमस्तु लाघवात् इति कथं गुणत्रयसिद्धिरित्यत आह। तेषाञ्चेति। सुखदुःखमोहानां परस्परं अन्योन्यं, अभिभाव्याभिभावकभावात् तत्कारणानां गुणानां नानात्वमित्यर्थः। सुखदुःखमोहानां परस्परमभिभाव्याभिभावकभावं दृष्टान्तेन प्रदर्शयति। तद्यथेति। सुखरूपसमुद्भवादिति। एतेन स्वामिनं प्रति दुःखतमसोः आविर्भावः तत्रा नास्तीति सूचितम्। एवमन्यत्रापि, तथा च एकस्य वस्तुनः सुखदुःखमोहात्मकत्वेपि यं प्रति यद्रूपस्योद्भवः अभिभवश्चान्यरूपयोः तम्प्रति तस्य तेन रूपेण प्रतीतिः। दृश्यते च अनेकात्मकवस्तुनोपि एकैकं प्रति एकैकरूपेण ज्ञानं स्त्रीभिः कामोऽर्थिभिः स्वर्द्रुः कालः शत्रुभिरीक्षितः। इत्यादौ। तस्मात् सुखदुःखमोहानां परस्परस्परमभिभाव्याभिभावकभावात् तत्कारणस्यापि एकैकगुणस्य एकैकरूपत्वमेव वक्तव्यमन्यथा एकदैवैकैकं प्रति सुखदुःखमोहत्रयरूपेणापि एकस्य वस्तुनः प्रत्यक्षं स्यात्। उक्तकामिनीदृष्टान्तेन सर्वेषामेव भावानां सुखदुःखमोहात्मकत्वमाह। अनयेति। भावाः परिणामिनः पदार्थाः, व्याख्याताः सुखदुःखमोहात्मकत्वेनेति शेषः।

सम्प्रति सत्त्वादिस्वरूपमाह। तत्रेति। कामिन्यादावित्यर्थः। तत्सुखात्मक-

खात्मकं रजः, यन्मोहहेतुस्तन्मोहात्मकं तमः । सुखप्रकाशलाघवानां त्वेकस्मिन् युगपदुद्भूतावविरोधः सह दर्शनात्। तस्मात् सुखदुःखमोहैरिव विरोधिभिः अविरोधिभिरप्येकैकगुणवृत्तिभिः सुखप्रकाशलाघवैर्न निमित्तभेदा उन्नीयन्ते । एवं दुःखोपष्टम्भकत्वप्रवर्तकत्वैः, एवं मोहगुरुत्वावरणैः—इति सिद्धं त्रैगुण्यमिति ।

स्यादेतत्—अनुभूयमानेषु पृथिव्यादिष्वनुभवसिद्धा भवन्त्वविवेकित्वादयः । ये पुनः सत्त्वादयो नाऽनुभवपथमधिरोहन्ति, तेषां कुतस्त्यमविवेकित्वं विषयत्वमचेतनत्वं प्रसवधर्मित्वं च ? इत्यत आह—

**अविवेक्यादेः सिद्धिस्त्रैगुण्यात्तद्विपर्ययाभावात् ।**
**कारणगुणात्मकत्वात्कार्यस्याऽव्यक्तमपि सिद्धम् ॥१४॥**

"अविवेक्यादेः" इति । अविवेकित्वमाविवेकि । यथा 'द्व्येकयोर्द्विवचनैकवचने' ( पा. सूत्र. १।४।२२ ) इत्यत्र द्वित्वैकत्वयोरिति, अन्यथा द्व्येकेष्विति स्यात् ।

---

मिति । कार्यकारणयोरभेदादिति भावः । एवमग्रेऽपि । तम इति । उच्यते इति शेषः ।

ननु सुखदुःखमोहरूपैः कार्यैः यदि कारणत्रयस्यानुमितिः तदा सुखप्रकाशलाघवैः दुःखोपष्टम्भकत्वप्रवर्तकत्वैः मोहगुरुत्वावरणैश्च इतरेषामपि गुणानां सिद्धिः स्यात् इत्यत आह । सुखप्रकाशलाघवानामिति । तथा च सुखदुःखमोहानामेकस्मिन्नपि युगपदुत्पत्तेः सर्वजनसिद्धतया न तैः पृथक्कारणकल्पना युक्ता इति लाघवेन सत्त्वस्यैव सुखप्रकाशलाघवकारणत्वमिति गुणत्रयसिद्धिर्निष्प्रत्यूहैव । उन्नीयन्ते अनुमीयन्ते । दुःखोपष्टम्भकत्वप्रवर्तकत्वैरिति । न निमित्तभेदा उन्नीयन्ते इति पूर्वोक्तमनुषज्यते । एवमग्रेऽपि । उपसंहरति । इति सिद्धमिति । इति यतः सुखदुःखमोहैरेव परस्परं विरोधात् अतिरिक्तगुणसिद्धिः न लाघवप्रकाशादिभिः अतः त्रैगुण्यं सिद्धमित्यर्थः॥

उक्तरीत्या सर्वेषां भावानां त्रैगुण्यं प्रसाध्य तेनैव हेतुना अविवेकित्वादीनां साधर्म्याणां साधकं कारिकान्तरमवतारयति । स्यादेतदिति । अनुभूयमानेषु प्रत्यक्षविषयेषु, अविवेकित्वादय इति । आदिना त्रिगुणमविवेकीत्यादिकारिकायामुक्तानां विषयत्वादीनां परिग्रहः । सत्त्वादय इति । सत्त्वशब्देनात्र सत्त्वरजस्तमोगुणानां साम्यावस्थात्मकं प्रधानं बोध्यम् । आदिना महत्तत्त्वाहङ्कारादिपञ्चतन्मात्रान्तानां परामर्शः । नानुभवपथमधिरोहन्ति न प्रत्यक्षविषया भवन्ति, कुतस्त्यं किम्प्रमाणकम् ।

अविवेकित्वमविवेकीति । तथा च आर्यास्थाविवेकिपदस्य भावप्रधाननिर्देशतया अविवेकित्वपरत्वम् , अत्रैव दृष्टान्तमाह । यथेति । न च उक्तसूत्रे द्विपदस्य द्वित्वविशिष्टपरता एवमेकपदस्यैकत्वविशिष्टपरता च किं न स्यादित्यत आह । अन्यथेति । तस्य भावप्रधानत्वानङ्गीकार इत्यर्थः । तथा च उक्तसूत्रे द्विपदस्य द्वित्वविशिष्टार्थकत्वे एकपदस्य च एकत्वविशिष्टार्थकत्वं तयोर्द्वन्द्वे द्व्येकशब्दार्थयोः बहुसंख्याकत्वेन द्व्ये-

कुतः पुनरविवेकित्वादेः सिद्धिरित्यत आह—"त्रैगुण्यात्" इति । "यद्यत् सुखदुःखमोहात्मकं तत्तदविवेकित्वादियोगि, यथेदमनुभूयमानं व्यक्तम्—" इति स्फुटत्वादन्वयो नोक्तः ।

व्यतिरेकमाह—"तद्विपर्ययाभावात्" इति । अविवेक्यादिविपर्यये पुरुषे त्रैगुण्याभावात् ।

अथ वा व्यक्ताव्यक्ते पक्षीकृत्याऽन्वयाभावेनाऽवीत एव हेतुस्त्रैगुण्यादिति वक्तव्यः ।

स्यादेतत्—अव्यक्तासिद्धौ सत्यां तस्याऽविवेकित्वादयो धर्माः सिध्यन्ति, अव्यक्तमेव त्वद्याऽपि न सिध्यति, तत्कथमविवेकित्वादिसिद्धिरत आह—"कारणगुणात्मकत्वात्" इति ।

अयमभिसन्धिः—कार्यं हि कारणगुणात्मकं दृष्टम्, यथा तन्त्वादिगुणात्मकं पटादि । तथा महदादिलक्षणेनाऽपि कार्येण सुखदुःखमोहरूपेण स्वकारणं सुखदुःखमोहात्मकं प्रधानमव्यक्तं सिद्धं भवति ।

---

केष्विति बहुवचनान्त एव प्रयोगः साधुः स्यात् न तु द्व्येकयोरिति तस्मादुक्तप्रयोगस्य साधुत्वान्यथानुपपत्त्या उक्तसूत्रे तयोः भावप्रधाननिर्देशत्वमावश्यकमेवेति भावः।

प्रधानादीनां अविवेकित्वादिसाधकं हेतुमाह । त्रैगुण्यादिति । तथा च प्रधानमहदहङ्कारादीनि अविवेकित्वादिमन्ति त्रिगुणात्मकत्वात् इत्यनुमानेन तेष्वपि अविवेकित्वादिसिद्धिः । उक्तप्रयोगे अन्वयव्याप्तिमाह । यद्यदिति । तथा च यद्यत्सुखदुःखमोहात्मकं तत्तदविवेकीत्यादिरूपाया अन्वयव्याप्तेः घटपटादौ साध्यहेत्वोरन्वयसाहचर्यस्य स्पष्टतया सुज्ञेयत्वात् अन्वयव्याप्तेः कारिकाकृता अप्रदर्शनेपि न न्यूनता ।

साध्यभावव्यापकीभूताभावप्रतियोगित्वरूपव्यतिरेकव्याप्तिं कारिकाकार आह । तद्विपर्यये इति । तत्पदस्य अविवेकिपरामर्शकत्वमाह । अविवेक्यादिविपर्यये इति । अविवेक्यादेः विपर्ययः अभावो यस्मिन् तथाभूते पुरुषे आत्मनि । त्रैगुण्याभावादिति । तथा च यदविवेकि न भवति तत्त्रिगुणं न भवति इति व्याप्तिरपि पुरुषे सुग्रहेति भावः ।

सर्वमभिधेयं प्रमेयत्वात् पृथिवी इतरेभ्यो भिद्यते गन्धवत्त्वादित्यादाविव एकव्याप्त्यैवानुमितिसम्भवे स्फुटतरान्वयव्याप्तिं परित्यज्य व्यतिरेकव्याप्त्यभिधानमनुचितमित्याशयेनाह । अथवेति । तथा च घटपटादीनां पक्षतया तत्रापि साध्यनिश्चयाभावेन अन्वयसाहचर्यानिश्चयादन्वयव्याप्तेर्गृहीतुमशक्यतया व्यतिरेकव्याप्तेरेवानायत्या प्रदर्शनमावश्यकमिति भावः ।

अव्यक्तसिद्धाविति । तथा च प्रधानादिकं अविवेकित्वादियोगीत्यादिपूर्वोक्तानुमानमाश्रयासिद्धिग्रस्तमिति भावः ।

अभिसन्धिः अभिप्रायः, सिद्धं भवति इति । तथा च महत्तत्वादिकं सुखदुःखमोहात्मककारणजन्यं कार्यत्वे सति सुखदुःखमोहात्मकत्वात् इत्यनुमानेन अव्यक्तसिद्धिः । नि पितं चेदमधस्तात् विशेषतश्चैतदग्रे स्फुटीभविष्यति ।

स्यादेतत्—'व्यक्ताद् व्यक्तमुत्पद्यते' इति कणभक्षाक्षचरणतनयाः। परमाणवो हि व्यक्ताः, तेभ्यो द्व्यणुकादिक्रमेण पृथिव्यादिलक्षणं कार्यं व्यक्तमारभ्यते। पृथिव्यादिषु च कारणगुणक्रमेण रूपाद्युत्पत्तिः। तस्मात् व्यक्ताद् व्यक्तस्य तद्गुणस्य चोत्पत्तेः कृतमदृष्टचरेणाऽव्यक्तेनेत्यत आह—

**भेदानां परिमाणात्समन्वयाच्छक्तितः प्रवृत्तेश्च ।**
**कारणकार्यविभागादविभागाद्वैश्वरूप्यस्य ॥ १५ ॥**
**कारणमस्त्यव्यक्तम्. प्रवर्तते त्रिगुणतः समुदयाच्च ।**
**परिणामतः सलिलवत् प्रतिप्रतिगुणाश्रयविशेषात्॥ १६॥**

"भेदानाम्" इति। भेदानां—विशेषाणां महदादीनां भूम्यन्तानां कार्याणां कारणं—मूलकारणमस्त्यव्यक्तम्। कुतः? "कारणकार्यविभागादविभागाद्वैश्वरूप्यस्य"। 'कारणे सत् कार्यमिति स्थितम्।

---

कारिकान्तरमवतारयितुमाशङ्कते। स्यादेतदिति। व्यक्तपदमत्र न प्रत्यक्षविषयपरम् नैयायिकादिभिः परमाणोः प्रत्यक्षविषयत्वानङ्गीकारात्, अपि तु पृथिव्यादिपरमेवेत्याशयेनाह। परमाणवो हीति। अयमेषामाशयः सृष्टिकाले अदृष्टवदात्मसंयोगात् परमाणौ क्रिया ततो विभागः ततः पूर्वदेशसंयोगनाशः ततः परमाणुद्वयसंयोगः ततो द्व्यणुकोत्पत्तिः अनयैव संयुक्तद्व्यणुकत्रयात्त्रसरेणुः एवं चतुरणुकादिकपालान्तमुत्पद्यते ततश्च कपालद्वयसंयोगात् घटोत्पत्तिरितिरीत्या घटपटादिरूपाणां पृथिव्यादीनामवयविनामुत्पत्तिः। नन्वेवं रीत्या घटस्योत्पत्तावपि तत्र रूपादेः गुणस्य कथमुत्पत्तिः इत्यत आह। कारणगुणक्रमेणेति। अवयववृत्तिविशेषगुणाः अवयविनि स्वसमानजातीयगुणानारभन्ते इति नियमेन परमाणुगतरूपसजातीयस्य रूपस्य द्व्यणुकेउत्पत्तिरिति क्रमेण घटादावपि रूपादीनामुत्पत्तिरिति। तथा च कार्यस्य कारणगुणात्मकत्वस्वीकारेऽपि परमाण्वादेरेव सिद्धिः स्यान्नत्वदृष्टचरस्य रूपस्पर्शादिविहीनस्य व्यक्तस्य सिद्धिरिति भावः। अत एवोक्तं न्यायसूत्रकृता व्यक्ताद्व्यक्त निष्पत्तिरिति, कृतम् अलम्।

भिद्यन्ते परस्परं भिन्नतया प्रतीयन्ते इति भेदाः इत्याशयेन भेदपदार्थमाह। विशेषाणामिति महदादीनामिति आदिना अहङ्कारैकादशेन्द्रियपञ्चतन्मात्राणां परिग्रहः। कारणमव्यक्तमिति अग्रिमकारिकास्थपदान्वयानुरोधेन व्याचष्टे। कारणमिति। ईश्वररूपनिमित्तकारणमादायार्थान्तरभयेनाह। कारणम् मूलकारणमिति। मूलवत् कारणमित्यर्थः। तेन उपादानकारणत्वलाभः। ईश्वरस्य च महदादिगुणसमानजातीयगुणवत्त्वाभावेन न तथात्वसम्भव इति भावः। अत्र हेतुं जिज्ञासते। कुत इति। कस्माद्धेतोरित्यर्थः। परिमाणसमन्वयादीनां पञ्चानां हेतुत्वेऽपि कारणकार्यविभागाविभागयोः अभ्यर्हितहेतुत्वेन प्रथमं तौ हेतू व्याचष्टे कारणकार्येति। वैश्वरूप्यास्य नानारूपस्य कार्यस्य कारणेभ्यः विभागात् आविर्भावात् इति प्रथमहेत्वर्थः।
एवं कार्यमात्रस्य कारणेऽविभागात् तिरोभावात् इति द्वितीयहेत्वर्थः।
तत्र प्रथमहेतुं विशदयति। कारणे सत्कार्यमिति स्थितमिति। उत्पत्तेः प्रागपी-

तथा च यथा कूर्मशरीरे सन्त्येवाऽङ्गानि निःसरन्ति विभज्यन्ते—'इदं कूर्मशरीरं, एतान्येतस्याऽङ्गानि'—इति । एवं निविशमानानि तस्मिन् अव्यक्तीभवन्ति । एवं कारणान्मृत्पिण्डाद्धेमपिण्डाद्वा कार्याणि घटमुकुटादीनि सन्त्येवाऽऽविर्भवन्ति विभज्यन्ते । सन्त्येव पृथिव्यादीनि कारणात्तन्मात्रादाविर्भवन्ति विभज्यन्ते, सन्त्येव च तन्मात्राण्यहङ्कारात् कारणात्, सन्नेवाऽहङ्कारः कारणान्महतः, सन्नेव च महान् परमाऽव्यक्तात् । सोऽयं कारणात् परमाव्यक्तात् साक्षात् पारम्पर्येणाऽन्वितस्य विश्वस्य कार्यस्य विभागः ।

प्रतिसर्गे तु मृत्पिण्डं सुवर्णपिण्डं वा घटमुकुटादयो विशन्तोऽव्यक्तीभवन्ति । तत्कारणरूपमेवाऽनभिव्यक्तं कार्यमपेक्ष्याऽव्यक्तं भवति । एवं पृथिव्यादयस्तन्मात्राणि विशन्तः स्वापेक्षया तन्मात्राण्यव्यक्तयन्ति । एवं तन्मात्राण्यहङ्कारं विशन्त्यहङ्कारमव्यक्तयन्ति, एवमहङ्कारो महान्तमाविशन् महान्तमव्यक्तयति, महान् प्रकृतिं स्वकारणं विशन् प्रकृतिमव्यक्तयति । प्रकृतेस्तु न क्वचिन्निवेश इति सा सर्वकार्याणामव्यक्तमेव । सोऽयमविभागः प्रकृतौ, वैश्वरूप्यस्य नानारूपस्य कार्यस्य, स्वार्थिकः ष्यञ्, तस्मात् कारणे कार्यस्य सत एव

---

ति शेषः, । स्थितम् अधस्तादुपपादितम्, सन्त्येव विद्यमानान्येव, निःसरन्तीति अङ्गानीत्यस्य शतृप्रत्ययान्तं विशेषणम्, विभज्यन्ते भिन्नतया प्रतीयन्ते, तामेव प्रतीतिमाह । इदं कूर्मशरीरमिति । तस्मिन् कूर्मशरीरे, निविशमानानि अङ्गानीति पूर्वोक्तमनुषज्यते, एवं दृष्टान्त उपपाद्य प्रकृते आह । एवमिति । साक्षादिति महत्तत्त्वमभिप्रेत्य, तदितरकार्याभिप्रायेण पारम्पर्येति ।

द्वितीयं हेतुं व्याचष्टे । प्रतिसर्गे त्विति । प्रतिसर्गे प्रलयकाले, अव्यक्तीभवन्ति, मृदाद्यात्मना अवस्थायानभिव्यक्ता भवन्तीत्यर्थः । नच प्रधानस्यैवाव्यक्ततया मृत्पिण्डादीनां कथमव्यक्तत्वमित्यत आह । तत्कारणमिति । अनभिव्यक्तरूपं कार्यमपेक्ष्य तत्कारणरूपमेव अव्यक्तमित्युच्यते । तथाच निरवधिकाव्यक्ततायाः प्रधान एव सत्त्वेऽपि कार्यमपेक्ष्याव्यक्ततायाः कारणेषु मृदादिष्वपि सत्त्वे न क्षतिः । स्वापेक्षया तन्मात्राणीति । स्वावधिकमव्यक्तत्वं तन्मात्रासु कुर्वन्तीत्यर्थः । उक्तरीत्या महदादीनामव्यक्तत्वं उक्त्वा सम्प्रति प्रकृतेः परमाव्यक्तत्वमाह । सा सर्वकार्याणामव्यक्तमेवेति । तस्याः सर्वकार्याव्यक्तत्वे हेतुमाह । प्रकृतेस्त्विति । तथाच प्रकृतेः कारणाभावेन तस्याः क्वचिन्निवेशाभावेन अव्यक्तत्वमेवेत्यर्थः । अव्यक्तमेवेत्येवकारेण व्यक्तत्वव्यवच्छेदः । उक्तरीत्या तिरोभावस्य अविभागपदार्थत्वमाह । सोऽयमविभाग इति । वैश्वरूप्यस्येत्यस्यार्थमाह । नानारूपस्य कार्यस्येति । तथाच नानारूपस्य कार्यस्य सोऽयं तिरोभावः प्रकृतौ विद्यमानः अविभाग इत्यर्थः । वैश्वरूप्यस्येत्यत्र ष्यञ्प्रत्ययस्यार्थमाह । स्वार्थिक इति । तथाच वैश्वरूप्यस्येत्यस्य नानारूपस्येति विवरणं सङ्गतमेव । उक्तरीत्या कारिकोक्तौ हेतू निगमयति । तस्मादिति । तथाच महत्तत्त्वा-

विभागाविभागाभ्यामव्यक्तं कारणमस्ति।

इतश्चाऽव्यक्तमस्तीत्याह—"शक्तितः प्रवृत्तेश्च" इति। कारणशक्तितः कार्यं प्रवर्तत इति सिद्धम्, अशक्तात् कारणात् कार्यस्यानुत्पत्तेः। शक्तिश्च कारणगता न कार्यस्याव्यक्तत्वादन्या, न हि सत्कार्यपक्षे कार्यस्याऽव्यक्ततायाः अन्यस्यां शक्तौ प्रमाणमस्ति, अयमेव हि सिकताभ्यस्तिलानां तैलोपादानानां भेदो यदेतेष्वेव तैलमस्त्यनागतावस्थं न सिकतास्विति।

स्यादेतत्-शक्तितः प्रवृत्तिः कारणकार्यविभागाविभागौ च महत एव परमाव्यक्तत्वं साधयिष्यतः, कृतं ततः परेणाऽव्यक्तेनेत्यत आह—"परिमाणात्"। इति। परिमितत्वात्, अव्यापित्वादिति यावत्।

---

दिकार्याणि स्वापेक्षया अव्यक्तोपादानकानि तिरोभाववत्वात् आविर्भाववत्त्वाच्च घटादिवदित्यनुमानेन महत्तत्त्वादीनामव्यक्तकारणसिद्धौ अनवस्थापत्त्या तस्य कारणाभावेन परमाव्यक्तरूपस्य प्रधानस्य सिद्धिरित्यर्थः।

शक्तितः प्रवृत्तेरिति कारिकोक्तं हेत्वन्तरं व्याचष्टे। इतश्चेति। अकारणनिष्ठशक्तितः कार्यप्रवृत्तेरभावेन कारणेति पूरयति। कारणशक्तित इति। कारणनिष्ठशक्तित इत्यर्थः। प्रवर्तते उत्पद्यते, एतत् कुतः सिद्धमित्यत आह। अशक्तादिति। तथाच कारणशक्तिः कार्योत्पादिका स्वान्वयव्यतिरेकानुविधायिकार्यकत्वात् यो यदन्वयव्यतिरेकानुविधायिवत्कः स तदुत्पादकः यथा स्वान्वयव्यतिरेकानुविधायिघटको दण्डः इति रीत्या शक्तिः कार्योत्पादिका इति सिद्धम्। अस्तु उक्तरीत्या शक्तिसिद्धिः तथापि प्रकृते किमायातमत आह। शक्तिश्चेति। कारणगता शक्तिश्च कार्यस्याव्यक्तत्वादन्या नास्ति, तथाच कारणगतकार्यस्याव्यक्तताया एव शक्तिरूपत्वं ननु मीमांसकादिवत्पदार्थान्तरत्वमिति भावः। अत्र हेतुमाह, नहीति। हि यतः, शक्तस्य शक्यकरणादिति पूर्वतनकारिकाव्याख्यानावसरे कार्यस्याभिव्यक्तितोऽतिरिक्ता शक्तिर्न सम्भवत्येवेति स्पष्टमेवावेदितम्। उक्तप्रकारायाः शक्तेः स्वीकारादेव तैलोपादानानां तिलानां सिकताभ्यो विशेषः सम्भवतीत्याह। अयमेव हीति। कार्यस्याव्यक्ततारूपशक्तिरेवेत्यर्थः। भेदो विशेषः। तथाच महत्तत्त्वादिकं शक्तिरूपाव्यक्तावस्थाजन्यं कार्यत्वात् घटवत् इत्यनुमानेन अव्यक्तावस्थारूपशक्तिसिद्धौ सा शक्तिः क्वचिदाश्रिता शक्तित्वात् इति रीत्या तादृशशक्त्याश्रयतया प्रधानसिद्धिरिति भावः।

ननूक्तरीत्या प्रधानसिद्धिस्तदा स्यात् यदि महत्तत्त्वस्य कार्यत्वं स्यात् तदेव तु नास्ति अहङ्कारकारणे महत्तत्त्व एव अस्माभिः विश्रामाभ्युपगमात् इत्याशयेनाशङ्कते। स्यादेतदिति। परमाव्यक्तत्वं प्रधानत्वं, तथाच अहङ्कारादौ कार्यत्वस्य सिद्धत्वेन तत्कारणस्य महत्तत्त्वस्य परमाव्यक्तस्वरूपं प्रधानत्वं सिद्ध्यतु प्रकृत्याख्यप्रधानस्वीकारे तु प्रमाणाभाव इति भावः। परिमाणं परिमितिः भावे ल्युट्प्रत्ययेनोक्तार्थलाभादित्याशयेनाह। परिमितत्वादिति। तथाच बुद्ध्यादयः अव्यक्तकारणकाः परिमितत्वात् इत्यनुमानेन तत्कारणस्य सिद्धिः। नच विभुपरिमाणस्य प्रकृत्यादौ सत्त्वेन तत्र चाव्यक्तकारणकत्वाभावात् व्यभिचार इत्याशयेन परिमितत्वादित्यस्यार्थमाह।

विवादाध्यासिता महदादिभेदा अव्यक्तकारणवन्तः, परिमितत्वात्, घटादिवत्। घटादयो हि परिमिताः मृदाद्यव्यक्तकारणका दृष्टाः। उक्तमेतद्यथा कार्यस्याऽव्यक्तावस्था कारणमेवेति यन्महतः कारणं तत् परमाव्यक्तम्, ततः परतराव्यक्तकल्पनायां प्रमाणाभावात्।

इतश्च विवादाध्यासिता भेदाः अव्यक्तकारणवन्तः, "समन्वयात्" भिन्नानां समानरूपता समन्वयः।

सुखदुःखमोहसमन्विता हि बुद्ध्यादयोऽध्यवसायादिलक्षणाः प्रतीयन्ते। यानि च यद्रूपसमनुगतानि, तानि तत्स्वभावाव्यक्तकार-

---

अव्यापित्वादिति। तथाच अव्यापकत्वरूपस्य परिमितत्वस्य प्रकृत्यादावभावेन नोक्तव्यभिचार इति भावः। उक्तानुमाने घटादिरूपदृष्टान्ते हेतुसाध्ययोः सत्त्वं दर्शयति। घटादयो हीति। ननु कथं मृदादीनामव्यक्तत्वमित्यत आह। उक्तमेतदिति। कार्यस्याव्यक्तावस्था कारणमेवेति पूर्वमुक्तमित्यर्थः। तथाच घटादिरूपदृष्टान्ते मृदाद्यव्यक्तकारणकत्वस्य दृष्टतया न दृष्टान्तस्य साध्यविकलत्वमिति भावः। न च महतः अव्यापित्वरूप हेतुमत्त्वे प्रमाणाभाव इति वाच्यम्। हेतुमदनित्यमव्यापीत्यत्र कारिकायां तत्र तस्योक्तत्वात्, प्रमाणञ्चैतन्महत्तत्त्वनिरूपणावसरे प्रतिपादयिष्यामः। तथाचोक्तानुमानेन महत्तत्त्वस्य कारणं यत्सिद्धं तदेव प्रधानमित्याशयेनाह। यन्महतः कारणमिति। तत्परमाव्यक्तं उच्यते इति शेषः।

नन्वेवंरीत्या परमाव्यक्तत्वेनभवदभिमतं प्रधानं अव्यक्तकारणकं अव्यक्तत्वात् मृदादिवदित्यनुमानेन परतराव्यक्तमपि सेत्स्यति इत्याशङ्कायामाह। ततः परतरेति। प्रधानात् परतरेत्यर्थः। प्रमाणाभावादिति। तथाच उक्तहेतोः परिमितत्वरूपोपाधिग्रस्तत्वेन व्याप्यत्वासिद्धतया न प्रमाणत्वमिति प्रमाणान्तरस्य चाभावान्न तदपेक्षया परतरस्याव्यक्तस्य सिद्धिरिति भावः।

अथोक्तानुमानैः महत्तत्त्वादीनां अव्यक्तकारणकत्वसिद्धावपि तादृशाव्यक्तस्य सत्त्वरजस्तमोगुणात्मकत्वे किं प्रमाणमित्याशङ्कायां तेषां सत्त्वरजस्तमोगुणात्मकत्वसाधकं हेत्वन्तरमाह। इतश्चेति। विवादाध्यासिताः विमताः, भेदा महदादयः। समन्वयादित्यत्र समन्वयपदार्थमाह। भिन्नानामिति। अहङ्कारत्वपञ्चतन्मात्रत्वादिरूपेण परस्परभिन्नानां या सुखदुःखमोहात्मकत्वेन समानरूपता स एव समन्वय पदार्थ इत्यर्थः।

उक्तस्य समन्वयरूपहेतोः पक्षे सत्त्वं प्रदर्शयति। सुखदुःखमोहसमन्विता हीति। उदाहरणमाह। यानीति। नच यानि यद्रूपसमनुगतानि तानि तत्स्वभावाव्यक्तकारणकानीति व्याप्तिर्न सम्भवति, घटादौ घटत्वादिजातिसमनुगतत्वेपि तत्र तादृशजातिस्वभावाव्यक्तकारणकत्वाभावात् इति वाच्यम्। यानि यद्द्रव्यसमनुगतानि तानि तत्स्वभावाव्यक्तकारणकानीति व्याप्तौ तात्पर्यात्। उक्तस्थले च जातेर्द्रव्यत्वाभावेन न व्यभिचारः नच सुखादीनां द्रव्यत्वाभावेन नोक्तव्याप्त्या सुखदुःखमोहात्मकाव्यक्तकारणकत्वसिद्धिरिति वाच्यम्। सुखादीनां सत्त्वाद्यात्मकानां द्रव्यत्वेन तत्र गुणत्वव्यवहारस्य परार्थत्वमात्रेणोपपादितत्वेनोक्तदोषाभावात्।

णकानि, यथा मृद्धेमपिण्डसमनुगता घटमुकुटादयो मृद्धेमपिण्डाव्यक्तकारणका इति कारणमस्त्यव्यक्तं भेदानामिति सिद्धम्।

अव्यक्तं साधयित्वा तस्य प्रवृत्तिप्रकारमाह—"प्रवर्तते त्रिगुणतः" इति। प्रतिसर्गावस्थायां सत्त्वं रजस्तमश्च सदृशपरिणामानि भवन्ति। परिणामस्वभावा हि गुणा नाऽपरिणम्य क्षणमप्यवतिष्ठन्ते। तस्मात् सत्त्वं सत्त्वरूपतया, रजो रजोरूपतया, तमस्तमोरूपतया प्रतिसर्गावस्थायामपि प्रवर्तते। तदितमुक्तं—"त्रिगुणतः" इति।

प्रवृत्त्यन्तरमाह—"समुदयाच्च" इति। समेत्य उदयः—'समुदयः"-समवायः। समुदयश्च गुणानां न गुणप्रधानभावमन्तरेण सम्भवति, न च गुणप्रधानभावो वैषम्यं विना, न च वैषम्यमुपमर्द्योपमर्दकभावादृते, इति महदादिभावेन प्रवृत्तिर्द्वितीया।

---

अथास्तु उक्तरीत्या प्रधानसिद्धिः तथापि तस्य प्रवृत्तिमत्त्वाभावे पुरुषवत् कारणत्वानुपपत्त्या प्रवृत्तिमत्त्वं वाच्यम्, सा च प्रवृत्तिः सरूपपरिणामानुगुणा विरूपपरिणामानुगुणा वा, आद्ये सर्वदा प्रलयापत्तिः, द्वितीये सर्वदा सर्गावस्थायाः सत्त्वापत्त्या प्रलयानुपपत्तिः, इत्याशंकायाः तस्याः प्रवृत्तिद्वैविध्येन निराकरणपरं कारिकान्तरमवतारयति। अस्य प्रवृत्तिप्रकारमाह। प्रवर्तते त्रिगुणत इति। तत्राद्यां प्रवृत्तिं व्याचष्टे। प्रतिसर्गावस्थायामिति। प्रतिसर्गावस्थायाम् प्रलयावस्थायाम्, सदृशपरिणामानि समानगुणोत्पादकानि नतु सृष्ट्यवस्थायामिव महत्तत्त्वादिरूपत्रिगुणात्मककार्योत्पादकानीत्यर्थः। तथा च त्रिगुणत इत्यस्य गुणान्तरानपेक्षैः प्रत्येकगुणैः कार्यमुत्पाद्यते तच्च तथाविधमेव स्यादित्यर्थः। नच प्रलयकाले गुणान्तरासहकारेण सदृशपरिणामोत्पादकत्वाङ्गीकारे प्रमाणाभाव इत्यत आह। परिणामस्वभावा हि गुणा इति। 'प्रतिक्षणपरिणामिनो हि सर्वे एव भावाः ऋते चितिशक्तेः' इत्यत्र सर्वेषामेव भावानां प्रतिक्षणपरिणामित्वस्य साधितत्वेन तदानीमपि गुणेषु परिणामाऽवश्यम्भावात्। उपसंहरति। तस्मादिति। यस्मात् गुणाः परिणामस्वभावाः क्षणमपि परिणामं विहाय नावतिष्ठन्ते तस्मादित्यर्थः।

सृष्ट्यवस्थासम्पादिकां द्वितीयप्रवृत्तिं। व्याचष्टे। प्रवृत्त्यन्तरमाहेति। समुदयाच्चेत्यत्र समुदयपदार्थमाह। समेत्य उदय इति। समेत्य मिलित्वा अन्योन्यसहकारेणेति यावत्, उदयः प्रकाशमानत्वम् आविर्भाव इति यावत्, समुदायइत्यस्य पर्यायमाह। समवाय इति। तथा च नैयायिकादिभिरङ्गीक्रियमाणः समवायरूपसम्बन्धविशेषः नात्र समवायपदार्थः अपि तु उक्तसमुदयरूप एवेति भावः। उक्तरूपो गुणानां समुदायः गुणप्रधानभावाङ्गीकारं विना न सम्भवतीत्याह। समुदयश्च गुणानामिति। गुणप्रधानभावः अङ्गाङ्गिभावः, अङ्गाङ्गिभावोऽपि वैषम्यं विना न सम्भवतीत्याह। नच गुणप्रधानभावो वैषम्यं विनेति। वैषम्यं न्यूनाधिक्यं, वैषम्यमपि उपमर्द्योपमर्दकभावं विना न सम्भवतीत्याह। नच वैषम्यमिति। उपमर्द्योपमर्दकभावः अभिभाव्याभिभावकभावः तस्मात् ऋते विना, नच सम्भवति। तथाच अनागतावस्थपुरुषार्थवशात् गुणेषु क्षोभो जायते, ततश्च तेषु कश्चन उपसर्जनभूतः कश्चन प्रधानभूत इति सर्वे मिलित्वा

स्यादेतत्-कथमेकरूपाणां गुणानामनेकरूपा प्रवृत्तिरित्यत आह—"परिणामतः सलिलवत्" इति । यथा हि वारिदविमुक्तमुदकमेकरसमपि तत्तद्भूविकारानासाद्य नारिकेलतालतालीबिल्वचिरबिल्वतिन्दुकामलकप्राचीनामलककपित्थफलरसतया परिणमन्मधुराम्ललवणतिक्तकषायकटुतया विकल्पते, एवमेकैकगुणसमुद्भवात् प्रधानं गुणमाश्रित्याऽप्रधानगुणाः परिणामभेदान् प्रवर्तयन्ति । तदिदमुक्तम्—"प्रतिप्रतिगुणाश्रयविशेषात्" । एकैकगुणाश्रयेण यो विशेषस्तस्मादित्यर्थः ।

ये तु तौष्टिका अव्यक्तं वा महान्तं वाऽहङ्कारं वा इन्द्रियाणि वा भूतानि वाऽऽत्मानमभिमन्यमानास्तान्येवोपासते तान् प्रत्याह—

**सङ्घातपरार्थत्वात् त्रिगुणादिविपर्ययादधिष्ठानात् ।**
**पुरुषोऽस्ति भोक्तृभावात् कैवल्यार्थं प्रवृत्तेश्च ॥१७॥**

---

महदादिरूपेण प्रवर्तन्ते सेयं महत्तत्त्वाद्यनुकूला प्रवृत्तिः द्वितीया, अत एव च महत्तत्त्वादौ सत्त्वस्य प्राधान्यमितरयोश्चाङ्गत्वमिति ।

ननु गुणानां उक्तरूपप्रवृत्तिद्वयं कारणान्तरानपेक्षाणां कथं सम्भवतीति शङ्कते । स्यादेतदिति । एकरूपाणां सरूपपरिणामकालीनरूपातिरिक्तरूपरहितानाम् अनेकरूपा सरूपपरिणामविरूपपरिणामोभयरूपा ।

दृष्टान्तेन एकरूपस्यापि अनेकरूपपरिणाममाह । यथेति । तत्तद्भूविकारान् नारिकेलादिरूपान् पृथिवीपरिणामान्, तालो तालवृक्षविशेषः, चिरबिल्वः नक्तमालः, प्राचीनामलकः किञ्चिकोजोयरफलम्, विकल्पते विविधाकारेण परिणमते ।

दृष्टान्तानुसारेण प्रकृते योजयति । एवमिति । एकैकगुणसमुद्भवात् एकैकगुणानां यः समुद्भवः क्षोभरूपः परिणामविशेषः तस्मात्, तथाच एकस्य प्रधानत्वमपरस्य चाङ्गत्वमिति रीत्या प्रधानाङ्गभावेनान्योन्यसहकारितामासाद्य विरूपपरिणामं अन्यथा तु सरूपपरिणाममिति इतरगुणसहकारासहकाराभ्यां प्रवृत्तिद्वैविध्यं नानुपपन्नमिति भावः ।

प्रतिप्रतिगुणाश्रयविशेषादिति व्याचष्टे । एकैकेति । एकैकगुणाश्रयेण एकैकगुणप्राधान्येन यो विशेषः वैलक्षण्यमनेकरूपत्वं तस्मादित्यर्थः ।

ननु उक्तरूपे गुणानां क्षोभाख्यपरिणामे को हेतुः, पुरुषार्थ इति चेत्, पुरुषे प्रमाणाभावेन तदसम्भवात्, इत्याशङ्कायां पुरुषे प्रमाणपरं कारिकान्तरमवतारयति । ये तु तौष्टिका इति । तुष्टिर्नवधाऽष्टधा सिद्धिः इति कारिकायां प्रतिपादितप्रकृत्यादिषु लयेन कृतकृत्यता रूपतुष्टिरेव प्रयोजनं येषां तथाभूताः । अव्यक्तं प्रधानापरपर्यायम्, ते च "दश मन्वन्तराणीह तिष्ठन्तीन्द्रियचिन्तकाः। इत्यादिना वक्ष्यमाणाः । तान् तौष्टिकान् लक्षीकृत्य तेभ्यो अव्यक्तादिभ्यः अतिरिक्तं पुरुषं साधयितुं कारिकाकारः सङ्घातपरार्थत्वादित्याहेत्यर्थः ।

तौष्टिकैरपि अव्यक्तादेरेव पुरुषत्वाङ्गीकारेण पुरुषोऽस्ति इत्येतावन्मात्र उच्य-

"सङ्घातपरार्थत्वात्" इति । पुरुषोऽस्ति, अव्यक्तादेर्व्यतिरिक्तः । कुतः ? "सङ्घातपरार्थत्वात्" । अव्यक्तमहदहङ्कारादयः परार्थाः सङ्घातत्वात्, शयनासनाभ्यङ्गादिवत्, सुखदुःखमोहात्मकतयाऽव्यक्तादयः सर्वे सङ्घाताः ।

स्यादेतत्—शयनासनादयः सङ्घाताः संहतशरीराद्यर्था दृष्टाः, न त्वात्मानमव्यक्ताद्यतिरिक्तं प्रति परार्थाः तस्मात् सङ्घातान्तरमेव परं गमयेयुः, न त्वसंहतमात्मानमित्यत आह—"त्रिगुणादिविपर्ययात्" इति ।

अयमभिप्रायः, सङ्घातान्तरार्थत्वे हि तस्यापि सङ्घातत्वात् तेनापि ऽपि सङ्घातान्तरार्थेन भवितव्यम् । एवं तेन तेनेत्यनवस्था स्यात्, न च व्यवस्थायां सत्यामनवस्था युक्ता, कल्पनागौरवप्रसङ्गात् । न च

---

माने सिद्धसाधनं स्यादत आह । अव्यक्तादेरतिरिक्त इति । ब्राह्मणोऽहं सुखी अहमित्यादि प्रतीत्या महत्तत्त्वादेरेव अहंशब्दार्थत्वं पुरुषत्वं चास्तु अलं तदतिरिक्तेन पुरुषेणेत्याशयेन पृच्छति । कुत इति । उत्तरयति । सङ्घातेति । नच तथा सति पुरुषः अस्ति सङ्घातपरार्थत्वादित्यनुमानं फलितम् तच्च न सम्भवति सङ्घातपरार्थत्वरूपहेतोः पक्षेऽवृत्तित्वादित्याशयेन विवक्षितमनुमानप्रयोगमाह । अव्यक्तमहदहङ्कारादय इति । परार्थाः परस्य अर्था येभ्य इति व्युत्पत्त्या स्वातिरिक्तप्रयोजनका इत्यर्थः । अत्र हेतुमाह । सङ्घातत्वादिति । संहत्य मिश्रीभवन्ति अनेके विशेषा अस्मिन्निति संघाता इति व्युत्पत्त्या अनेकात्मकत्वादित्यर्थः । दृष्टान्तमाह शयनेति । शयनं शय्या, नच महत्तत्त्वादीनां अनेकात्मकत्वेऽपि प्रधानस्यैकस्य कथमनेकात्मकत्वमित्यत आह । सुखदुःखमोहात्मकतयेति । तथा च अव्यक्तादयः संघाताः सुखदुःखमोहात्मकत्वात् इत्यनुमानेन तत्रापि तत्सिद्धिरिति भावः । सुखदुःखमोहात्मकत्वं च प्रधानस्य पूर्वमेवावेदितम् । प्रधानस्य गुणत्रयात्मकतया अनेकात्मकत्वमप्रत्यूहमेवेति तात्पर्यम् ।

उक्तानुमाने अर्थान्तरतामाशङ्कते । स्यादेतदिति । तथाचोक्तानुमानेन संघातान्तरस्यैव सिद्धिः स्यात् नतु असंहतस्यात्मन इति । उक्तार्थान्तरनिराकरणार्थं हेत्वन्तरमवतारयति । त्रिगुणादिविपर्ययादिति । तथाच अव्यक्तमहदहङ्कारार्थक आत्माऽसंहतः त्रिगुणाभाववत्त्वात् यन्नासंहतं न तत्त्रिगुणाभाववत् यथेदमनुभूयमानं घटादिकं इति व्याप्त्या आत्मन असंहतत्वं सिद्धम् । नच आत्मनः अत्रिगुणत्वेऽपि प्रमाणाभावः येन हि अव्यक्तादीनां संहतपरार्थत्वमङ्गीक्रियते तेन तस्य त्रिगुणपरार्थकत्वस्यापि अङ्गीकर्तुं शक्यत्वात् इत्याशङ्कायामात्मन अत्रिगुणत्वादिकं साधयितुं तात्पर्यार्थमाह । अयमभिप्राय इति । संघातान्तरार्थेनेति । संघातत्वेन हेतुना तत्रापि संघातपरार्थत्वसाधनसम्भवादिति भावः । बीजाङ्कुरादिवदन्यथानुपपत्त्या स्वीकार्येयमनवस्थेत्याशङ्कायामाह । नच व्यवस्थायां सत्यामिति । संघातत्वेन हेतुना पारार्थ्यमात्रसाधने परस्यासंघातत्वेन व्यवस्थासम्भवे इत्यर्थः । अनवस्थाया अयुक्तत्वे हेतुमाह । कल्पनागौरवप्रसङ्गादिति । अप्रामाणिकानन्तसंघातकल्पने गौरवादिति भावः । नच प्रामाणिकीयमनवस्था न दोषाय यथाहुः "प्रमाणवन्त्यदृष्टानि कल्प्यानि सुबहून्यपि ।

'प्रमाणबलेन कल्पनागौरवमपि मृष्यते इति युक्तम् ,संहतत्वस्य पारार्थ्यमात्रेणाऽन्वयात् । दृष्टान्तदृष्टसर्वधर्मानुरोधेन त्वनुमानमिच्छतः सर्वानुमानोच्छेदप्रसङ्ग इत्युपपादितं न्यायवार्तिकतात्पर्यटीकायाम-स्माभिः । तस्मादनवस्थाभियाऽस्यासङ्घातत्वमिच्छताऽत्रिगुणत्वं विवेकित्वमविषयत्वमसामान्यत्वं चेतनत्वमप्रसवधर्मित्वञ्चाऽभ्युपेयम् ।

त्रिगुणत्वादयो हि धर्माः संहतत्वेन व्याप्ताः । तत्संहतत्वमस्मिन् परे व्यावर्तमानं त्रैगुण्यादि व्यावर्तयति, ब्राह्मणत्वमिव व्यावर्तमानं कठत्वादिकम् । तस्मादाचार्येण 'त्रिगुणादिविपर्ययात्'इति वदताऽसं-

---

अदृष्टशतभागोपि न कल्प्यो निष्प्रमाणकः । इत्याशयेन शङ्कते । नचेति । प्रमाणबलेनेति । यत्र यत्र संघातत्वं तत्र तत्र स्वेतरसंघातार्थत्वमिति व्याप्तिविशिष्टसंघातत्वरूपानुमानबलेनेत्यर्थः । शयनासनादौ संहतत्वस्य संहतपरार्थत्वेन सहचरितत्वदर्शनेपि तस्य पारार्थ्यमात्रेणैव व्याप्त्यभ्युपगमादित्याशयेन निराकरोति । संहतत्वस्येति । नच दृष्टान्ते संहतत्वस्य संहतपरार्थत्वेन सह सामानाधिकरण्यदर्शनाच्च कथं तस्यानुमितिरित्याशङ्कायामाह । दृष्टान्तदृष्टेति । दृष्टान्ते निश्चितसाध्यवति दृष्टाः ये सर्वे धर्माः तदनुरोधेन तदन्तर्भावेण अनुमानमिच्छतः दृष्टान्तदृष्टसर्वधर्मविषयकानुमितिमिच्छत इत्यर्थः । सर्वानुमानस्य अनुमितिमात्रस्य उच्छेदप्रसङ्गः । महानसादौ दृष्टान्ते दृष्टमहानसीयत्वादिरूपस्य धर्मस्य पर्वतादिवृत्तित्वाभावनिश्चयेन तदन्तर्भावेण पर्वतादौ वह्न्यनुमानासम्भवादिति भावः । एतच्च स्वकृतन्यायवार्तिकतात्पर्यटीकायां स्पष्टं प्रतिपादितमित्याह । उपपादितमिति । "परार्थाश्चक्षुरादयः संघातत्वाच्छयनासनादिवत् अथ मन्यसे सत्यं संघाताः परार्था भवन्ति ते तु संघातान्तरार्था यथा शयनादय" इत्यादिवार्तिके "तस्मात् यथाऽनित्यः शब्दः उत्पत्तिमत्त्वात् घटवदिति प्रयुक्ते कश्चित् साध्यदृष्टान्तयोर्धर्मवैचित्र्यात् प्रत्यवतिष्ठेत,यदि घटस्य साधर्म्यादुत्पत्तिमत्त्वादनित्यः शब्दः हन्त तस्मादेव रूपादिमता तेन भाव्यम् , नचेदयं घटसाधर्म्येण रूपादिमान् एवमनित्योपि माभूत् । एवं च प्रत्यवतिष्ठमान उत्कर्षसमजातिवादी पराजीयते एव, एवं वाप्युत्कर्षसमजातिवादितया पराजेतव्यः साधर्म्यमात्रेणाप्रयोजकेन प्रत्यवस्थानात्, तस्य च सर्वानुमानेषु सुलभतया सर्वानुमानोच्छेदप्रसङ्गादित्यादिना ग्रन्थेनेति शेषः ।

उपसंहरति । तस्मादिति । अनवस्थाभयेनास्यासंहतत्वस्वीकारेपि अत्रिगुणत्वादिकं कुतोङ्गीकर्तव्यमित्यत आह । त्रिगुणत्वादयो हीति । तथाच यत्र यत्र त्रिगुणत्वं तत्र तत्र संहतत्वमिति व्याप्त्या त्रिगुणत्वादीनां संहतत्वव्याप्यत्वेन व्यापकाभावस्य च व्याप्याभावव्याप्यत्वेन असंहतत्वाभावरूपेण संहतत्वेन व्यापकाभावेन त्रिगुणत्वादिरूपस्य व्याप्यस्याभावः तत्र सुसाध्य इति भावः । व्यापकाभावस्य व्याप्याभावव्याप्यत्वं दृष्टान्तेनोपपादयति । ब्राह्मण्यमिव निवर्तमानमिति । निवर्तमानं ब्राह्मण्ये यथा कठत्वादिरूपं स्वव्याप्यं व्यावर्तयति इति पूर्वोक्तमनुषज्यते । एतेन त्रिगुणमविवेकीत्यादिकारिकायां आत्मनोऽत्रिगुणत्वादिकं उच्यमानं उपपादितं भवतीति ज्ञेयम् । तथाच पूर्वोक्तः परः असंहतः त्रिगुणाभाववत्त्वादित्यनुमानमत्र फलितमित्याशयेनाह । तस्मादिति । पर इति । संघातपरार्थत्वादित्यनेनोच्यमानः परः आचार्येण

इतः परो विवक्षितः, स चाऽऽत्मेति सिद्धम्।

इतश्च पुरुषोऽस्ति—"अधिष्ठानात्"। त्रिगुणात्मकानामधिष्ठीयमानत्वात्। यद्यत्सुखदुःखमोहात्मकं तत्सर्वं परेणाऽधिष्ठीयमानं दृष्टम्, यथा रथादि यन्त्रादिभिः। सुखदुःखमोहात्मकं चेदं बुद्ध्यादि, तस्मादेतदपि परेणाऽधिष्ठातव्यम्। स च परस्त्रैगुण्यादन्य आत्मेति।

इतश्चाऽस्ति पुरुषः—"भोक्तृभावात्" भोक्तृभावेन भोग्ये सुखदुःखे उपलक्षयति। भोग्ये हि सुखदुःखे अनुकूलप्रतिकूलवेदनीये प्रत्यात्ममनुभूयेते। तेनाऽनयोरनुकूलनीयेन प्रतिकूलनीयेन च केनचिद्प्यन्येन भवितव्यम्। न चाऽनुकूलनीयाः प्रतिकूलनीया वा बुद्ध्यादयः, तेषां सुखदुःखाद्यात्मकत्वेन स्वात्मनि वृत्तिविरोधात्। तस्मात्

---

ईश्वरकृष्णेनेत्यर्थः। स च आत्मेति। अव्यक्तादीनां संहतत्वेन तथाविधपरत्वासम्भवादिति भावः।

अधिष्ठानादिति कारिकाकृतोक्तं हेत्वन्तरं व्याचष्टे। इतश्चेति। परः इति शेषः, प्रकृत्यादेरन्य इति तदर्थः। क्वचित्तथैव पाठः। उक्तस्य हेतोरर्थमाह। त्रिगुणात्मकानामिति। त्रिगुणात्मकानाम् सुखदुःखमोहात्मकानां महत्तत्त्वादीनां, अधिष्ठीयमानत्वात् परेण प्रेर्यमाणत्वात् इत्यर्थः। तथाच महत्तत्त्वादयः स्वातिरिक्तेन प्रेर्यमाणाः सुखदुःखमोहात्मकत्वात् इत्यनुमानमत्र फलितम्। अत्रैव व्याप्तिं ग्राहयति। यद्यदिति। दृष्टान्तमाह। यथा रथादीति। यन्ता सारथिः तेनेत्यर्थः। उपनयमाह। सुखदुःखमोहात्मकञ्चेदमिति। निगमयति। तस्मादिति। एतन्महत्तत्त्वादि, अस्तु उक्तरीत्या परेणाधिष्ठीयमानत्वसिद्धिः, तथापि तस्य सुखदुःखमोहानात्मकत्वे प्रमाणाभाव इत्याशङ्कां निराकर्तुमाह। स च परस्त्रैगुण्यादन्य इति। तथाच त्रिगुणादिविपर्ययादिति हेतुव्याख्यानावसरे अयमभिप्राय इत्यादिना कथिता अनवस्थाभीतिरेव तस्यात्रैगुण्यादिसाधनायालमिति भावः।

हेत्वन्तरं व्याचष्टे। इतश्चेत्यादिना। भोक्तुः भावः भोक्तृभावः तस्मादिति व्युत्पत्त्या भोक्तृत्वादित्यर्थः। इदानीं पुरुषस्यासिद्ध्या भोक्तृत्वस्य पुरुषधर्मत्वेन असिद्धप्रायत्वात् कथमस्य हेतुत्वमित्यत आह। भोक्तृभावेनेति। भोक्तृभावपदेनेत्यर्थः। उपलक्षयति कारिकाकार इति शेषः। सुखदुःखयोः स्वरूपमाह। अनुकूलप्रतिकूलवेदनीये इति। अनुकूलवेदनीयत्वं इतरेच्छानधीनस्ववृत्तित्वप्रकारकेच्छाविषयत्वम्। प्रतिकूलवेदनीयत्वम् इतरद्वेषानधीनस्ववृत्तित्वप्रकारकद्वेषविषयत्वम्। उक्तसुखदुःखयोः प्रमाणमाह। प्रत्यात्ममिति। तथा च अहं सुखी अहं दुःखी इत्यादिप्रत्यक्षविषयत्वमेव तयोरिति भावः।

तथाच बुद्ध्यादिकं स्वातिरिक्तभोक्तृकं सुखाद्यात्मकत्वात् भोग्यत्वादित्यनुमानमत्र फलितमित्याशयेनाह। तदनयोरिति। अनुकूलनीयः स्वविषयकेच्छाश्रयः प्रतिकूलनीयः तद्विषयकद्वेषाश्रयः, नच बुद्ध्यादेरेव सुखाद्यात्मकस्य भोक्तृत्वमस्तु अलं तदतिरिक्तेन पुरुषेणेत्याशङ्कामाह। न चानुकूलवेदनीया इति। बुद्ध्यादीनां तत्त्वाभावे हेतुमाह।

योऽसुखाद्यात्मा सोऽनुकूलनीयः प्रतिकूलनीयो वा, स चाऽऽत्मेति ।

अन्ये त्वाहुः–भोग्या दृश्या बुद्ध्यादयः । न च द्रष्टारमन्तरेण दृश्यता युक्ता तेषाम् । तस्मादस्ति द्रष्टा दृश्यबुद्ध्याद्यतिरिक्तः, स चाऽऽत्मेति । भोक्तृभावात्—द्रष्टृभावात्, दृश्येन द्रष्टुरनुमानादित्यर्थः । दृश्यत्वं च बुद्ध्यादीनां सुखाद्यात्मकतया पृथिव्यादिवदनुमितम् ।

इतश्चाऽस्ति पुरुष इत्याह–"कैवल्यार्थं प्रवृत्तेश्च" इति । शास्त्राणां महर्षीणां च दिव्यलोचनानाम् । कैवल्यमात्यन्तिकदुःखत्रयप्र-

---

स्वात्मनि इति । स्वात्मनि स्वस्वरूपे, वृत्तिविरोधात् अनुकूलीयत्वादीनां त्वस्य-सम्भवादित्यर्थः । कर्मकर्तृभावविरोधेन एकस्यैव भोगकर्मत्वरूपभोग्यत्वतत्कर्तृत्वरूप-भोक्तृत्वयोः असम्भवादिति भावः । पूर्वोक्तामनवस्थां स्मारयन्नाह । योऽसुखात्मेति ।

व्याख्यानान्तरमाह । अन्ये त्वाहुरिति । भोक्तृभावपदेन लक्षणीया भोग्या बुद्ध्यादयः दृश्यत्वेन रूपेण लक्षणीया इत्याह । दृश्या इति । दृश्यत्वं प्रत्यक्षविषयत्वरूप-मत्र विवक्षितं, न तु चाक्षुषज्ञानविषयत्वं बुद्ध्यादीनां तथात्वासम्भवात् । दृश्यबुद्ध्या-द्यतिरिक्त इति । तथा च स्वात्मनि वृत्तिविरोधेन स्वस्मिन्नेव द्रष्टृत्वदृश्यत्वयोरसम्भ-वः पूर्वोक्तो ऽत्राप्यनुसन्धेयः । भोक्तृभावादित्यस्यैतन्मते अर्थमाह । द्रष्टृभावादिति । अनुमानादिति । तथा च बुद्ध्यादयः स्वातिरिक्तद्रष्टृकाः दृश्यत्वात् घटादिवदित्यनु-मानेन अतिरिक्तस्यात्मनः सिद्धिर्बोध्या । न च बुद्ध्यादीनां दृश्यत्वे प्रमाणाभाव इत्या-शङ्कायां तेषां दृश्यत्वसाधकं अनुमानमाह । दृश्यत्वञ्च बुद्ध्यादीनामिति । तथा च बुद्ध्यादयः दृश्याः सुखाद्यात्मकत्वात् पृथिवीवदित्यनुमानेन तत्र दृश्यत्वरूपहेतुसिद्धि-रिति भावः । यद्यपि एतन्मते भोग कर्तृत्वरूपं वास्तवं भोक्तृत्वं द्रष्टृत्वं च बुद्धेरेव अत एव वक्ष्यति "तस्मात्तत्संयोगादचेतनं चेतनावदिव लिङ्गम् । गुणकर्तृत्वे च तथा कर्तेव भवत्युदासीन इति । तथा च कथं भोक्तृत्वादिना आत्मसिद्धिरिति वक्तुं श-क्यम् । तथापि ज्ञेयस्वभावानां बुद्ध्यादीनां ज्ञातृत्वासम्भवात् आत्मनश्चास्माभिः चिद्रूपत्वाङ्गीकारेण ज्ञातृत्वस्य तत्र वास्तविकस्य सम्भवो अस्त्येव, पूर्वव्याख्यायां भोगपदं सुखदुःखान्यतरसाक्षात्कारपरमेवेति तत्रापि द्रष्टृत्व एव पर्यवसानं बोध्यम् । ज्ञानविशेषवाचकस्य भोगपदस्य ज्ञानसामान्यपरत्वे लक्षणानुसरणमेवान्येत्यनेन सूचितो ऽस्वरसोऽत्र बोध्यः ।

हेत्वन्तरमाह । कैवल्यार्थमिति । केषां कैवल्यार्थं प्रवृत्तिरित्याशङ्कायामाह । शास्त्राणामिति । अत्र प्रवृत्तेः चेतनगुणतया शास्त्रस्य प्रवृत्तिमत्त्वं न सम्भवति इत्यतः तत्र कैवल्यप्रवृत्तिप्रयोजकज्ञानजनकतया औपचारिकप्रयोगस्याङ्गीकारापत्त्या वास्त-विकप्रवृत्तिमन्तो दर्शयति । महर्षीणामिति । ननु तेषां भ्रमादेव प्रवृत्तिरिति न तया आत्मनः सिद्धिरित्याशङ्कामपनेतुमाह । दिव्यलोचनानामिति । भूतभविष्यत्सू-क्ष्मादिव्यवहितविषयकप्रमाज्ञानवतामिति यावत् । तथा च तेषु भ्रमासम्भवात्तेषां प्रवृत्तिः भ्रमाद्यनधीनेवेति तया आत्मनो निष्प्रत्यूहैव सिद्धिरिति । कैवल्योद्देश्यक-प्रवृत्त्या कथमात्मसिद्धिरित्याशङ्कानिराकरणार्थं कैवल्यपदार्थमाह । कैवल्यमिति ।

शमलक्षणं न बुद्ध्यादीनां सम्भवति। ते हि दुःखाद्यात्मकाः कथं स्वभावाद्वियोजयितुं शक्यन्ते। तदतिरिक्तस्य त्वतदात्मनस्ततो वियोगः शक्यसम्पादः। तस्मात् कैवल्यार्थं प्रवृत्तेरागमानां महाधियां चाऽस्ति बुद्ध्यादिव्यतिरिक्त आत्मेति सिद्धम् ॥ १७ ॥

तदेवं पुरुषास्तित्वं प्रतिपाद्य, स किं सर्वशरीरेष्वेकः किमनेकः प्रतिक्षेत्रमिति संशये, तस्य प्रतिक्षेत्रमनेकत्वमुपपादयति—

जननमरणकरणानां प्रतिनियमादयुगपत्प्रवृत्तेश्च।
पुरुषबहुत्वं सिद्धं त्रैगुण्यविपर्ययाच्चैव ॥ १८ ॥

“जनन” इत्यादिना। “पुरुषबहुत्वं सिद्धम्”। कस्मात्? “जननमरणकरणानां प्रतिनियमात्” निकायविशिष्टाभिरपूर्वाभिर्देहेन्द्रियमनोऽहङ्कारबुद्धिवेदनाभिः पुरुषस्याऽभिसम्बन्धो जन्म, न तु पुरुषस्य परिणामः, तस्याऽपरिणामित्वात्। तेषामेव च देहादीनामुपात्तानां

---

आत्यन्तिकः स्वसमानाधिकरणदुःखासमानकालीनः यः दुःखत्रयस्य आध्यात्मिकाधिभौतिकाधिदैविकभेदेन त्रिविधस्य दुःखस्य प्रशमः ध्वंसः स एव कैवल्यपदार्थ इत्यर्थः। एतादृशं कैवल्यं बुद्ध्यादीनां न सम्भवतीत्यत्र हेतुमाह। ते हि दुःखाद्यात्मका इति। कथमिति। तथा च दुःखादिनाशे तदाश्रयस्य बुद्ध्यादेर्नाश एव स्यात् इति कैवल्यं बुद्ध्यादीनां न सम्भवति इति भावः। आत्मनः कैवल्याश्रयत्वं सम्भवतीत्याह। तदतिरिक्तस्येति। दुःखाद्यतिरिक्तस्येत्यर्थः, आत्मनो दुःखाद्यतिरिक्तत्वेपि स्वाभाविकदुःखादिधर्मत्वेपि कैवल्यासम्भवादाह। अतदात्मन इति। स्वाभाविकदुःखादिधर्मरहितस्येत्यर्थः। वियोगः दुःखादीनाम्, शक्यः सम्पादो यस्य तथाभूतः। उपसंहरति। तस्मादिति। तथा च आगममहर्षीणाम् कैवल्यविषयिणी प्रवृत्तिः स्वोद्देश्यसम्पादिका भ्रमानधीनप्रवृत्तित्वात् भोजनादिप्रवृत्तिवदित्यनुमानेन कैवल्यसिद्धौ तादृशकैवल्याश्रयतया पुरुषसिद्धिरिति।

कारिकान्तरमवतारयति। तदेवमिति। एवं उक्तप्रकारेण, प्रतिक्षेत्रम् प्रतिशरीरम्। कारिकांशं व्याचष्टे। पुरुषबहुत्वं सिद्धम् इति। नित्यस्यात्मनः उत्पत्तिरूपजन्मनः असम्भवाज्जन्मपदार्थमन्यथा व्याचष्टे। निकायविशिष्टाभिरिति। निकायः देवमनुष्यतिर्यगादीनामौत्तराधर्येणावस्थितानां संघातः, तद्विशिष्टाभिरित्यर्थः। इति न्यायवार्तिकतात्पर्यटीका। इन्द्रियपदं बहिरिन्द्रियपरं तेन मनसः पृथगुपादानेपि न क्षतिः। बुद्धिः महत्तत्त्वम्, वेदना तत्परिणामो ज्ञानाख्यः ताभिः पुरुषस्य अभिसम्बन्धः अभितः सम्बन्धः अतात्त्विकः भोक्तृभोग्यभावरूपः सम्बन्ध इत्यर्थः। तेन पुरुषस्यासङ्गतया तात्त्विकसम्बन्धाभावेपि अन्यादृशस्य सम्बन्धस्य पुरुषान्तरसाधारण्येपि वा न क्षतिः। जन्मोत्तरकालीनस्य तथाविधसम्बन्धस्य जन्मत्वाभावादाह। अपूर्वाभिरिति। तथा तादृशस्य सम्बन्धस्य अपूर्वदेहेन्द्रियादिनिरूपितत्वाभावान्न तत्कालीनस्य तथाविधसम्बन्धस्य जन्मत्वव्यवहार इति भावः। घटादाविवोत्पत्तिरूपो जन्मपदार्थः कुतो नात्रोक्त इत्याशङ्कायामाह। न तु पुरुषस्येति। परिणामरूपं जन्म, पुरुषस्य न स-

परित्यागो मरणम्, न त्वात्मनो विनाशः, तस्य कूटस्थनित्यत्वात् । करणानि बुद्ध्यादीनि त्रयोदश । तेषां जन्ममरणकरणानां प्रतिनियमः व्यवस्था । सा खल्वियं सर्वशरीरेष्वेकस्मिन् पुरुषे नोपपद्यते । तदा खल्वेकस्मिन् पुरुषे जायमाने सर्वे जायेरन्, म्रियमाणे च म्रियेरन्, अन्धादौ चैकस्मिन् सर्व एव अन्धादयः, विचित्ते चैकस्मिन् सर्व एव विचित्ताः स्युरित्यव्यवस्था । न च एकस्याऽपि पुरुषस्य देहोपधानभेदाद्व्यव-

स्भवति तस्य परिणामाभावादित्यर्थः । एवं जन्मपदार्थमुक्त्वा मरणपदार्थमाह । तेषामेव चेति । मूर्च्छादौ पूर्वोक्तभोक्तृभोग्यभावरूपस्य सम्बन्धस्य त्यागादाह । परित्याग इति । तादृशसम्बन्धप्रागभावासमानकालीनः सम्बन्धध्वंस इत्यर्थः । घटादेरिव विनाशो नात्र मरणमित्याह । न त्वात्मनो विनाश इति । आत्मनोऽविनाशित्वे हेतुमाह । तस्य कूटस्थनित्यत्वादिति । न च "पूर्वोत्पन्नमसक्तं महदादिसूक्ष्मपर्यन्तम् । संसरति निरुपभोगं भावैरधिवासितं लिङ्गम् । इत्यादिकारिकाव्याख्यानावसरे सूक्ष्मशरीरस्य प्रधानेनादिसर्गे प्रत्येकमुत्पादितमिति उक्ततया कथमेषामपूर्वत्वमभिहितं सङ्गच्छते इति वाच्यम् । निकायविशिष्टाभिरित्यनेन मिलितैः स्थूलदेहादिभिः सम्बन्धस्य जन्मपदार्थत्वोक्त्या मिलितानां तेषां सम्बन्धस्य पूर्वमभावेनापूर्वत्वं सङ्गच्छत एव । नच बाल्ययौवनभेदेन शरीरस्य भिन्नतया तदापि जन्ममरणव्यवहारापत्तिरिति वाच्यम् । अस्मन्मते तत्र देहभेदानङ्गीकारात् । अत एवाग्रे वक्ष्यति "नहि पाणौ वृक्णे जाते-स्तनादौ वा महत्यवयवे युवतिर्जाता मृता चेति । पृथिव्यादीनामपि सूक्ष्मरूपेण सर्वदा सत्त्वाङ्गीकारेण नित्यत्वादाह । कूटस्थनित्यत्वादिति । एकरूपेण सर्वकालव्यापित्वरूपनित्यत्वादिति भावः । करणपदार्थमाह । करणानि बुद्ध्यादीनि इति । बुद्ध्यहङ्कारैकादशेन्द्रियाणीति त्रयोदश करणानि । प्रतिनियमपदार्थमाह । व्यवस्थेति । प्रतिनियत देशकालादिसम्बन्ध इत्यर्थः । एकस्मिन् पुरुषे इति । अङ्गीक्रियमाणे इति शेषः । अनुपपत्तिमेव विशदयति । तदा खल्विति । तदा आत्मैक्ये, जायेरन्निति जन्माव्यवस्थां म्रियेरन्निति मरणाव्यवस्थामुपपाद्य करणानामव्यवस्थामाह । अन्धादौ चैकस्मिन्निति । अन्धत्वं चाक्षुषज्ञानोत्पादकेन्द्रियरहितत्वं, आदिना बाधिर्यादिपरिग्रहः । प्राक्करणनामव्यवस्थां प्रतिपाद्यान्तराणामपि तामाह । विचित्ते इति । विचित्ते विगतं उपरतम् चित्तम् यस्य तस्मिन् तथा च योगयुक्ते सुषुप्ते चेत्यर्थः । अथवा विरुद्धम् विरुद्धार्थग्राहकं चित्तं यस्य तस्मिन् उन्मादादियुक्ते इत्यर्थः ।

ननु यथा आकाशस्य एकत्वेपि घटपटाद्युपाधिभेदप्रयुक्तस्तत्र भेदव्यवहारः घटपटाद्युपाधिनाशोत्पत्तिप्रयोजकश्च घटाकाशो नष्टः घटाकाश उत्पन्न इत्यादिव्यवहारः एवमेव प्रतिशरीरमात्मन एकत्वेपि शरीरोपाधिभेदप्रयुक्त एव देवदत्त यज्ञदत्तादिभेदव्यवहारः देवदत्तो मृतः न यज्ञदत्त इत्यादिरूपा व्यवस्थापि सम्भवत्येवेति 'तत्त्वमसि एको देवः सर्वभूतेषु गूढः इत्याद्यात्मन अभेदप्रतिपादकश्रुत्यनुसारेण आत्मन एकत्वमेव प्रतिशरीरमास्त्वित्यभिप्रायेण अद्वैतवादी आशङ्कते । नचेति । युक्तेति परेणान्वयः । एकस्यापीति । सर्वशरीरेष्विति शेषः । देहरूपं यदुपधानं उपाधिः तस्य भेदादित्यर्थः । व्यवस्था जन्ममरणादेः ।

स्था इति युक्तम्, पाणिस्तनाद्युपाधिभेदेनाऽपि जन्ममरणादिव्यवस्थाप्रसङ्गात्। न हि पाणौ वृक्णे जाते वा स्तनादौ महत्यवयवे युवतिर्मृता जाता वा भवतीति।

इतश्च प्रतिक्षेत्रं पुरुषभेद इत्याह—"अयुगपत्प्रवृत्तेश्च" इति। प्रवृत्तिः प्रयत्नलक्षणा यद्यप्यन्तःकरणवर्तिनी तथाऽपि पुरुष उपचर्यते। तथा च तस्मिन्नेकत्र शरीरे प्रयतमाने, स एव सर्वशरीरेष्वेक

---

देहाद्युपाधिभेदेनैव व्यवस्थाङ्गीकारे देहादेरिव तदवयवानां करचरणादीनामपि उपाधित्वस्याविशेषेण वक्तव्यत्वात्तथा पाणिस्तनादिरूपोपाधिनाशोत्पत्तिसत्त्वेऽपि जन्ममरणव्यवहारप्रसङ्गादित्याशयेन अद्वैतवादिनं निराकरोति। पाणिस्तनादीति। उक्तप्रसङ्गस्य इष्टत्वं निराकर्तुमाह। नहीति। वृक्णे छिन्ने, महत्यवयवे स्तनादौ जाते वा इति योजना। भवतीति। व्यवहार इति शेषः। तथाच युवतिः मृता जाता वा इति व्यवहारः नहि भवतीत्यन्वयः। तथाचोक्तव्यवहाराभावेन इष्टापत्तिर्न सम्भवतीति भावः। केचित्तु देहरूपोपाधिभेदेन व्यवस्थाङ्गीकारे पाण्यादिरूपपूर्वावयवविश्लेषे स्तनादिरूपावयवान्तरसंयोगे पूर्वशरीरनाशस्य शरीरान्तरोत्पत्तेश्चावश्यं वक्तव्यतया जननमरणादिव्यवहारप्रसङ्गादित्याशयं वर्णयन्ति। तन्मते च पाणिस्तनाद्युपाधिभेदेनेत्यत्र पाणिस्तनादिप्रयुक्तः य उपाधिभेदः शरीररूपस्य उपाधेर्भेदः, तेनेत्यर्थः। तत्र वृक्णपाणिप्रयुक्तत्वं कथंचित्संगमयनीयमिति। नच अस्माभिः शरीरस्योपाधित्वाङ्गीकारेपि तुल्यन्यायेन हस्तादीनां नोपाधित्वमङ्गीक्रियते। यतो हि उपाधिस्तावत् उपस्वसमीपवर्तिनि स्वधर्ममादधाति इति व्युत्पत्त्या वस्तुतो एकस्मिन्नप्यात्मनि शरीरगतभेदादिरूपधर्मारोपकः सच शरीरादिरेव तथा भवितुमर्हति, नतु हस्तादिः तस्य तदारोपकत्वाभावात् 'अत एवोच्यते आरोपे सति निमित्तानुसरणं नतु निमित्तमस्तीत्यारोपः इति। तथाच नोक्तदोष इति वाच्यम्। तथासति बन्धमोक्षव्यवस्थानुपपत्तेः, उपाधेभिन्नत्वेपि एकदेशस्थत्वे उपहितस्य एकतया एकशरीरावच्छिन्नस्य मुक्तत्वेपि तस्यैव पुनरपि शरीरान्तरावच्छिन्नत्वापत्त्या बद्धत्वापत्तेः। नच तथापि तत्त्वमसि एको देवः सर्वभूतेषु गूढः' इत्याद्यद्वैतप्रतिपादकश्रुतेः का गतिरिति वाच्यम्। उक्तयुक्त्युपबृंहित- सर्वं आत्मनि समर्पिताः इत्यादिश्रुतिविरुद्धानां पूर्वोक्तश्रुतीनां स्वार्थे तात्पर्याभावात्। अधिकमन्यत्रानुसन्धेयम्।

पुरुषभेदसाधकं हेत्वन्तरं व्याचष्टे। इतश्चेत्यादिना। प्रतिक्षेत्रमिति। तथाच पुरुषः प्रतिशरीरं भिन्नः अयुगपत्प्रवृत्तिमत्त्वात् इत्यनुमानेन पुरुषभेदसिद्धिरिति भावः। नच त्वन्मते कृत्यादीनां बुद्धिधर्मत्वस्याग्रे वक्ष्यमाणत्वेन अयुगपत्प्रवृत्तिमत्त्वरूपहेतोः पुरुषे अभावेन स्वरूपासिद्धिरित्याशङ्कते। प्रवृत्तिश्चेति। प्रयत्नलक्षणा कृतिरूपा। निराकरोति। तथापीति। साक्षात्सम्बन्धेन तस्याः अन्तःकरणे सत्त्वेपि, उपचर्यते अनुत्पन्नतत्त्वसाक्षात्कारस्य बुद्धिपुरुषयोर्भेदाग्रहात् तयोः स्वस्वामिभावसम्बन्धात् प्रवृत्तिः पुरुषे आरोप्यते। भृत्यगतौ जयपराजयौ स्वामिनि इव। तथाच स्वप्रकारकारोपविशेष्यत्वसम्बन्धेन तस्या हेतुत्वेन नोक्तस्वरूपासिद्धिरिति भावः। अयुगपत्प्रवृत्तिमत्त्वेऽपि प्रतिशरीरं पुरुषभेदो मास्तु इत्याशङ्कां परिहरति।तथाचेति। तस्मिन्न

इति सर्वत्र प्रयतेत, ततश्च सर्वाण्येव शरीराणि युगपच्चालयेत्। नानात्वे तु नाऽयं दोष इति।

इतश्च पुरुषभेद इत्याह—"त्रैगुण्यविपर्ययाच्चैव" इति। एवकारो भिन्नक्रमः 'सिद्धम्' इत्यस्याऽनन्तरं द्रष्टव्यः। सिद्धमेव नाऽसिद्धम्। त्रयो गुणास्त्रैगुण्यं, तस्य विपर्ययः-अन्यथात्वम्।

केचित्खलु सत्त्वनिकायाः सत्त्वबहुलाः यथोर्ध्वस्रोतसः, केचिद्रजोबहुलाः यथा मनुष्याः, केचित्तमोबहुलाः यथा तिर्यग्योनयः।

---

आत्मनि, एकत्र शरीरे प्रयतमाने एकशरीरावच्छेदेन प्रयत्नवति, सर्वत्र प्रयतेत सर्वशरीरावच्छेदेन प्रयत्नवान् स्यात्, अत्रैव हेतुमाह। सर्वशरीरेष्वेकत्व इति। इति अस्माद्धेतोः, तथाच सर्वशरीरेष्वात्मन एकत्वे सर्वशरीरावच्छेदेन युगपत्प्रवृत्तिमत्त्वापत्तिरेव बाधिका। नन्वस्तु सर्वशरीरावच्छेदेन युगपत्प्रवृत्तिरित्यत आह। ततश्चेति। सर्वशरीरावच्छेदेन युगपत्प्रवृत्तिमत्त्वाच्चेत्यर्थः। चालयेत् चेष्टयेत्, तथाच सर्वशरीरेषु युगपच्चेष्टापत्त्या तत्र अयुगपत्प्रवृत्तिमत्त्वमवश्यमभ्युपगन्तव्यमिति भावः। एतेन अयुगपत्प्रवृत्तेः अप्रत्यक्षत्वेन तत्र प्रमाणाभावात् कथमस्या हेतुत्वमित्यपि निरस्तम्। अयुगपच्चेष्टया अयुगपत्प्रवृत्तिमत्त्वस्य तत्र सुसाध्यत्वात्। आत्मना सर्वशरीरेषु नानात्वे युगपच्चालनरूपो दोषः नास्तीत्याह। नानात्वे त्विति। प्रतिशरीरमिति शेषः। अयं युगपत्सर्वशरीराणां चालनापत्तिरूपः। दोषः नेत्यर्थः।

हेत्वन्तरं व्याचष्टे। इतश्चेति। पुरुषभेद इति। प्रतिक्षेत्रमिति पूर्वोक्तमनुषज्यते। त्रैगुण्यविपर्ययाच्चैवेत्यत्र एवकारार्थस्य यथाश्रुतत्रैगुण्यविपर्ययादित्यस्यार्थेन सहान्वयो न सम्भवति त्रैगुण्यविपर्ययादिव अयुगपत्प्रवृत्तेरपि पुरुषबहुत्वस्य सिद्धेः अतः एवकारस्य भिन्नक्रमत्वमाह। एवकारो भिन्नक्रम इति। तस्य भिन्नक्रमत्वेपि कस्यानन्तरं स अनुसन्धातव्य इत्यत आह। सिद्धमित्यस्येति। द्रष्टव्यः अनुसन्धातव्यः। तथाच निष्कृष्टार्थमाह। सिद्धमेव नासिद्धमिति। यद्यपि पुरुषबहुत्वमित्यस्यानन्तरमपि एवकारः अनुसन्धातुं शक्यः ततश्च पुरुषबहुत्वमेव सिद्धं न एकत्वमित्यर्थो लभ्यते। तथापि एवकारस्य भिन्नक्रमत्वावश्यकत्वेपि सन्निकृष्टसिद्धपदानन्तरमनुसन्धानेनापि अन्वयबोधसम्भवे दूरस्थपुरुषबहुत्वपदानन्तरमनुसन्धानमनुचितमित्याशयेन तथा नोक्तमिति।

त्रैगुण्यविपर्ययादिति व्याचष्टे। त्रयो गुणा इति। अभावरूपस्य विपर्ययस्य पुरुषभेदसाधकत्वासम्भवात् विपर्ययपदं अन्यथाभावपरतया व्याचष्टे। विपर्ययोऽन्यथात्वमिति। वैचित्र्यमिति यावत्। तदेवान्यथात्वं विशदयति। केचित्खल्वित्यादिना। सत्त्वं प्राणः तस्य निकायाः आश्रयाः प्राणिन इति यावत्। सत्त्वबहुलाः सत्त्वगुणातिशयवन्तः तानेवाह। ऊर्ध्वस्रोतस इति। देवादय इत्यर्थः। सत्त्वस्य प्रकाशात्मकतया तेषां च सर्वज्ञत्वेन सत्त्वबहुलत्वादित्यर्थः। रजोबहुला इति। सत्त्वनिकाया इत्यनुषज्यते। रजोबहुलानाह। यथा मनुष्या इति। तेषां चलत्वेन रजोबहुलत्वादिति भावः। तमोबहुलानाह। तिर्यग्योनय इति। पशुपक्ष्यादय इत्यर्थः। तेषामज्ञानातिशयत्वेन तमोबहुलत्वादिति। तथाच सर्वशरीरेषु यद्येकः पुरुषः स्यात्

सोऽयमीदृशस्त्रैगुण्यविपर्ययः—अन्यथाभावस्तेषु तेषु सत्त्वनिकायेषु न भवेत्, यद्येकः पुरुषः स्यात्, पुरुषभेदे त्वयमदोष इति ॥ १८ ॥

एवं पुरुषबहुत्वं प्रसाध्य विवेकज्ञानोपयोगितया तस्य धर्मानाह—

**तस्माच्च विपर्यासात्सिद्धं साक्षित्वमस्य पुरुषस्य ।**
**कैवल्यं माध्यस्थ्यं द्रष्टृत्वमकर्तृभावश्च ॥ १९ ॥**

"तस्माच्च" इति । 'च'शब्दः पुरुषस्य बहुत्वेन सह धर्मान्तराणि समुच्चिनोति । 'विपर्यासादस्मात्'इत्युक्ते 'त्रैगुण्यविपर्ययात्'इत्यनन्तरोक्तं सम्बध्येत, अतस्तन्निरासाय 'तस्मात्'इत्युक्तम् । अनन्तरोक्तं हि सन्निधानादिदमो विषयः, विप्रकृष्टं च तदः, इति विप्रकृष्टं त्रिगुणमविवेकीत्यादि सम्बध्यते ।

तस्मात्—त्रिगुणत्वादेः यो विपर्यासः स पुरुषस्याऽत्रिगुणत्वं, विवेकित्वं, अविषयत्वं, असाधारणत्वं, चेतनत्वं, अप्रसवधर्मित्वञ्च । तत्र चेतनत्वेनाऽविषयत्वेन च साक्षित्वद्रष्टृत्वे दर्शिते । चेतनो हि

---

तदा तेषु तेषु सत्त्वनिकायेषु विद्यमानः ईदृशः उक्तप्रकारः अन्यथाभावो न स्यात्। भेदे प्रतिशरीरं पुरुषभेदे, तु अयं अन्यथाभावः, अदोषः न विद्यते दोषो यस्मिन्निति व्युत्पत्त्या दोषरहित इत्यर्थः ।

तस्माच्चेत्यत्र चकारस्यानुक्तसमुच्चयार्थकतया तेन कस्यात्र समुच्चयः इत्याशङ्कायामाह । बहुत्वेन सहेति । धर्मान्तराणि एतत्कारिकोक्तानि साक्षित्वादीनि ।

अस्माच्च विपर्यासादित्यनुक्त्वा तस्मादित्युक्तवतः कारिकाकारस्याशयं प्रकाशयति । विपर्यासादस्मादित्युक्ते इति । अनन्तरोक्तं अव्यवहितोक्तम्, सम्बध्येत अन्वीयेत, तन्निरासाय अनन्तरोक्तस्य त्रैगुण्यविपर्ययादित्यस्य सम्बन्धनिरासाय । तस्मादित्युक्तौ कुतो न तस्यान्वय इत्याशङ्कायामाह। अनन्तरोक्तं हीति । इदमः इदंशब्दस्य, विषयः अर्थः, "इदमस्तु सन्निकृष्टं समीपतरवर्ति चैतदो रूपम्। अदसस्तु विप्रकृष्टं तदिति परोक्षे विजानीया" इत्यादौ इदंशब्दस्य सन्निकृष्टार्थकतायाः उक्तत्वेपि अनन्तरोक्तार्थतायाः अनुक्तत्वात् कथं तस्य तदर्थत्वमित्यत आह । सन्निधानादिति । तथा च सन्निकृष्टत्वस्यापि अनन्तरोक्त एव सत्त्वादिति भावः । अथास्तु उक्तरीत्या इदंशब्दस्य सत्त्वे सन्निकृष्टान्वयः तच्छब्दस्य सत्त्वे कुतः स नास्तीत्यत आह । विप्रकृष्टं चेति । तदः तच्छब्दस्य, विषय इति पूर्वोक्तमनुषज्यते । इति तच्छब्दस्य विप्रकृष्टार्थकतया, त्रिगुणमविवेकी इत्यादिकारिकोक्तं तच्छब्दार्थः । न चास्तु अनन्तरोक्तस्य परामर्शः तथापि का क्षतिरिति वाच्यम् । तथा सति अनन्तरोक्तेन त्रैगुण्यविपर्ययेण साक्षित्वादिधर्मस्य तत्र सिद्ध्यसम्भवात् । तस्मादित्यस्यार्थमाह । त्रिगुणत्वादेः यो विपर्यास इति । अन्यथाभावरूपः स नात्र विवक्षित इत्याशयेन तादृशविपर्यासस्य स्वरूपमाह । अत्रिगुणत्वमिति । आदिना सूचितस्य अविवेकित्वादेः विपर्यासस्यापि स्वरूपमाह । विवेकित्वमिति ।

द्रष्टा भवति, नाऽचेतनः। साक्षी च दर्शितविषयो भवति, यस्मै प्रदर्श्यते विषयः स साक्षी। यथा हि लोकेऽर्थिप्रत्यर्थिनौ विवादविषयं साक्षिणे दर्शयतः, एवं प्रकृतिरपि स्वचरितं विषयं पुरुषाय दर्शयतीति पुरुषः साक्षी। न चाऽचेतनो विषयो वा शक्यो विषयं दर्शयितुम्, इति चैतन्यादविषयत्वाच्च भवति साक्षी। अत एव द्रष्टाऽपि भवति।

अत्रैगुण्याच्चाऽस्य कैवल्यम्। आत्यन्तिको दुःखत्रयाभावः कैवल्यम्। तच्च तस्य स्वाभाविकादेवाऽत्रैगुण्यात्—सुखदुःखमोहरहितत्वात्सिद्धम्।

अत एवाऽत्रैगुण्यान्माध्यस्थ्यम्। सुखी हि सुखेन तृप्यन् दुःखी हि दुःखं द्विषन् मध्यस्थो न भवति। तदुभयरहितस्तु मध्यस्थ इत्युदासीन इति चाऽऽख्यायते। विवेकित्वादप्रसवधर्मित्वाच्चाऽकर्तेति सिद्धम् ॥ १९ ॥

---

तत्र केन विपर्यासेन कस्य सिद्धिरिति विविच्य दर्शयति। तस्मेति। चेतनत्वेन अचेतनत्वविपर्यासरूपेण एवमग्रेऽपि। दर्शिते अनुमिते, चेतनत्वस्य साक्षित्वेन व्याप्तिं दर्शयति। चेतनो हीति। नाचेतन इति। एतेन चेतनत्वस्य द्रष्टृत्वाभाववदवृत्तित्वरूपं द्रष्टृत्वव्याप्यत्वं प्रतिपादितम्। कारिकाकृदभिमतस्य साक्षित्वस्य स्वरूपमाह। साक्षी चेति। दर्शितः विषयो यस्मै तथाभूतः एतदेवाह। यस्मै प्रदर्श्यते इति। अत्रैव दृष्टान्तमाह। यथाहि इति। अर्थ्यते इत्यर्थी इति व्युत्पत्त्या वादी अर्थीत्युच्यते प्रत्यर्थी प्रतिवादी तौ। विवादविषयं विमतम्।

प्रकृते आत्मनः साक्षित्वं दर्शयति। एवमिति। प्रकृतिः महत्तत्त्वम् कार्यकारणयोरभेदात्, स्वचरितम्, स्वेन गृहीतम् विषयज्ञानम्। पुरुषायेति। स्वस्मिन्प्रतिबिम्बिताय पुरुषाय, इति यस्मै प्रदर्श्यते विषयः तथाभूतत्वात्, पुरुषः साक्षी इत्युच्यते, साक्षित्वस्य पुरुषेतरधर्मत्वं नास्तीति प्रतिपादयितुमाह। न चाचेतन इति। साक्षी पुरुष एवेति शेषः। अत एव अचेतनत्वादविषयत्वादेवेत्यर्थः। केचित्तु अत एव साक्षित्वादेवेत्यर्थमाहुः।

कैवल्यरूपधर्मस्य साधकं विपर्यासमाह। अत्रैगुण्यादिति। कैवल्यपदार्थमाह। आत्यन्तिक इति। आत्यन्तिकः स्वसमानाधिकरण दुःखसमकालीनः, दुःखत्रयस्य आधिभौतिकादिरूपस्य त्रिविधदुःखस्य यो अभावः स एव कैवल्यमित्यर्थः। तच्च उक्तरूपं कैवल्यं च, तस्य पुरुषस्य, स्वाभाविकात् स्वभावसिद्धात् तात्त्विकादिति यावत्; एतच्च तस्मान्न बध्यतेऽद्धा इत्यादिकारिकायां स्फुटीभविष्यति। अत्रैगुण्यादित्यस्यार्थमाह। सुखदुःखमोहरहितत्वादिति। अत्रैगुण्यस्य धर्मान्तरसाधकत्वमप्याह। अत एवेति। माध्यस्थ्यपदार्थमाह। सुखी हीति। तदुभयरहितः तृप्तिद्वेषरहितः, तथा च रागद्वेषराहित्यं मध्यस्थत्वं अत्र विवक्षितमिति बोध्यम्, मध्यस्थ एव उदासीन इत्युच्यते इत्याह। उदासीन इति।

विवेकित्वरूपविपर्याससाध्यं धर्ममाह। विवेकित्वादिति। सम्भूयकारित्वाद्रू-

स्यादेतत्—प्रमाणेन कर्तव्यमर्थमवगम्य 'चेतनोऽहं चिकीर्षन् करोमि' इति कृतिचैतन्ययोः सामानाधिकरण्यमनुभवसिद्धम्, तदेतस्मिन्मते नाऽवकल्पते, चेतनस्याऽकर्तृत्वात्, कर्तुश्चाऽचैतन्यात्, इत्यत आह—

तस्मात्तत्संयोगादचेतनं चेतनावदिव लिङ्गम् ।
गुणकर्तृत्वे च तथा कर्तेव भवत्युदासीनः ॥२०॥

"तस्मात्" इति । यतश्चैतन्यकर्तृत्वे भिन्नाधिकरणे युक्तितः सिद्धे, तस्मात् भ्रान्तिरियमित्यर्थः । 'लिङ्गम्'—महदादिसूक्ष्मपर्यन्तं वक्ष्यति। भ्रान्तिबीजं 'तत्संयोगः'-तत्सन्निधानम् । अतिरोहितार्थमन्यत्।

---

पाविवेकाभाववत्त्वात्, अपरिणामित्वाच्च । अकर्ता इति । उक्तधर्मस्य कर्तृत्वव्यापकत्वेन तदभावेन तदभावस्य सिद्धेरप्रत्यूहत्वात् ।

कारिकान्तरमवतारयितुमाशङ्कते । स्यादेतदिति । प्रमाणेनेति चक्षुरादिनेत्यर्थः । अवगम्य ज्ञात्वा चिकीर्षन् इत्यनेन इच्छादर्शिता करोमीत्यनेन च कृतिः । चेतनोहमित्यनेन च तेषां त्रयाणामप्याश्रयः आत्मा उक्तः । इति प्रतीत्या, कृतिचैतन्ययोरिति इच्छाया अप्युपलक्षणम् । सामानाधिकरण्यम् एकाधिकरणवृत्तित्वं, अनुभवसिद्धम् प्रत्यक्षसिद्धम्, भवतु सामानाधिकरण्यस्यानुभवसिद्धता तथापि का क्षतिरित्यत आह । तदिति । तत् उक्तगुणानां सामानाधिकरण्यम् एतस्मिन्मते कृत्यादीनां बुद्धिगुणत्वाङ्गीकर्तॄणां सांख्यानामते, न अवकल्पते न युज्यते । अत्रैव हेतुमाह । चेतनस्येति । चेतनस्य पुरुषस्य अकर्तृत्वात् कृतिरहितत्वात्, कर्तुः कृतिमतो महत्तत्त्वस्य अचेतनत्वात् चैतन्याभाववत्त्वात् । एतन्मते इति पूर्वोक्तमनुपपद्यते । इत्यतः इत्याशङ्कायाम् ।

व्याचष्टे । यत इति । तस्मादित्यस्यार्थमाह । यतः इत्यादि । चैतन्यं चेतनत्वं आत्मधर्मः एवं कर्तृत्वं बुद्धिधर्म इति पूर्वोक्तयुक्त्या सिद्धं । भिन्नाधिकरणे भिन्नमधिकरणं ययोः तथाभूते । इयं चेतनोहं करोमीत्यादिप्रतीतिः भ्रान्तिः । तथा च न सा विषयसाधनायाऽलम् ,

उक्तभ्रान्तेः किं कारणमित्याशङ्कायां तत्कारणं प्रदर्शयति । भ्रान्तिबीजमिति । तत्संयोग इति । चेतनस्य पुरुषस्य असङ्गो ह्येष पुरुष इत्यादिना असङ्गत्वप्रतिपादनात, कथं तयोः पुरुषबुद्ध्योः संयोगस्य सम्भव इत्यतः संयोगपदस्य सन्निधानार्थकत्वमाह । तत्सन्निधानमिति । लिङ्गपदार्थमाह । महदादिसूक्ष्मपर्यन्तमिति । सूक्ष्मलिङ्गपर्यन्तम् । वक्ष्यतीति । पूर्वोत्पन्नमसक्तं महदादि सूक्ष्मपर्यन्तम् । संसरति निरुपभोगं भावैरधिवासितं लिङ्गम् । इत्यादिकारिकायामिति शेषः ।

तथा च बुद्ध्यादिकमचेतनमपि चेतनसन्निधानात् चेतनमिव एवं अकर्ता पुरुषोपि कर्तृबुद्धिसन्निधानात् कर्तेव प्रतिभाति, न तु वास्तवं तत्र चैतन्यं अस्मिंश्च कर्तृत्वमिति भावः ।

'तत्संयोगात्' इत्युक्तम्, न च भिन्नयोः संयोगोऽपेक्षां विना, न चेयमुपकार्योपकारकभावं विनेत्यपेक्षाहेतुमुपकारमाह—

**पुरुषस्य दर्शनार्थं कैवल्यार्थं तथा प्रधानस्य ।**
**पङ्ग्वन्धवदुभयोरपि संयोगस्तत्कृतः सर्गः ॥ २१ ॥**

"पुरुषस्य" इति । प्रधानस्येति कर्मणि षष्ठी । प्रधानस्य सर्वकारणस्य यद्दर्शनं पुरुषेण तदर्थम् । तदनेन भोग्यता प्रधानस्य दर्शिता । ततश्च भोग्यं प्रधानं भोक्तारमन्तरेण न सम्भवतीति युक्ताऽस्य भोक्त्रपेक्षा ।

पुरुषस्याऽपेक्षां दर्शयति—"पुरुषस्य कैवल्यार्थम्" इति ।

तथा हि—भोग्येन प्रधानेन सम्भिन्नः पुरुषस्तद्गतं दुःखत्रयं स्वा-

---

कारिकान्तरमवतारयति । तत्संयोगादित्युक्तमिति । भिन्नयोरिति । चेतनत्वाचेतनत्वरूपविरुद्धधर्मयोः पुरुषप्रधानयोरित्यर्थः । अपेक्षां स्वस्वकार्यजननसहकारित्वं । अपेक्षा उपकार्योपकारकभावं विना न सम्भवति इत्याह । न चेति । इयं अपेक्षा । इत्यत इति । यत अपेक्षा उपकारं विना न सम्भवति अत इत्यर्थः ।

व्याचष्टे । प्रधानस्येति । उभयप्राप्तौ कर्मणीति सूत्रेण षष्ठ्या कर्मत्वाथकत्वप्रतिपादनात् । एतेन प्रधानस्येति कर्तरि षष्ठीभ्रमो निरस्तः । प्रधानकर्मकत्वं कस्येत्याशङ्कायां तदन्वयिक्रियां दर्शयति । दर्शनमिति । उक्तस्थले कर्तृवाचकपदाभावेन अध्याहारं विना शाब्दबोधासम्भवात् कर्तृवाचकपदमध्याहरति । पुरुषेणेति । तदर्थं प्रधानदर्शनार्थम् । अनेन पुरुषकर्तृकप्रधानविषयकदर्शनरूपार्थप्रतिपादनेन, प्रधानस्य भोग्यतेति । सर्वकारणत्वेन प्रधानपदवाच्यस्य प्रकृतितत्त्वस्य भोगविषयत्वरूपा भोग्यता प्रतिपादितेत्यर्थः । भवतु प्रधानस्योक्तरीत्या भोग्यता तथापि कथमनेन तस्य पुरुषापेक्षित्वमित्यत आह । ततश्चेति । उक्तरीत्या प्रधानस्य भोग्यत्वे चेत्यर्थः । भोग्यमिति । प्रधानस्य भोग्यत्वं भोक्तारमन्तरेण न सम्भवतीत्यर्थः । स्वात्मनि वृत्तिविरोधेन स्वस्यैव भोग्यत्वभोक्तृत्वयोरसम्भवात् अतिरिक्तभोक्तुरावश्यकत्वात्तस्यैव च पुरुषत्वात् प्रधानस्य पुरुषापेक्षाऽस्त्येवेति भावः ।

पुरुषस्येति । पुरुषस्य प्रधानविषयिणी या अपेक्षा तामित्यर्थः । परस्परापेक्षां विना परस्परसम्बन्धासम्भवात् उभयोरप्यपेक्षाप्रतिपादनस्यावश्यकत्वादिति भावः । नच पुरुषस्य भवन्मतेऽसङ्गतया आत्यन्तिकदुःखत्रयप्रशमलक्षणस्य कैवल्यस्य सर्वदा पुरुषे सत्त्वेन कथं कैवल्यस्यार्थत्वं सम्भवतीत्याशङ्कायामाह । तथा हीत्यादिना । सम्भिन्नः प्रधानात्स्वस्मिन् विवेकमजानन्, तद्गतं प्रधानगतं, स्वात्मनि स्वस्मिन्, प्रार्थयते अभिलषति । तथाच पुरुषस्य सर्वदा दुःखत्रयरहितत्वेपि प्रकृतिविवेकाग्रहात् दुःखत्रयस्य आभिमानिकसम्बन्धप्रयुक्ताश्रयतया उक्तसम्बन्धप्रयुक्तदुःखत्रयप्रशमस्य असिद्धत्वेन तस्येच्छाविषयत्वात् उक्तरूपस्य कैवल्यस्य इच्छाविषयत्वरू-

त्मन्यभिमन्यमानः कैवल्यं प्रार्थयते। तच्च सत्त्वपुरुषान्यताख्यातिनिबन्धनम्। न च सत्त्वपुरुषान्यताख्यातिः प्रधानमन्तरेणेति कैवल्यार्थं पुरुषः प्रधानमपेक्षते। अनादित्वाच्च संयोगपरम्पराया भोगाय संयुक्तोऽपि कैवल्याय पुनः संयुज्यत इति युक्तम्।

ननु भवत्वनयोः संयोगः, महदादिसर्गस्तु कुत इत्यत आह—"तत्कृतः सर्गः" इति। संयोगो हि न महदादिसर्गमन्तरेण भोगाय कैवल्याय च पर्याप्त इति संयोग एव भोगापवर्गार्थं सर्गं करोतीत्यर्थः॥

सर्गक्रममाह—

**प्रकृतेर्महांस्ततोऽहङ्कारस्तस्माद्गणश्च षोडशकः।**
**तस्मादपि षोडशकात्पञ्चभ्यः पञ्च भूतानि॥ २२॥**

"प्रकृतेः" इति। प्रकृतिः—अव्यक्तम्। महदहङ्कारौ वक्ष्यमाणलक्ष

---

पमर्थत्वं सुसङ्गतमेव। उक्तप्रकारेण कैवल्यस्य पुरुषार्थत्वेपि तदर्थं पुरुषस्य प्रधानापेक्षां प्रतिपादयितुमाह। तच्चेति। कैवल्यं चेत्यर्थः। सत्त्वपुरुषान्यताख्यातिनिबन्धनमिति। प्रधानपुरुषयोर्भेदग्रहप्रयोज्यमित्यर्थः। उक्तभेदग्रहसत्त्वे भेदाग्रहप्रयुक्तसम्बन्धाभावेन पुरुषे उक्तत्रिविधदुःखनाशसम्भवादिति भावः। प्रधानमन्तरेणेति। श्रवणमननिदिध्यासनादेः सत्त्वपुरुषान्यताख्यातेश्च महत्तत्त्वपरिणामतया प्रधानमन्तरेण तदसम्भवादित्यर्थः। पुरुषस्य प्रधानापेक्षामुपसंहरति। इति कैवल्यार्थमिति।

ननु पुरुषस्य प्रधानविषयकदर्शनरूपभोगार्थं यदि तयोः संयोगः तदा तेनैव संयोगेन कथं कैवल्यसम्भवः कैवल्यस्य भोगविरुद्धत्वेन तदुभयं प्रति जनकत्वस्य एकस्मिन् संयोगे असम्भवादित्याशङ्कामपनेतुमाह। अनादित्वाच्चेति। संयोगपरम्पराया इति। तथा च एकस्यैव संयोगस्य नोभयं प्रति कारणत्वमपि तु संयोगपरम्पराया अनादित्वेन कस्याश्चित्संयोगपरम्पराया भोगहेतुत्वं कस्याश्चिच्चापवर्गहेतुत्वमिति स्वीकारेणोक्तापत्तेरभावात्।

उभयस्यापेक्षायां दृष्टान्तमाह कारिकायां। पङ्ग्वन्धवदिति। यथा गमनशक्तिविहीनः पङ्गुः गमनशक्तिमन्तमन्यमपेक्षते दर्शनशक्तिविहीनश्चान्धः तादृशशक्तिमन्तमन्यमपेक्षते तथाच तयोरुभयोरपि परस्परापेक्षासत्त्वात् संयोगः, तेन च अन्धस्कन्धमारूढः पङ्गुः मार्गप्रदर्शनकार्यं करोति एवमेवात्र परस्परापेक्षयोः पुरुषबुद्ध्योः संयोगः तेन च भोगापवर्गौ भवत इत्यर्थः। अनयोः पुरुषबुद्ध्योः, तत्कृतः उक्तसंयोगकृतः। ननु संयोगस्य भोगापवर्गार्थत्वाद्भोगापवर्गावेव तत्कृतौ स्याताम् महदादिसर्गः कथं तत्कृतः इत्याशङ्कामपहर्तुमाह। संयोगो हीति। पर्याप्तःसमर्थः। तथा च भोगापवर्गयोः महदादिसर्गमन्तरेणासम्भवात् संयोग एव भोगापवर्गार्थं महदादिसर्गमपि करोतीत्यर्थः।

कारिकान्तरमवतारयति। सर्गक्रममिति। सर्गस्य महदादिसर्गस्य क्रमं पौर्वापर्यं। प्रकृतिविकृतिभूतानां महत्तत्त्वादीनामपि प्रकृतित्वात्प्रकृतिपदार्थं व्याचष्टे। प्रकृतेः अव्य-

णौ । एकादशेन्द्रियाणि—वक्ष्यमाणानि, तन्मात्राणि च पञ्च, सोऽयं षोडशसङ्ख्यापरिमितो गणः षोडशकः । तस्मादपि षोडशकादपकृष्टे-भ्यः पञ्चभ्यस्तन्मात्रेभ्यः पञ्च भूतान्याकाशादीनि ।

तत्र शब्दतन्मात्रादाकाशं शब्दगुणम्, शब्दतन्मात्रसहितात् स्पर्शतन्मात्राद्वायुः शब्दस्पर्शगुणः, शब्दस्पर्शतन्मात्रसहिताद्रूपत-न्मात्रात्तेजः शब्दस्पर्शरूपगुणम्, शब्दस्पर्शरूपतन्मात्रसहिताद्रसत-न्मात्रादापः शब्दस्पर्शरूपरसगुणाः, शब्दस्पर्शरूपरसतन्मात्रसहिता-द्गन्धतन्मात्राच्छब्दस्पर्शरूपरसगन्धगुणा पृथिवी, जायते इत्यर्थः ।

अव्यक्तं सामान्यतो लक्षितं "तद्विपरीतमव्यक्तम्" ( का १० ) इत्यनेन, विशेषतश्च "सत्त्वं लघु प्रकाशकम्" ( का १३ ) इत्यनेन । व्यक्तमपि सामान्यतो लक्षितं "हेतुमत्" ( का १० ) इत्यनेन । सम्प्र-ति विवेकज्ञानोपयोगितया व्यक्तविशेषं बुद्धिं लक्षयति—

अध्यवसायो बुद्धिर्धर्मो ज्ञानं विराग ऐश्वर्यम् ।
सात्त्विकमेतद्रूपं तामसमस्माद्विपर्यस्तम् ॥ २३ ॥

"अध्यवसायः" इति । 'अध्यवसायो बुद्धिः' क्रियाक्रियावतोर-

---

षमिति । वक्ष्यमाणलक्षणौ अग्रिमतदग्रिमकारिकयोः वक्ष्यमाणं लक्षणं ययोस्तथाभू-तावित्यर्थः। षोडशसङ्ख्यापरिमितो गणः षोडशक इत्यत्र षोडशसंख्यां प्रकटीकरोति । एकादशेन्द्रियाणीत्यादिना । षोडशकात्पञ्चभ्य इत्यत्र पञ्चानां षोडशकजन्यत्वाभा-वेनाह । षोडशकादपकृष्टेभ्य इति। पञ्चभ्य इत्यनेन केषां पञ्चानां परामर्श इत्याशङ्का-यामाह । तन्मात्रेभ्य इति ।

कस्मात्तन्मात्रात्किंभूतं जायत इति विशिष्य दर्शयति । तत्रेति । पञ्चतन्मात्रेषु मध्ये इत्यर्थः । शब्दतन्मात्रादाकाशं, जायते इति अग्रिमेण सम्बन्धः । आकाशस्य शब्दतन्मात्रादेवोत्पत्तिः न तु स्पर्शतन्मात्रादेः इत्यत्र हेतुगर्भं विशेषणं शब्दगुणमिति । तथाच अन्यतन्मात्रजत्वे तस्य अन्यगुणत्वापत्तिः स्यात् । वायोः उभयतन्मात्रजत्वे हेतुगर्भं विशेषणम् शब्दस्पर्शगुण इति । एवमग्रेपि ।

कारिकान्तरमवतारयति । अव्यक्तमिति । सामान्यतः व्यक्तविपरीतत्वादिना, कुत्र लक्षितमित्याशङ्कायामाह । तद्विपरीतमित्यादिनेति । विशेषतश्चेति । लक्षितमिति पूर्वोक्तमनुषज्यते ।

अध्यवसायो बुद्धिरिति। ननु अध्यवसायस्य बुद्धिव्यापारत्वेन बुद्धिधर्मत्वात् बुद्धि-रूपत्वाभावेन कथमस्य बुद्धिरूपत्वमित्याशङ्कायामाह । क्रियाक्रियावतोरिति। व्यापा-रव्यापारिणोरित्यर्थः । अध्यवसायस्य बुद्धिधर्मत्वमेवेति विशदयितुं प्रवृत्तिप्रकारमाह। सर्वो व्यवहर्तेति। व्यवहर्ता हानोपादानादिलक्षणप्रवृत्तिमान्, आलोच्य आलोचनं कृत्वा

भेदविवक्षया। सर्वो व्यवहर्ताऽऽलोच्य मत्वा 'अहमत्राऽधिकृतः' इत्यभिमत्य 'कर्तव्यमेतन्मया' इत्यध्यवस्यति, ततश्च प्रवर्तते इति लोकसिद्धम्। तत्र योऽयं कर्तव्यमिति विनिश्चयश्चितिसन्निधानादापन्नचैतन्याया बुद्धेः सोऽध्यवसायः-बुद्धेरसाधारणो व्यापारः, तदभेदा बुद्धिः। स च बुद्धेर्लक्षणं, समानासमानजातीयव्यवच्छेदकत्वात्।

तदेवं बुद्धिं लक्षयित्वा विवेकज्ञानोपयोगिनस्तस्या धर्मान् सात्विकतामसानाह-"धर्मो ज्ञानं विराग ऐश्वर्यम्। सात्त्विकमेतद्रूपं तामसमस्माद्विपर्यस्तम्" इति।

धर्मः—अभ्युदयनिःश्रेयसहेतुः। तत्र यागदानाद्यनुष्ठानजनितो धर्मोऽभ्युदयहेतुः। अष्टाङ्गयोगानुष्ठानजनितश्च निःश्रेयसहेतुः। गुणपुरुषान्यताख्यातिर्ज्ञानम्। विरागः-वैराग्यं-रागाभावः।

---

आलोचनं बाह्येन्द्रियादिभिः प्रत्यक्षीकरणं। मत्त्वा इदमित्थमेवेति निश्चयं कृत्वा अयं च मनसो व्यापारः। अहङ्कारव्यापारं दर्शयति। अहमत्राधिकृत इति। अत्र एतद्वस्तुग्रहणे हाने वा अधिकृतः समर्थः इति अभिमत्य। अहङ्कारव्यापारानन्तरं बुद्धिव्यापारं अध्यवसायमाह। कर्तव्यमेतन्मयेति। एतत् हानोपादानादि,अध्यवस्यति निश्चिनोति। ततः उक्तविधनिश्चयानन्तरं। लोकप्रसिद्धम् सर्वजनप्रतीतिसिद्धम्, तत्र अध्यवसायस्वरूपं प्रदर्शयति। तत्रेति। उक्तालोचनमननाभिमानकर्तव्यनिश्चयेषु इत्यर्थः। नच कर्तव्यमिति निश्चयस्य कथं बुद्धिधर्मत्वं निश्चयस्य ज्ञानरूपतया तस्य जडधर्मत्वासम्भवादित्यत आह। चितिसन्निधानादिति। तथाच वास्तविकचैतन्यस्य तत्राभावेपि चेतनपुरुषसंयोगाच्चैतन्यापत्तिरिति रीत्या उक्तनिश्चयस्य बुद्धिधर्मत्वं सम्भवत्येवेति भावः। अस्तु तस्य बुद्धिधर्मत्वं तथापि कथं तस्य लक्षणत्वं असाधारणधर्मस्यैव लक्षणत्वादित्यतस्तस्य असाधारणधर्मत्वमाह। बुद्धेरसाधारणो व्यापार इति। तदभेदा तस्मात् अध्यवसायरूपात् व्यापारादभेदो यस्या एवंभूता, न च तस्यासाधारणधर्मत्वे प्रमाणाभावः इत्यत आह। स चेति। उक्ताध्यवसायश्चेत्यर्थः। लक्षणं असाधारणो धर्मः, समानासमानजातीयेति। समानजातीयेभ्यः अहङ्कारादिभ्यः, असमानजातीयेभ्यो घटपटादिभ्यः, व्यावर्तकत्वात् व्यवच्छेदकत्वादित्यर्थः।

चोदनालक्षणोऽर्थो धर्मः इति जैमिनिसूत्रोक्तस्य धर्मस्य प्रोक्षणादिरूपस्य बुद्धिधर्मत्वासम्भवात् वैशेषिकानुसारेण धर्मपदार्थमाह। धर्मोऽभ्युदयनिश्रेयसहेतुरिति। अभ्युदयः सुखं, निश्रेयसं आत्यन्तिकी दुःखनिवृत्तिः, तयोर्हेतुत्वं धर्मलक्षणमित्यर्थः। उभयहेतुत्वस्य सर्वत्रासम्भवात् विशिष्य व्यवस्थां प्रदर्शयति। तत्रेति। अभ्युदयहेतुनिश्रेयसहेत्वोर्मध्ये इत्यर्थः। निश्रेयसप्रयोजनं धर्ममाह। अष्टाङ्गेति। यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधयोऽष्टावङ्गानि इति योगसूत्रोक्तानि अष्टौ अङ्गानि यस्य एवंभूतो यो योगः चित्तवृत्तिनिरोधः तदनुष्ठानजनित इत्यर्थः।

ज्ञानपदार्थमाह। गुणपुरुषान्यताख्यातिरिति। गुणाः बुद्धितत्त्वं, विरागपदस्य

तस्य—यतमानसंज्ञा, व्यतिरेकसंज्ञा, एकेन्द्रियसंज्ञा, वशीकारसंज्ञा—इति चतस्रः संज्ञाः । रागादयः कषायाश्चित्तवर्तिनः, तैरिन्द्रियाणि यथास्वं विषयेषु प्रवर्त्यन्ते । तन्मा प्रवर्तिषत विषयेष्विन्द्रियाणीति तत्परिपाचनायाऽऽरम्भः—प्रयत्नो यतमानसंज्ञा ।

परिपाचने चाऽनुष्ठीयमाने केचित्कषायाः पक्वाः, पक्ष्यन्ते च केचित्, तत्रैवं पूर्वापरीभावे सति पक्ष्यमाणेभ्यः कषायेभ्यः पक्वानां व्यतिरेकेणाऽवधारणं व्यतिरेकसंज्ञा ।

इन्द्रियप्रवृत्त्यसमर्थतया पक्वानामौत्सुक्यमात्रेण मनसि व्यवस्थापनमेकेन्द्रियसंज्ञा ।

औत्सुक्यमात्रस्याऽपि निवृत्तिरुपस्थितेष्वपि दृष्टानुश्रविकविषयेषु या संज्ञात्रयात् पराचीना सा वशीकारसंज्ञा । याममत्रभवान् प-

---

रागाभाववद्धर्मकतया तस्य बुद्धिधर्मत्वाभावेन भावप्रधानतया व्याचष्टे । विरागो वैराग्यमिति ।

वैराग्यं विभजन् तस्य तान्त्रिकीसंज्ञा आह । तस्येति । वैराग्यस्येत्यर्थः ।

यतमानसंज्ञस्य वैराग्यस्य स्वरूपमाह । रागादय इति । आदिना द्वेषादिपरिग्रहः । कषायाः मलाः, कषायानां यथा पटादिरञ्जकत्वमेवं रागादीनामपि चित्तरञ्जकत्वात्कषायत्वं, तै रागादिभिः, इन्द्रियानि चक्षुरादीनि यथास्वं यथायथं, स्वविषयेषु रूपस्पर्शादिषु, प्रवर्त्यन्ते प्रेर्यन्ते, मा प्रवर्तिषत प्रवृत्तानि मा भवन्तु, इति इति विचार्य, तत्परिपाचनाय रागादिमलनिराकरणाय । आरम्भपदार्थमाह । प्रयत्न इति ।

व्यतिरेकसंज्ञं वैराग्यं विशदयति । परिपाचने चेति । रागादिमलक्षालनप्रयत्ने चेत्यर्थः । केचित्कषायाः पक्वा इति । तथाच सर्वेषां मलानां पाकस्य एकदा असम्भवेन पक्वेभ्यो मलेभ्यः अपक्वानां मलानां भेदेनावधारणपूर्वकं तेषामपि पाकार्थं यो यत्नः स एव व्यतिरेकसंज्ञकवैराग्यपदार्थः ।

एकेन्द्रियसंज्ञकं वैराग्यं प्रपञ्चयति । इन्द्रियेति । यदा मलानां बाह्येन्द्रियप्रवर्तनसामर्थ्यविगमेपि 'रागे त्वलब्धविषये वेदना महती तु या । संशोषणी तु गात्राणां तामुत्कण्ठां विदुर्बुधाः । इत्युक्तलक्षणोत्कण्ठामात्रेण मनसि अवस्थापनं भवति तदेव एकेन्द्रियसञ्ज्ञकं वैराग्यमित्यर्थः ।

चतुर्थं वशीकारसंज्ञकं वैराग्यं दर्शयति । औत्सुक्यमात्रस्यापीति । पूर्वोक्तरीत्या मनसि वर्तमानस्य औत्सुक्यस्यापि निवृत्तिः वशीकारसंज्ञकं वैराग्यमित्युच्यते । सुषुप्तिकाले उक्तौत्सुक्यनिवृत्तिसत्त्वेपि वशीकारसंज्ञकवैराग्याभावादाह । उपस्थितेष्वपीति । उपस्थितेषु स्मृतिविषयेषु, दृष्टाः भोजनपानविलेपनादयः, आनुश्रविकाः स्वर्गादयः ये विषयाः भोग्यपदार्थाः तेष्वित्यर्थः । उक्तवैराग्यस्य मुख्यत्वमाह । संज्ञात्रयादिति । पराचीना पश्चात् उत्पद्यमाना, अस्या एव मुख्यत्वं प्रकटयितुं पतञ्-

तञ्जलिर्वर्णयाञ्चकार—"दृष्टानुश्रविकविषयवितृष्णस्य वशीकारसंज्ञा वैराग्यम्" इति ( यो० सू० १।१६ )। सोऽयं बुद्धिधर्मो विराग इति।

ऐश्वर्यमपि बुद्धिधर्मः, यतोऽणिमादिप्रादुर्भावः।

( १ ) अत्राऽणिमा—अणुभावः, यतः शिलामपि प्रविशति। (२) लघिमा—लघुभावः, यतः सूर्यमरीचीनालम्ब्य सूर्यलोकं याति।

( ३ ) गरिमा-गुरुभावः, यतो गुरुर्भवति।

( ४ ) महिमा-महतो भावः, यतो महान् भवति।

( ५ ) प्राप्तिः, यतोऽङ्गुल्यग्रेण स्पृशति चन्द्रमसम्।

( ६ ) प्राकाम्यं इच्छानभिघातः, यतो भूमावुन्मज्जति निमज्जति च, यथोदके।

( ७ ) वशित्वम्, यतो भूतभौतिकं वशीभवत्यवश्यम्।

( ८ ) ईशित्वम्, यतो भूतभौतिकानां प्रभवस्थितिलयानामीष्टे। यच्च कामावसायित्वं सा सत्यसङ्कल्पता, येन यथाऽस्य सङ्कल्पो

---

लिसूत्रं प्रदर्शयति। यामिति। यां वशीकारसंज्ञां, अत्रभवान् पूज्यः, उपसंहरति। सोयमिति। सोयं विरागो बुद्धिधर्म इत्यन्वयः।

चतुर्थं सात्त्विकं रूपमाह। ऐश्वर्यमिति। ऐश्वर्यपदार्थमाह। यतोऽणिमादिप्रादुर्भाव इति। तथाच अणिमाद्युत्पादकधर्मविशेष एव ऐश्वर्यमित्यनेनोच्यते। अणिमादीत्यादिपदग्राह्यास्तु "अणिमा लघिमा चैव महिमा प्राप्तिरेव च। प्राकाम्यञ्च तथेशित्वं वशित्वञ्च तथा परम्। यच्च कामावसायित्वं गुणानेतानथैश्वरान्। प्राप्नोत्येतान् नरश्रेष्ठ परनिर्वाणसूचकान्। इत्यनेन मार्कण्डेयपुराणे प्रतिपादिताः। तानेव व्याचष्टे। तत्रेत्यदिना। अणिमायाः कार्यमाह। यतः शिला इति। लघिमायाः कार्यमाह। यत इति। लघुत्वस्य ऊर्द्ध्वगमनं प्रति कारणतायाः पूर्वमुक्ततया लघिमासत्त्वे सूर्यमरीचीनालम्ब्य सूर्यलोकप्रयाणस्य सहजत एव सम्भवः। गरिमायाः कार्यमाह। यतो गुरुरिति। महिमायाः कार्यमाह। यतो महानिति। स्वल्पपरिणामोपि पर्वतादिमहत्परिमाणवान् भवतीत्यर्थः। प्राप्तिकार्यमाह। अङ्गुल्यग्रेणेति। अतिदूरमपि चन्द्रमसं अङ्गुल्यग्रेण विनापि महत्परिमाणं स्पृशति। तथाच सर्वभूतसन्निधानमेव प्राप्तिरित्यर्थः। प्राकाम्यपदार्थमाह। इच्छानभिघात इति। तस्य कार्यमाह। यत इति। यथोदके निमज्जति उन्मज्जति च तथैव भूमावपि निमज्जनोन्मज्जनादिकं करोतीत्यर्थः। तथाच तस्येच्छाया काठिन्यादिभिर्भूमिधर्मैः अभिघातः न भवतीत्यर्थः। वशित्वपदार्थमाह। वशीभवत्यिति। न वश्यं अवश्यं वशान्न वस्तु अवश्यं वशी भवति इत्यर्थः। ईशित्वं सामर्थ्यं तत्किन्निरूपितमित्यत आह। भूतभौतिकानामित्यादि। भूतानि पृथिव्यादीनि भौतिकानि घटपटादीनि तेषां प्रभवः उत्पत्तिः, व्यूहः स्थितिः, अप्ययो नाशः, तेषां ईष्टे समर्थो भवतीत्यर्थः। कामावसायित्वपदार्थमाह यच्चेति। सत्यसङ्कल्पतां व्याचष्टे। यथास्येति। अस्य

भवति भूतेषु, तथैव भूतानि भवन्ति। अन्येषां मनुष्याणां निश्चयाः निश्चेतव्यमनुविधीयन्ते, योगिनस्तु निश्चेतव्याः पदार्था निश्चयम्। इति चत्वारः सात्त्विका बुद्धिधर्माः।

तामसास्तु तद्विपरीता बुद्धिधर्माः। अधर्माज्ञानावैराग्यानैश्वर्याभिधानाश्चत्वार इत्यर्थः ॥ २३ ॥

अहङ्कारस्य लक्षणमाह—

**अभिमानोऽहङ्कारः, तस्माद्द्विविधः प्रवर्तते सर्गः।**
**एकादशकश्च गणस्तन्मात्रपञ्चकश्चैव ॥ २४ ॥**

"अभिमानः" इति। 'अभिमानोऽहङ्कारः'। 'यत् खल्वालोचितं मतं च तत्र अहमधिकृतः', 'शक्तः खल्वहमत्र, 'मदर्था एवाऽमी विषयाः,' 'मत्तो नाऽन्योऽत्राऽधिकृतः कश्चिदस्ति,' 'अतोऽहमस्मि' इति योऽभिमानः सोऽसाधारणव्यापारत्वादहङ्कारः। तमुपजीव्य हि बुद्धिरध्यवस्यति—'कर्तव्यमेतन्मया' इति।

---

योगिनः भूतेषु मनुष्यतिर्यगादिषु विषये यथा संकल्पः मनुष्यादि विषये अयं व्याघ्र इत्यादिरूपः भवति तथैव भूतानि भवन्ति व्याघ्रादिरूपाण्येव भवन्तीत्यर्थः।

ननु कथमेतत्सम्भवतीत्यत आह। अन्येषामिति। योगिभिन्नानामित्यर्थः। निश्चयाः निश्चेतव्यं निश्चयविषयीभूतं अनुविधीयन्ते अनुसरन्ति, योगिनां त्वाह। योगिनस्त्विति। निश्चयमिति। अनुविधीयन्ते इति पूर्वोक्तमनुषज्यते, तथाच योगिनो निश्चयानुसारेण निश्चेतव्याः पदार्था भवन्ति न अन्येषामिति।

सात्त्विकधर्मानुपसंहरति। इति चत्वारः सात्त्विका इत्यादिना। चत्वारः धर्माः धर्मज्ञानवैराग्यैश्वर्यरूपाः।

सात्त्विकधर्मानुक्त्वा तामसधर्मानाह। तामसास्त्विति। तद्विपरीताः, सात्त्विकविपरीताः सात्त्विकविरोधिन इति यावत्। तानेवाह। अधर्माज्ञान इत्यादिना। अधर्मो धर्मविरोधी नरकादिदुःखहेतुः, अज्ञानं अविद्या सा च न विद्याभावरूपा अपि तु 'अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिरविद्या' इति सूत्रोक्ता विपर्ययज्ञानरूपा, अवैराग्यं रागरूपमेव, अनैश्वर्यम् प्रातहतेच्छत्वादिरूपम्।

अहङ्कारस्य बुद्धितत्त्वकार्यत्वात् महत्तत्त्वनिरूपणानन्तरं अहङ्कारस्य लक्षणमाह। अभिमान इत्यादिना। अभिमानपदार्थमाह। यत्खल्विति। यत् वस्तु आलोचितं बहिरिन्द्रियगृहीतं, अनन्तरं मतं मनसा, तदनन्तरं अभिमानो भवति। तस्यैवाभिमानस्य स्वरूपमाह। अहमत्राधिकृत इति। अस्यैव विवरणं शक्तः खल्वहमत्रेत्यादि। उक्ताभिमानस्य लक्षणत्वसिद्ध्यर्थं तस्य असाधारणव्यापारत्वमाह। सो असाधारणव्यापारत्वादिति। असाधारणः व्यापारो यस्य एवंभूत इत्यर्थः।

अहङ्कारलक्षणनिरूपणस्य बुद्धिलक्षणानन्तरं प्रतिपादने उपजीव्योपजीवकभावं

तस्य कार्यभेदमाह—"तस्माद्द्विविधः प्रवर्तते सर्गः" इति । प्रकारद्वयमाह—"एकादशकश्च गणः"—इन्द्रियाह्वयः, तन्मात्रपञ्चकश्चैव । द्विविध एव सर्गोऽहङ्कारात्, न त्वन्य इति 'एव'कारेणावधारयति ॥२४॥

स्यादेतत्—अहङ्कारादेकरूपात्कथं जडप्रकाशकौ गणौ विलक्षणौ भवत इत्यत आह—

**सात्त्विक एकादशकः प्रवर्तते वैकृतादहङ्कारात् ।**
**भूतादेस्तन्मात्रः स तामसः, तैजसादुभयम् ॥ २५ ॥**

"सात्त्विकः" इति । प्रकाशलाघवाभ्यामेकादशक इन्द्रियगणः सात्त्विको वैकृतात् सात्त्विकादहङ्कारात्प्रवर्तते । भूतादेस्त्वहङ्कारात्तामसात्तन्मात्रो गणः प्रवर्तते । कस्मात् ? यतः 'स तामसः' । एतदुक्तम्भवति, यद्यप्येकोऽहङ्कारस्तथाऽपि गुणभेदोद्भवाभिभवाभ्यां भिन्नं कार्यं करोतीति ।

ननु यदि सत्त्वतमोभ्यामेव सर्वं कार्यं जन्यते तदा कृतमकिञ्चित्करेण रजसेत्यत आह—"तैजसादुभयम्" इति । तैजसात्—राजसादुभयं—गणद्वयं भवति । यद्यपि रजसो न कार्यान्तरमस्ति, तथाऽपि सत्त्वतमसी स्वयमक्रिये समर्थे अपि न स्वस्वकार्यं कुरुतः, रजस्तु चलतया ते यदा चालयति तदा स्वकार्यं कुरुत इति, तदुभयस्मिन्नपि कार्ये सत्त्वतमसोः क्रियोत्पादनद्वारेणाऽस्ति रजसः कारण-

---

द्योतयन्नाह । तमुपजीव्येति । तमहङ्कारं उपजीव्य आश्रित्य ।

तस्य अहङ्कारस्य, कार्यभेदम् कार्यविशेषम् ।

कारिकान्तरमवतारयति । स्यादेतदिति । जडगणः पञ्चतन्मात्राणि,प्रकाशको गणः एकादशेन्द्रियाणि ।

वैकृतादहङ्कारात् सात्त्विकः एकादशगणः प्रवर्तते प्रभवतीति मूलार्थः । इन्द्रियगणस्य सात्त्विकत्वे हेतुमाह । प्रकाशलाघवाभ्यामिति । सत्त्वं लघुप्रकाशकमित्यनेन तयोः सत्त्वगुणरूपत्वस्य प्रतिपादितत्वात् । वैकृतादित्यस्यार्थः सात्त्विकादिति ।

भूतादेस्तु इत्यस्य विवरणम् अहङ्कारात्तामसात् इति । सः पञ्चतन्मात्रगणः, तामसः तमोबहुलः प्रकाशलाघवयोः तत्र स्वल्पपरिमाणेन सत्त्वात् ।

तात्पर्यार्थमाह । एतदुक्तं भवतीत्यादिना । गुणविशेषौ सत्त्वतमोरूपौ तयोः उद्भवाभिभवाभ्यामित्यर्थः ।

तैजसादुभयमिति चतुर्थपादं व्याख्यातुमाशङ्कते । नन्विति । सर्वं कार्यं एकादशेन्द्रियाणि पञ्चतन्मात्राणि च, कृतं अलम् । तैजसादित्यस्यार्थः राजसादिति । तथा च वैकृतभूतादिराजसेति सात्त्विकतामसराजसानां तान्त्रिक्यः संज्ञाः सन्तीति भावः ।

त्वमिति न व्यर्थं रज इति ॥ २५ ॥

सात्त्विकमेकादशमाख्यातुं बाह्येन्द्रियदशकं तावदाह—

**बुद्धीन्द्रियाणि चक्षुःश्रोत्रघ्राणरसनत्वगाख्यानि ।**
**वाक्पाणिपादपायूपस्थानि कर्मेन्द्रियाण्याहुः ॥ २६ ॥**

"बुद्धीन्द्रियाणि" इति । सात्त्विकाहङ्कारोपादानकत्वमिन्द्रियत्व-

---

सामान्यज्ञानस्य विशेषनिरूपणावसरे आवश्यकत्वेनेन्द्रियसामान्यलक्षणं आदावाह । सात्त्विकेति । अत्र सात्त्विकपदानुपादाने पञ्चतन्मात्रेष्वतिव्याप्तिः, तेषामपि अहङ्कारोपादानकत्वस्य पूर्वमुक्तत्वात् । अत्र प्रत्यवतिष्ठन्ते वैशेषिकादयः। चक्षुरिन्द्रियं तैजसं रूपादिषु मध्ये रूपस्यैवाभिव्यञ्जकत्वात् दीपवत्, त्वगिन्द्रियं वायवीयं स्पर्शादिषु मध्ये स्पर्शस्यैवाभिव्यञ्जकत्वात् अङ्गसङ्गिसलिलशैत्याभिव्यञ्जकव्यजनपवनवत्, एवं रसनं जलीयं रूपादिषु मध्ये रसस्यैवाभिव्यञ्जकत्वात् दन्तान्तस्तोयवत्, घ्राणस्य पार्थिवत्वे गन्धस्यैवेति कुङ्कुमगन्धाभिव्यञ्जकनिम्बत्वगादि निदर्शनम्, श्रोत्रस्य नभस्त्वे तु श्रोत्रं गुणावान्तरजात्या स्वगुणसजातीयगुणग्राहकम् बाह्येन्द्रियत्वात् चक्षुरादिवत् इति । शब्दो गुणावान्तरजात्या स्वगुणसजातीयगुणवतेन्द्रियेण गृह्यते बहिरिन्द्रियव्यवस्थापकगुणत्वात् रूपादिवत् । शब्दो भूतेन्द्रियग्राह्य इति वा बहिरिन्द्रियव्यवस्थापकगुणत्वादित्येव हेतुः । तथा श्रोत्रं भौतिकं बाह्येन्द्रियत्वात् चक्षुरादिवत् । आकाशः इन्द्रियारम्भकः भूतत्वात् भूतान्तरवत्, शब्दोपलब्धिर्वा भूतेन्द्रियकरणिका बाह्येन्द्रियव्यवस्थापकोपलब्धित्वात् रूपोपलब्धिवदित्याद्यनुमानशतैः बाह्येन्द्रियाणां भौतिकत्वसिद्ध्या तेषामहङ्कारोपादानकत्वं न सङ्गच्छत इति ।

तत्रेदं विचार्यते, आद्येषु चतुर्ष्वनुमानेषु रूपादिग्राहकत्वं यदि रूपाद्युपलब्धिकरणत्वरूपं तदोक्तहेतोरसाधारण्यम्, दीपादिषु रूपादिप्रत्यक्षकरणत्वाभावात् । यस्मिन्सति कार्यं भवत्येव तदेव हि करणम् । तच्च सन्निकर्षविशिष्टतयेन्द्रियाणामेव न तु दीपादेः । ननु—

> उद्विग्नो ह्यन्धकारेण कश्चिदेवं ब्रवीत्यपि ।
> किं चक्षुषा ममैतेन दृष्टं दीपेन यन्मया ॥

इति दीपादिष्वपि साधकतमत्वमस्त्येवेति कथमुक्तहेतोरसाधारणत्वम् । इत्थं, आलोकेन विनापि जन्तुभेदेषु चक्षुषो रूपादिग्राहकत्वं सिद्धम् । अन्धकारे च मनुष्यादीनां तत्त्वतोऽन्यथा वा । अतः ईदृशं प्राधान्यमपेक्ष्य इन्द्रियेषु करणत्वं दीपादिषु सहकारित्वं च प्रख्यातमनुरुध्य विकल्पप्रवृत्तेरविरोधः । यदि च रूपाद्युपलब्धिं प्रति सहकारित्वमेव रूपादिव्यञ्जकत्वं तदा स्वरूपासिद्धिः, चक्षुरादीनां तादृशोपलब्धिकरणत्वेन तत्सहकारित्वाभावात् । नच दीपादिकं प्रति सहकारित्वं चक्षुरादेरप्यव्याहतमिति न स्वरूपासिद्धिरिति वाच्यम् । तर्हि प्रमातृप्रमेययोरपि तथात्वात्च तत्रापि तैजसत्वादिसिद्धिः स्यात् । तयोः सतोरपि कदाचित्कार्यं न भवतीति चेत्, तावता करणत्वं माभूत् तत्सहकारित्वं तु सिद्धमेव । दीपे च सति भाव एवेति नियमो नास्ति

तथापि तत्र सहकारित्वाङ्गीकारात्। सम्प्रयोगविशेषसाहित्यात्स्यादिति चेत्, तर्हि तयोरपि ततस्स्यादेवेत्यनैकान्त्यम्। एतेन करणत्वादिविकल्पनानादरेण रूपादिबोधक-द्रव्यत्वमात्रं हेतुरित्यपि निरस्तम्। अञ्जनादावतिप्रसङ्गाच्च। अञ्जनस्य शक्ये प्रति-बन्धनिवर्तकत्वमात्रमिति चेन्न। अशक्ये गूढनिधिदर्शनादौ शक्त्याधानेन सहकारि-त्वदृष्टेः। शक्त्याधायकं न सहकारि इति चेन्न। दीपादावपि तथा क्लृप्तिप्रसङ्गात्। सत्त्वयैव तत्र हेतुत्वं दृष्टमिति चेत्, अत्रापि तथास्तु अविशेषात्। ये च तत्तदिन्द्रियग-तपित्तादिदोषैरपि रूपादिधीरस्तीति मत्वा—

शरीरयोगे सत्येव साक्षात्प्रमितिसाधनम्।

इति लक्षयन्ति। तन्मते तत्तद्दोषैरप्यनैकान्त्यम्, तेषां तैजसत्वानभ्युपगमात्। दन्तान्तस्तोयदृष्टान्तश्चायुक्तः, विषयसंस्कारकस्य तस्य व्यञ्जकत्वायोगात्। नहि ग्रस्यमानं किञ्चिदसंस्कृत्य दन्तान्तस्तोयस्योपकारकत्वम्। तावता च रसव्यञ्जकत्वे रसगन्धाद्युद्भवहेतोरग्न्यादेरपि किं तत्र स्यात्। वायुश्च वेगेनाभिघ्नन् सूक्ष्मान् सलि-लकणान् अन्तःशरीरं प्रवेशयति, शैत्यं तु तेषां त्वगिन्द्रियप्रवेशपर्याप्तिशदमनुभू-यते। तावता स्पर्शव्यञ्जकत्वे गन्धोपहारकस्य तस्य गन्धव्यञ्जकत्वमपि किं नेष्यते। तथाच घ्राणपार्थिवत्वानुमानमपि न सम्भवति। एवं चतुर्णां भौतिकत्वासिद्धौ तद्दृ-ष्टान्तेन श्रोत्रभौतिकत्वानुमानान्यपि निर्मूलानि।

प्रतिप्रयोगाश्च बाह्येन्द्रियाणि अभौतिकानि इन्द्रियत्वात् मनोवत्। प्रत्येक-पक्षीकारेण वा चक्षुरिन्द्रियं अतैजसं इन्द्रियत्वात् घ्राणादिवदिति। तस्मान्मनुपरा-शराद्युक्तं श्रुतिसिद्धं इन्द्रियाणामाहङ्कारिकत्वमेव युक्तम्।

ननु 'इन्द्रियाणि तन्मात्रेषु' इति श्रुत्या भौतिकत्वममीषां भातीति श्रुतिसिद्धमेवे-न्द्रियाणां भौतिकत्वमिति चेन्न। पृथिव्यप्सु प्रलीयते इत्यारभ्य वायुराकाशे प्रलीयते इति पठित्वा अनन्तरं आकाश इन्द्रियेषु इन्द्रियाणि तन्मात्रेषु तन्मात्राणि भूतादौ लीयन्ते इति श्रुतौ पठितम्। नचात्र आकाशेन्द्रियपर्याययोः मध्ये लयपदं पठितम्। नचात्रानुषङ्गः, सति गत्यन्तरेऽध्याहारवत्तस्याप्ययोगात्। सर्वत्राध्याहारे वा इन्द्रि-याणामाकाशप्रकृतित्वं सर्वोपबृंहणविरुद्धमङ्गीकृतं स्यात्। अतो वरमधिकरणत्वोक्ति-मात्रानुसारादाकाशस्येन्द्रियेषु तेषां च आकाशारम्भकतन्मात्रेषु प्रवेशविशेषाभिधा-नपरत्वमेवास्याः श्रुतेर्युक्तम्। अयं भावः, यद्यपि आकाशस्येन्द्रियैः प्रागपि सम्बन्धः, तथापि तत्तदिन्द्रियाप्यायकभूतांशानां स्वकारणलयक्रमात् आकाशदशापन्नत्वात् तदानीमिन्द्रियेष्वाकाशस्यैव सम्बन्धः, अनन्तरमाकाशे च शब्दतन्मात्रावस्थे तानी-न्द्रियाणि शब्दतन्मात्रसंसर्गीणि भवन्ति। अतस्तन्मात्राणामपि तदवस्थापन्नया तत्त-द्देशभेदविवक्षया बहुवचनोपपत्तिः। अतः तन्मात्राणि भूतादौ लीयन्ते इत्यपि वचनं गतार्थम्। अयमेव न्यायः अन्नमयं हि सौम्य मनः आपोमयः प्राणः तेजोमयी वागि-त्यादिश्रुतिषु योजनीयः। न खलु हेतुकैरपि मनसः पार्थिवत्वं कल्प्यते वायुरूपस्य प्राणस्य वाप्यत्वम्, तस्मादाप्यायनपरत्वमेव तत्र वाच्यम्।

परे तु इन्द्रियाण्यभौतिकानि नियतविषयत्वात् यदि हि चक्षुस्तैजसं स्यात् रूप-स्यैव तद्गुणत्वाद्ग्राहकं स्यान्न द्रव्यसामान्यादेरिति। एवं शेषेष्वपि नियमेन स्वगुण-

म् । तच्च द्विविधं-बुद्धीन्द्रियं, कर्मेन्द्रियं च । उभयमप्येतत् इन्द्रस्या-ऽऽत्मनश्चिह्नत्वादिन्द्रियमुच्यते । तानि च स्वसंज्ञाभिश्चक्षुरादिभिरुक्तानि । तत्र रूपग्रहणलिङ्गं चक्षुः, शब्दग्रहणलिङ्गं श्रोत्रम्, गन्धग्रहणलिङ्गं घ्राणम्, रसग्रहणलिङ्गं रसनम्, स्पर्शग्रहणलिङ्गं त्वक् इति (ज्ञानेन्द्रियाणां संज्ञा)। एवं वागादीनां कार्यं वक्ष्यति (का २८)।

एकादशमिन्द्रियमाह—

**उभयात्मकमत्र मनः, सङ्कल्पकमिन्द्रियं च साधर्म्यात् ।**
**गुणपरिणामविशेषान्नानात्वं बाह्यभेदाश्च ॥ २७ ॥**

---

ग्राहकत्वप्रसङ्गः । नचैतद्दृष्टमतो न भौतिकत्वमपि तु श्रुत्यादिसिद्धमाहङ्कारिकत्वमेव युक्तमिति ।

तद्विभजते । तच्चेत्यादिना । बुद्धीन्द्रियमिति । बुद्ध्यन्ते रूपरसगन्धस्पर्शशब्दा अनेनेतिव्युत्पत्त्या रूपरसगन्धस्पर्शशब्दसाक्षात्कारकरणमित्यर्थः । कर्मेन्द्रियमिति । कर्मसाधनमिन्द्रियमित्यर्थः । कर्माणि च वचनादीनि स्फुटीभविष्यन्ति ।

नैयायिकमते वागादीनामिन्द्रियत्वानङ्गीकारेण कथमेतन्मते तेषामपीन्द्रियत्वमुच्यते इत्याशङ्कामपनेतुमाह । उभयमप्येतदिति । एतत् पूर्वोक्तं, उभयं बुद्धीन्द्रियं कर्मेन्द्रियं च । इन्द्रस्य आत्मन इति । इन्द्रपदस्य आत्मार्थकत्वे 'इन्द्रो मायाभिः पुरुरूप ईयते' इत्यादिश्रुतिरेव प्रमाणम् । चिह्नत्वादिति । तथा च "इन्द्रियमिन्द्रलिङ्गमिन्द्रदृष्ट" इत्यादि सूत्रेण पाणिनिना पठ्यन्तादिन्द्रशब्दात् लिङ्गमित्यर्थे घस् प्रत्ययविधानात् इन्द्रियशब्दस्य इन्द्रलिङ्गार्थकत्वात् तस्य चोभयसाधारण्येन उभयोरपि इन्द्रियपदाभिधेयत्वं युक्तमेव । यद्यपि इन्द्रियपदस्य इन्द्रलिङ्गार्थकत्वे बुद्ध्यहङ्कारयोरपि तथात्वेन उक्तविभागोऽनुपपन्नः तथापि इन्द्रियपदस्य योगरूढत्वेन योगार्थस्य बुद्ध्यादिसाधारण्येऽपि सात्त्विकाहङ्कारेत्यादिपूर्वोक्तस्य रूढ्यर्थस्य तत्राभावेन नानुपपत्तिः । वागादौ तु उभयोरपि सत्त्वेन इन्द्रियत्वमक्षतमेवेति द्योतयितुं उभयमप्येतदित्यप्युक्तम् । तानि चेति । बुद्धीन्द्रियाणि कर्मेन्द्रियाणि च ।

चक्षुषो लक्षणमाह । रूपग्रहणमिति । रूपप्रत्यक्षकारणमित्यर्थः । लिङ्गमिन्द्रस्य, तथाच रूपप्रत्यक्षकारणत्वे सतीन्द्रियत्वं चक्षुरिन्द्रियस्य लक्षणम् बुद्ध्यादावतिव्याप्तिवारणायोक्तो विशेष्यभागः । एवमग्रेऽपि । एतेन चक्षुरादीन्द्रियसद्भावे रूपादिप्रत्यक्षं सकरणकं प्रत्यक्षत्वादित्यनुमानं मानमपि सूचितम् । वक्ष्यति शब्दादिषु पञ्चानामित्यादिकारिकायां इति शेषः ।

कारिकान्तरमवतारयति । एकादशमिति । अत्रेति सप्तम्यन्तस्य अर्थमाह । एकादशसु इन्द्रियेषु इति । सप्तम्या उक्तस्थले अधिकरणत्वार्थकत्वासम्भवात् सप्तमी मात्रस्यार्थमाह । मध्य इति । तथाच निर्धारणार्थेयं सप्तमीति भावः । एतेन एकादशानामिन्द्रियाणां मध्ये इत्येव वक्तुमुचितम् मध्यशब्दयोगे षष्ठ्या एव साधुत्वादि-

"उभयात्मकम्" इति । एकादशस्विन्द्रियेषु मध्ये मन उभयात्मकम्, बुद्धीन्द्रियं कर्मेन्द्रियं च, चक्षुरादीनां वागादीनां च मनोऽधिष्ठितानामेव स्वस्वविषयेषु प्रवृत्तेः ।

तदसाधारणेन रूपेण लक्षयति—"सङ्कल्पकमत्र मनः" इति । सङ्कल्पेन रूपेण मनो लक्ष्यते । आलोचितमिन्द्रियेण वस्तु 'इदम्' इति सम्मुग्धम् 'इदमेवं, नैवम्'इति सम्यक्कल्पयति–विशेषणविशेष्यभावेन विवेचयतीति यावत् । यदाहुः–

'सम्मुग्धं वस्तुमात्रं तु प्राग्गृह्णन्त्यविकल्पितम् ।
तत् सामान्यविशेषाभ्यां कल्पयन्ति मनीषिणः'–इति ।

तथा हि—

'अस्ति ह्यालोचनज्ञानं प्रथमं निर्विकल्पकम् ।

---

ति पूर्वपक्षोपि समाहितः । अथवा मध्ये इत्यस्य पूर्वं एकादशेन्द्रियाणामिति शेषः । तथा च एकादशसु इन्द्रियेषु इत्यस्यैव विवरणमेतत् ।

उभयात्मकमिति । नच मनस उभयात्मकत्वे ज्ञानेन्द्रियं कर्मेन्द्रियं चेति विभागोऽनुपपन्नः तद्धर्मयोः मनसि साङ्कर्यात् इति वाच्यम् । उपधेयसङ्करेपि उपाधेरसाङ्कर्यात् ज्ञानेन्द्रियत्वत्वादिरूपेण इन्द्रियत्वस्यैव विभजनादिति । मनस उभयात्मकत्वे हेतुमाह । चक्षुरादीनां वागादीनामिति । आदिभ्यां बुद्धीन्द्रियकर्मेन्द्रियमात्रपरिग्रहः, मनोधिष्ठितानामेवेति । मनःसंयुक्तानामेवेत्यर्थः । तथाच मनः संयोगं विना इन्द्रियाणां स्वस्वकार्याक्षमत्वेन मनसोपि उभयविधेन्द्रियत्वं सिद्धमिति भावः ।

तदसाधारणेनेति । तत् मनः, लक्षयतीत्यनेनान्वयः । असाधारणेन इन्द्रियान्तरव्यावृत्तेन, संकल्पकमिति । तथाच सङ्कल्पासाधारणकारणं मनः, एतदेवाह । सङ्कल्पेन रूपेणेति । सङ्कल्पात्मकासाधारणव्यापारेणेत्यर्थः ।

सङ्कल्पकमित्यस्य योगार्थं मनसि घटयति । आलोचितमिति । इन्द्रियेण चक्षुरादिना आलोचितम् आलोचनात्मकवृत्तिविषयीभूतं, आलोचनात्मकवृत्तेराकारमाह । सम्मुग्धमिति । सम्मुग्धम् अगृहीतसामान्यविशेषम् । सङ्कल्पस्वरूपमाह । इदमेवं नैवमिति । एवं घटत्वादिमत्, नैवं न पटत्वादिमत् अयं घटः न पट इत्याकारकं यज्ज्ञानं तदेव सङ्कल्प इत्युच्यते । कल्पयतीत्यस्यार्थमाह । विशेषणविशेष्यभावेनेति । तथाच निर्विकल्पकात्मकं ज्ञानं बाह्येन्द्रियाणां व्यापारः, सविकल्पकात्मकं तु मनस इति फलितम् ।

अत्रैव वृद्धसम्मतिमाह । यदाहुरिति । सम्मुग्धमिति । प्राक् मनसो व्यापारात् पूर्वं, बाह्येन्द्रियमात्रव्यापारे, सम्मुग्धं सामान्यविशेषरहितम् अत एव वस्तुमात्रं गृण्हन्ति । 'तत् उक्तालोचनात्मकज्ञानविषयीभूतम्, मनीषिणः मनोव्यापारवन्तः सामान्यविशेषाभ्याम् इदमेवं नैवमित्यादिरूपेण कल्पयन्ति विशेष्यविशेषणभावेन विवेचयन्तीत्यर्थः । अत्रैव भट्टपादानामपि सम्मतिमाह । अस्ति हीति । यस्तावत्

बालमूकादिविज्ञानसदृशं मुग्धवस्तुजम्–'इति ।
( श्लो॰ वा॰ प्रत्यक्षसूत्रम् १७२ )

"ततः परं पुनर्वस्तु धर्मैर्जात्यादिभिर्यथा ।
बुद्ध्याऽवसीयते साऽपि प्रत्यक्षत्वेन सम्मता ।
( श्लो॰ वा॰ प्रत्यक्षसूत्रम् १२० )

सोऽयं सङ्कल्पलक्षणो व्यापारो मनसः समानासमानजातीया-भ्यां व्यवच्छिन्दन् मनो लक्षयति ।

स्यादेतत्—असाधारणव्यापारयोगिनौ यथा महदहङ्कारौ, नेन्द्रियम्, एवं मनोऽप्यसाधारणव्यापारयोगि नेन्द्रियं भवितुमर्हतीत्यत आह—"इन्द्रियं च" इति । कुतः ? "साधर्म्यात्" । इन्द्रियान्तरैः सात्त्विकाहङ्कारोपादानत्वं च साधर्म्यम्, न त्विन्द्रलिङ्गत्वम्, महदहङ्कारयोरप्यात्मलिङ्गत्वेनेन्द्रियत्वप्रसङ्गात् । तस्माद्व्युत्पत्ति-

---

सर्वमेव ज्ञानं सविकल्पकमेव न किञ्चिन्निर्विकल्पकमस्तीत्याह । तं प्रत्याह । अस्तीति । बालानामिवास्माकमपि चक्षुःसन्निपातानन्तरं सविकल्पकात्प्रथममस्ति संमुग्धमात्रवस्तुविषयकं निर्विकल्पकं प्रतीतिसिद्धम् शुद्धवस्तुविषयम्, तदभावे हि विशिष्टबुद्धिं प्रति विशेषणज्ञानस्य कारणत्वेन जात्यादिविशिष्टज्ञानात्मकं सविकल्पकमेव न स्यात् अतः तस्याङ्गीकार आवश्यक इति भावः । एवं निर्विकल्पकस्य स्वरूपं दर्शयित्वा सविकल्पस्य प्रत्यक्षात्मकत्वानङ्गीकर्तृबौद्धमतखण्डनाय तस्यापि प्रत्यक्षत्वमाह । ततः परमिति । निर्विकल्पकात् परं जात्यादिभिः धर्मैः विकल्प्य वस्तु यया बुद्ध्याऽवसीयते सा बुद्धिरपि प्रत्यक्षमेवेत्यर्थः । मनसो लक्षणमुपसंहरति । सोयमिति । सोयं मनसः सङ्कल्पलक्षणो व्यापारः समानजातीयाः बाह्येन्द्रियादयः असमानजातीयाः घटपटादयः ताभ्यां व्यवच्छिन्दन् व्यावर्तयन् मनः लक्षयति इतरभिन्नत्वेनानुमापयतीत्यर्थः ।

इन्द्रियं चेति कारिकांशं व्याख्यातुमाशङ्कते । स्यादेतदिति । असाधारणव्यापारयोगिनौ अध्यवसायाहङ्कारात्मकासाधारणव्यापाराश्रयौ, यद्यपि मनो नेन्द्रियं असाधारणव्यापारयोगित्वादित्यनुमानं नात्र सम्भवति चक्षुरादौ व्यभिचारात् तत्रापि रूपप्रत्यक्षात्मकासाधारणव्यापारवत्त्वात्, तथापि प्रवृत्तिप्रयोजकतावच्छेदकावच्छिन्नासाधारणव्यापारे असाधारणव्यापारपदस्य तात्पर्यात् पूर्वोक्तप्रकारेणालोचनमननाहङ्काराध्यवसादीनां प्रवृत्तिप्रयोजकतया प्रवृत्तिप्रयोजकतावच्छेदकालोचनत्वादिविशिष्टालोचनमात्रस्य चक्षुराद्यसाधारणव्यापारत्वाभावेन न तेषु व्यभिचारः ।

किन्निरूपितं साधर्म्यमित्याकाङ्क्षायामाह । इन्द्रियान्तरैरिति । किमिन्द्रियान्तरैः साधर्म्यमभिप्रेतमित्यत आह । सात्त्विकेति । ननु इन्द्रलिङ्गत्वरूपं साधर्म्यं कुतो नात्राभिप्रेतमित्यत आह । न त्विन्द्रलिङ्गत्वमिति । आत्मन इन्द्रपदार्थत्वस्य पूर्वमेवावेदितत्वात् । नच तर्हि पूर्वमेतेषां इन्द्रलिङ्गत्वं कथमुक्तमत आह । तस्मादिति ।

मात्रमिन्द्रलिङ्गत्वम्, न तु प्रवृत्तिनिमित्तम्।

अथ कथं सात्त्विकाहङ्कारादेकस्मादेकादशेन्द्रियाणीत्यत आह—"गुणपरिणामविशेषान्नानात्वं बाह्यभेदाश्च" इति। शब्दाद्युपभोगसम्प्रवर्तकादृष्टसहकारिभेदात्कार्यभेदः। अदृष्टभेदोऽपि गुणपरिणाम एव। 'बाह्यभेदाश्च' इति दृष्टान्तार्थम्, यथा बाह्यभेदास्तथैतदपीत्यर्थः।

तदेवमेकादशेन्द्रियाणि स्वरूपत उक्त्वा दशानामप्यसाधारणीर्वृत्तीराह—

शब्दादिषु पञ्चानामालोचनमात्रमिष्यते वृत्तिः।
वचनादानविहरणोत्सर्गानन्दाश्च पञ्चानाम् ॥२८॥

बुद्धीन्द्रियाणां सम्मुग्धवस्तुदर्शनमालोचनमुक्तम्। "वचनादानविहरणोत्सर्गानन्दाश्च पञ्चानाम्"—कर्मेन्द्रियाणाम्। कण्ठताल्वा-

---

यस्मादिन्द्रलिङ्गत्वं महदहङ्कारसाधारणं तस्मादित्यर्थः। व्युत्पत्तिमात्रमिति। अवयवार्थ एवेत्यर्थः। तथाचेन्द्रियपदं पङ्कजादिपदवद्योगरूढमित्यर्थः। नतु प्रवृत्तिनिमित्तमिति। प्रवृत्तेः शब्दस्य निमित्तं प्रयोजकं शक्यतावच्छेदकमिति अर्थः। तस्यातिप्रसक्तत्वेन शक्यतावच्छेदकत्वासम्भवात्।

कारिकातृतीयपादं व्याख्यातुमाशङ्कते। अथ कथमिति।तथाच कारणवैलक्षण्यं विना कार्यवैलक्षण्यासम्भवात् कथं सात्त्विकाहङ्कारात्मकात् एकस्मादेव कारणात् परस्परं विजातीयानां एकादशेन्द्रियाणामुत्पत्तिरित्याशङ्कितुरभिप्रायः। मूले गुणपरिणामेत्यादि। गुणानां सत्त्वादीनां यः परिणामः धर्माधर्मरूपः तस्य विशेषाद्वैचित्र्यादित्यर्थः। अमुमेवार्थं मनसि निधायाह। शब्दाद्युपभोगेति। शब्दाद्युपभोगप्रवर्तकं प्रयोजकीभूतं यददृष्टं धर्माधर्मादि तदात्मकं यत्सहकारि तद्भेदादित्यर्थः। तथाच अहङ्कारस्यैकत्वेपि उक्तादृष्टानां भिन्नत्वेन तादृशादृष्टादिरूपसहकारिकारणवैचित्र्येण कार्यवैलक्षण्यं सङ्गतमेव। गुणपरिणामपदस्य अदृष्टार्थकत्वे युक्तिमाह। अदृष्टविशेषोपीति। शब्दाद्युपभोगप्रवर्तकादृष्टमपीत्यर्थः। पुरुषभिन्नस्य सर्वस्यैव एतन्मते गुणपरिणामस्वरूपत्वात्। बाह्यभेदाश्चेति व्याचष्टे। बाह्यभेदाश्चेति। दृष्टान्तार्थमिति। तथाच चकारो दृष्टान्तार्थः यथा बाह्यभेदा इति। तथाच यथा तामसादेकरूपादेवाहङ्कारात् गुणपरिणामविशेषरूपसहकारिभेदात् शब्दस्पर्शरूपादितन्मात्राः सम्भवन्ति तथा एकस्मादपि सात्त्विकाहङ्कारात् विलक्षणानामुत्पत्तौ न किञ्चिद्बाधकमिति।

मूले, पञ्चानां, ज्ञानेन्द्रियाणां। रूपादिष्विति। रूपादिविषयेषु, आदिना रसादिपरिग्रहः। बुद्धीन्द्रियाणामिति। उक्तमिति। सम्मुग्धं वस्तुमात्रं तु प्राग्गृह्णन्त्यविकल्पितमित्यादिनेत्यर्थः।

चक्षुरादीनां इन्द्रियाणां चक्षुरादिस्थानत्वेन स्पष्टतया वागिन्द्रियस्य स्वरूपमाह। कण्ठताल्वादीति। आदिना "अष्टौ स्थानानि वर्णानामुरः कण्ठः शिरस्तथा। जिह्वा

दिस्थानमिन्द्रियं वाक्, तस्या वृत्तिर्व्यापारः वचनम् , ज्ञानेन्द्रियाणां वृत्तयः स्पष्टाः ।

अन्तःकरणत्रयस्य वृत्तिमाह—

**स्वालक्षण्यं वृत्तिस्त्रयस्य सैषा भवत्यसामान्या ।**
**सामान्यकरणवृत्तिः प्राणाद्या वायवः पञ्च ॥२९॥**

"स्वालक्षण्यम्" इति । स्वालक्षण्यं वृत्तिस्त्रयस्य । स्वमसाधारणं लक्षणं येषां तानि स्वलक्षणानि-महदहङ्कारमनांसि, तेषां भावः स्वालक्षण्यम् , तच्च स्वानि स्वानि लक्षणान्येव । तद्यथा—महतोऽध्यवसायः, अहङ्कारस्याऽभिमानः, सङ्कल्पो मनसो वृत्तिः-व्यापारः ।

वृत्तिद्वैविध्यं साधारणासाधारणत्वाभ्यामाह-"सैषा भवत्यसामान्या" । असाधारणी । "सामान्यकरणवृत्तिः प्राणाद्या वायवः पञ्च" । सामान्या चाऽसौ करणवृत्तिश्चेति । त्रयाणामपि करणानां पञ्च वायवो जीवनं वृत्तिः, तद्भावे भावात् तदभावे चाऽभावात् । तत्र प्राणो नासाग्रहृन्नाभिपादाङ्गुष्ठवृत्तिः, अपानः कृकाटिकापृष्ठपादपायूपस्थपार्श्ववृत्तिः, समानो हृन्नाभिसर्वसन्धिवृत्तिः, उदानो हृत्कण्ठतालुमूर्धभ्रूमध्यवृत्तिः, व्यानस्त्वग्वृत्तिरिति पञ्च वायवः ।

---

मूलं च दन्ताश्च नासिकोष्ठौ च तालु च । इति पाणिनिशिक्षोक्तानां उर आदीनां परिग्रहः । स्पष्टमन्यदिति । पाणिस्थानमिन्द्रियं पाणिः तस्य आदानं वृत्तिः पादस्य विहरणं पाय्विन्द्रियस्य उत्सर्गः उपस्थेन्द्रियस्य आनन्दः वृत्तिरिति स्पष्टमित्यर्थः ।

अग्रिमकारिकोक्तत्रयपदार्थं सूचयन्कारिकान्तरमवतारयति । अन्तःकरणत्रयस्येति । व्याचष्टे । स्वमिति । स्वं स्वीयमेव तथाचासाधारणमित्यर्थः । लक्षणं धर्मः, तच्च स्वालक्षण्यं च, स्वानि स्वकीयानि । तान्येवाह । महतोऽध्यवसाय इति । वृत्तिरिति अग्रिमेण सम्बन्धः । एवमग्रेऽपि । प्राणादयः पञ्च वायवः कस्य करणस्य वृत्तिरित्याशङ्कायामाह । त्रयाणामपीति । महदहङ्कारमनसामित्यर्थः । तथाच अध्यवसायादिरूपा वृत्तिरेकैककरणस्यैव इति सा असाधारणीत्युच्यते प्राणादिवृत्तिस्तु मिलितानां अन्तःकरणानां त्रयाणामपीति सा साधारण्येव । प्राणादयः पञ्च वायव एव जीवनमित्युच्यन्ते प्राणाभावे जीवतीत्याद्यप्रयोगात् । यद्यपि वायुर्न वृत्तिपदवाच्यः तस्य तन्मात्रजन्यभूतविशेषरूपत्वात् तथापि प्राणसञ्चारे हेतुभूतो जीवनयोनियत्नेन नैयायिकाद्यभिमतो व्यापार एवात्र प्राणादिशब्देनोच्यते । ननु तस्य अन्तःकरणत्रयवृत्तित्वे मानाभाव इत्यत आह । तद्भावे भावात् इत्यादि । अन्तःकरणत्रयसद्भावे भावात् प्राणादिव्यापारस्य सत्त्वात् अन्तःकरणाद्यसत्त्वे च प्राणव्यापाराभावात् तथाच अन्वयव्यतिरेकाभ्यां तस्य अन्तःकरणत्रयवृत्तित्वं सिद्धमिति भावः ।

प्राणस्यैकत्वेन तस्य पञ्चत्वोक्तिरसङ्गतेत्याशङ्कायां स्थानभेदेन तस्य पञ्चसंज्ञा भवन्तीत्याह । तत्रेति । कृकाटिका घाटा, गलघण्टी इति प्रसिद्धा । अत्र प्राणादिसंज्ञा

चतुर्विधकरणस्याऽसाधारणीषु वृत्तिषु क्रमाक्रमौ सप्रकारावाह—

युगपच्चतुष्टयस्य तु वृत्तिः क्रमशश्च तस्य निर्दिष्टा ।
दृष्टे तथाऽप्यदृष्टे त्रयस्य तत्पूर्विका वृत्तिः ॥ ३० ॥

"युगपत्" इति । दृष्टे यथा-यदा सन्तमसान्धकारे विद्युत्सम्पातमात्राद्व्याघ्रमभिमुखमतिसन्निहितं पश्यति, तदा खल्वस्याऽऽलोचनसङ्कल्पाभिमानाध्यवसाया युगपदेव प्रादुर्भवन्ति, यतस्तत उत्प्लुत्य तत्स्थानादेकपदे ऽपसरति ।

क्रमशश्च", यदा मन्दालोके प्रथमं तावद्वस्तुमात्रं सम्मुग्धमालोचयति, अथ प्रणिहितमनाः "कर्णान्ताकृष्टसशरशिञ्जितमण्डलीकृतकोदण्डः प्रचण्डतरः पाटच्चरोऽयम्'इति निश्चिनोति, अथ च 'मां प्रत्येति'इत्यभिमन्यते, अथाऽध्यवस्यति—'अपसरामीतः स्थानात्' इति ।

परोक्षे त्वन्तःकरणत्रयस्य बाह्येन्द्रियवर्जं वृत्तिरित्याह-अदृष्टे त्र-

---

अन्वर्थका एवैतेषाम् । तथाहि मुखनासिकाभ्यां निःसरणात् प्राणः । मलादीनामपनयनादपानः, अशितपीतादेः समं आनुरूप्येण तत्तत्स्थलेषु नयनात् समानः, ऊर्ध्वं नयनादुदानः, नाडीद्वारेण सर्वत्र सञ्चरणाद्व्यानः, इति पञ्चसंज्ञा भवन्ति ।

चतुर्विधकरणस्येति । अन्तःकरणत्रयबाह्यकरणेतिचतुर्विधकरणस्येत्यर्थः । क्रमः पौर्वापर्यम् , अक्रमः एककालीनत्वम् ।

व्याचष्टे । दृष्ट इति । बाह्येन्द्रियजन्यप्रत्यक्षविषयीभूते इत्यर्थः । आलोचनाद्यात्मका चतस्रो वृत्तयः युगपत् उत्पद्यन्ते क्रमेण चोत्पद्यन्ते इति साङ्ख्याचार्यैरुक्तम् , तत्र युगपद्वृत्तिस्थलं दृष्टान्तेन प्रदर्शयति । यथेति । सन्तमसान्धकारे गाढान्धकारे, आलोचनेत्यादि । निर्विकल्पकसविकल्पकेत्यादयः, एताश्च बाह्येन्द्रियमनोहङ्कारबुद्धिवृत्तयः ।

तासां वृत्तीनां यौगपद्ये हेतुमाह । यत इति । उत्प्लुत्य उड्डीय, एकपदे झटिति, अपसरति गच्छति, तथाच यौगपद्याभावे दर्शनाव्यवहितोत्तरकाले गमनानुकूला प्रवृत्तिर्न स्यात् अभिमानाध्यवसायादीनामनुत्पन्नत्वात् अतः तस्मिन्नेव काले आलोचनादीनां सर्वेषामपि उत्पत्तिरङ्गीकर्तव्येति यौगपद्यं सिद्धमेवेत्यर्थः । एतेन दीर्घशष्कुलीभक्षणादौ बाह्येन्द्रियाणामपि वृत्तयः युगपदेव भवन्ति एतन्मते मनसोऽणुत्वाभावेन सर्वेषु इन्द्रियेषु युगपन्मनोधिष्ठानसम्भवात् इति सूचितम् ।

क्रमेण वृत्तिस्थलमाह । क्रमशश्चेति । यथेति पूर्वोक्तमनुषज्यते । प्रणिहितमना इत्यनेन मानसोयं व्यापार इति सूचितम् । कर्णान्तेति । कर्णान्तम् श्रोत्रपर्यन्तम् , आकृष्टः सशरशिञ्जितः आरोपितबाणः कोदण्डः कार्मुकं येन एवंभूत इत्यर्थः । प्रचण्डतरः क्रूरतरः, पाटच्चरः चौरः इति निश्चिनोति , विशेष्यविशेषणभावेन विवेचयति । अहङ्कारस्य वृत्तिमाह । अथ मामिति । बुद्धिवृत्तिमाह । अथेति ।

त्रयस्येत्यस्यार्थमाह । अन्तःकरणत्रयस्येति । तत्पूर्विकेत्यस्यार्थमाह । दृष्टपूर्विके-

यस्य तत्पूर्विका वृत्तिः" इति । अन्तःकरणत्रयस्य युगपत्क्रमेण च वृत्तिर्दृष्टपूर्विकेति । अनुमानागमस्मृतयो हि परोक्षेऽर्थे दर्शनपूर्वाः प्रवर्तन्ते, नाऽन्यथा । यथा दृष्टं तथाऽदृष्टेऽपीति योजना ।

स्यादेतत्-चतुर्णां त्रयाणां वा वृत्तयो न तावत्तन्मात्राधीनाः, तेषां सदातनत्वेन वृत्तीनां सदोत्पादप्रसङ्गात्, आकस्मिकत्वे तु वृत्तिसङ्करप्रसङ्गो नियमहेतोरभावादित्यत आह—

**स्वां स्वां प्रतिपद्यन्ते परस्पराकूतहेतुकां वृत्तिम् ।**
**पुरुषार्थ एव हेतुर्न केनचित्कार्यते करणम् ॥ ३१ ॥**

"स्वाम्" इति । करणानीति शेषः । यथा हि बहवः पुरुषाः शाक्तीकयाष्टीकधानुष्ककार्पाणिकाः कृतसङ्केताः परावस्कन्दनाय प्रवृत्ताः तत्राऽन्यतमस्याऽऽकूतमवगम्याऽन्यतमः प्रवर्तते, प्रवर्तमानस्तु शाक्तीकः शक्तिमेवाऽऽदत्ते, न तु यष्ट्यादिकम्, एवं याष्टीकोऽपि

---

तिः अनुमानादीनां परोक्षाणां कथं दृष्टपूर्वकत्वं तत्राह । अनुमानागमस्मृतयो हीति । दर्शनपूर्वा इति । अनुमानस्य हेतुदर्शनाधीनत्वात्, आगमस्य शब्दप्रत्यक्षात्मकदर्शनाधीनत्वात्, स्मरणस्य प्रत्यक्षात्मकानुभवजन्यस्य दर्शनाधीनत्वं स्पष्टमेव अनुमित्याद्यात्मकानुभवजस्य तु साक्षाद्दर्शनजन्यत्वाभावेऽपि परम्परया दर्शनप्रयोज्यत्वाद्दर्शनाधीनत्वं बोध्यम् । तथाप्यदृष्टे इति मूले अपिकारो भिन्नक्रम इत्याशयेनाह । यथा दृष्टे तथाऽदृष्टेऽपीति । वृत्तियौगपद्यायोगेपद्ये बोध्ये ।

कारिकान्तरमवतारयितुमाशङ्कते । स्यादेतदिति । त्रयाणां बाह्येन्द्रियमपहायान्तःकरणत्रयाणाम् । तन्मात्राधीना इति । तदेव तन्मात्रं तदधीनाः तथाच अहङ्कारादिमात्रजन्या नेत्यर्थः । तासां अहङ्कारादिमात्रजन्यत्वे दोषमाह । तेषामिति । अन्तःकरणबाह्येन्द्रियादीनामित्यर्थः । सदातनत्वेन बहुकालं अवस्थायित्वेन, तेन तेषां नित्यत्वाभावेऽपि न क्षतिः । सदोत्पादप्रसङ्गादिति । अन्तःकरणादिरूपस्य कारणस्य बहुकालं सत्त्वेन यावदन्तःकरणकालं वृत्त्युत्पादप्रसङ्गादित्यर्थः । ननु उक्तापत्त्या तन्मात्राणामपि कारणत्वं मास्तु अकस्मादेव तासामुत्पत्तिः स्यादित्याशयेनाशङ्कते । आकस्मिकत्वे त्विति । नियतकारणानियम्यत्व इत्यर्थः । वृत्तिसङ्करप्रसङ्गः अन्धादीनामपि रूपादिविषयकं प्रत्यक्षं रसनेन्द्रियसत्त्वेऽपि स्यात् तत्तदिन्द्रियाभावेऽपि अपरापरेन्द्रियसत्त्वे सकलवृत्त्युत्पत्तिः स्यादिति यावत् । नियमहेतोरिति । नियामकहेतोरनङ्गीकारात् इति भावः ।

उक्तकारिकायां प्रतिपद्यन्ते इति क्रियायाः कर्तृवाचकपदाभावेन तद्वाचकपदमध्याहरति । करणानि इति । करणानि अन्योन्याभिप्रायहेतुकां स्वां स्वां स्वकीयामेव वृत्तिं प्रतिपद्यन्ते प्राप्नुवन्ति न परकीयामित्यर्थः । अमुमेवार्थं दृष्टान्तेन स्पष्टयति । यथा हीति । शाक्तीक इति । शक्तिः आयुधमस्यास्तीति शाक्तीकः, एवमग्रेऽपि । कृतसङ्केता इति । अथामुकस्य हननमस्माभिः कर्तव्यमिति कृतसङ्केताः, परावस्कन्दनाय परस्य शत्रोरवस्कन्दनाय हननाय । आकूतम् अभिप्रायम् ।

यष्टिमेव, न शस्त्र्यादिकम् । तथाऽन्यतमस्य करणस्याऽऽकूतात् स्व-कार्यकरणाभिमुख्यादन्यतमं करणं प्रवर्तते । तत्प्रवृत्तेश्च हेतुमत्त्वान्न वृत्तिसङ्करप्रसङ्ग इत्युक्तम्—"स्वां स्वां प्रतिपद्यन्ते" इति ।

स्यादेतत्—याष्टीकादयश्चेतनत्वात् परस्पराकूतमवगम्य प्रवर्तन्त इति युक्तम् । करणानि त्वचेतनानि तस्मान्नैवं प्रवर्तितुमुत्सहन्ते । तेनैषामधिष्ठात्रा करणानां स्वरूपसामर्थ्योपयोगाभिज्ञेन भवितव्यमित्यत आह—"पुरुषार्थ एव हेतुः, न केनचित्कार्यते करणम्" इति । भोगापवर्गलक्षणः पुरुषार्थ एवाऽनागतावस्थः प्रवर्तयति करणानि, कृतमत्र तत्स्वरूपाभिज्ञेन कर्त्रा । एतच्च "वत्सविवृद्धिनिमित्तम्" ( का० ५७ ) इत्यत्रोपपादयिष्यते ।

"न केनचित् कार्यते करणम्" इत्युक्तम् । तत्र करणं विभजते—

**करणं त्रयोदशविधं तदाहरणधारणप्रकाशकरम् ।**
**कार्यं च तस्य दशधाऽऽहार्यं धार्यं प्रकाश्यं च ॥३२॥**

"करणं त्रयोदशविधम्" इति । इन्द्रियाण्येकादश बुद्धिरहङ्कार-

---

दार्ष्टान्तिके योजयति । तथेति । यथा याष्टीकादयः यष्ट्यादिव्यापारमेव कुर्वन्ति एवमेवेत्यर्थः । अभिप्रायात्मकस्य आकूतस्य करणेऽसम्भवेन प्रकृते आकूतपदार्थमाह । स्वकार्यकारणाभिमुख्यादिति । स्वस्य यत्कार्यं तत्कारणस्य सन्निहितत्वादित्यर्थः । उत्तरात्याङ्काकारे वृत्तिसङ्करप्रसङ्गो न भवतीत्याह । तत्प्रवृत्तेश्चेति । करणप्रवृत्तेश्चेति । हेतुमत्त्वादिति । परस्पराकूतरूपहेतुजन्यत्वादित्यर्थः । तथाच तासामाकस्मिकत्वा-भावेन न तत्प्रयुक्तवृत्तिसङ्करप्रसङ्गोऽत्र सम्भवतीत्यर्थः ।

द्वितीयार्धं व्याख्यातुमाशङ्कते । स्यादेतदिति । तेनैषामिति । करणानामचेतनत्वेन करणानामाकूतमवगम्य प्रवृत्त्यसम्भवेन करणानामधिष्ठाता कश्चनावश्यमङ्गीकर्तव्य इत्यर्थः । अस्तु जीव एवाधिष्ठातेत्याशङ्कां निराकर्तुमाह । स्वरूपसामर्थ्योपयोगेत्या-दि । स्वरूपं सामर्थ्यं उपयोगश्च तेषां अभिज्ञेन स्वरूपादिविषयकप्रत्यक्षज्ञानवतेत्य-र्थः । तथा च बुद्ध्यादीनामव्यक्ततया अतीन्द्रियत्वेन तद्विषयकप्रत्यक्षज्ञानवत्स्वरूप-मधिष्ठातृत्वं जीवे न सम्भवति ईश्वरस्तु अनङ्गीकृत एव भवतीत्यभिप्रायः ।

न च पुरुषार्थस्य कारणत्वं न सम्भवति कार्यपूर्ववृत्तित्वाभावात बुद्ध्यादिव्या-पारानन्तरमेव तदुत्पत्तेरित्यत आह । अनागतावस्थ इति । तथा च सत्कार्यस्य पूर्वं व प्रसाधितत्वेन अनागतावस्थः पुरुषार्थः कार्यपूर्वक्षणे वर्तत एवेति नोक्तदो-षावकाशः । कृतम् अलम्, तत्स्वरूपाभिज्ञेन महत्तत्त्वादिविषयकप्रत्यक्षज्ञानाश्रयेण, ननु कार्यमात्रं प्रति कर्तुः कारणत्वेन कथं तेन विना एतदुत्पत्तिः सम्भवति इत्यत आह । एतच्चेति । पुरुषार्थेन एव कार्यमुत्पद्यते नतु तत्र कर्तुरपेक्षावश्यकत्वमित्येतत्, उपपादयिष्यते युक्त्या व्यवस्थापयिष्यते ।

दण्डादीनामपि घटादिकं प्रति करणत्वात् तस्याविभाजनादाह । तत्रेति । पूर्वोक्त-

श्चेति त्रयोदशप्रकारं करणम्। कारकविशेषः करणम्, न च व्यापारावेशं विना कारकत्वमिति व्यापारावेशमाह। "तदाहरणधारणप्रकाशकरम्" यथायथम्। तत्र कर्मेन्द्रियाणि वागादीन्याहरन्ति—यथास्वमुपाददते, स्वव्यापारेण व्याप्नुवन्तीति यावत्, बुद्ध्यहङ्कारमनांसि तु स्ववृत्त्या प्राणादिलक्षणया धारयन्ति। बुद्धीन्द्रियाणि च प्रकाशयन्ति।

आहरणधारणादिक्रियाणां सकर्मकतया किं कर्म कतिविधं चेत्यत आह—"कार्यं च तस्य" इति। कार्यं तस्य त्रयोदशविधस्य करणस्य दशधा, आहार्यं धार्यं प्रकाश्यं च। आहार्यं व्याप्यम्। कर्मेन्द्रियाणां वचनादानविहरणोत्सर्गानन्दाः यथायथं व्याप्याः, ते च यथायथं दिव्यादिव्यतया दशेत्याहार्यं दशधा।

एवं धार्यमप्यन्तःकरणत्रयस्य प्राणादिलक्षणया वृत्त्या शरीरम्, तच्च पार्थिवादिपाञ्चभौतिकम्। शब्दादीनां पञ्चानां समूहः पृथिवी, ते च पञ्च दिव्यादिव्यतया दशेति धार्यमपि दशधा।

एवं बुद्धीन्द्रियाणां शब्दस्पर्शरूपरसगन्धा यथायथं व्याप्याः, ते च यथायथं दिव्यादिव्यतया दशेति प्रकाश्यमपि दशधेति।

त्रयोदशविधकरणेऽवान्तरविभागं करोति—

**अन्तःकरणं त्रिविधं दशधा बाह्यं त्रयस्य विषयाख्यम्।**
**साम्प्रतकालं बाह्यं त्रिकालमाभ्यन्तरं करणम्॥३३॥**

"अन्तःकरणम्" इति। अन्तःकरणं त्रिविधम्—'बुद्धिरहङ्कारो म-

---

रिकोक्तमित्यर्थः। द्वितीयपादं व्याख्यातुमाह। कारकविशेष इति। कर्त्रादिषट्सु कारकेषु मध्ये फलायोगव्यवच्छिन्नं यत्कारकं तदित्यर्थः। व्यापारावेशः व्यापाराश्रयत्वं, व्यापारवत एव कारकत्वात्। करणमात्रस्य आहरणधारणप्रकाशात्मकव्यापारकरत्वाभावेनाह। यथायथमिति। यथायोग्यमित्यर्थः। तत्रैव योग्यतामाह। कर्मेन्द्रियाणीति। आदानरूपस्याहरणस्य यावत्कर्मेन्द्रियव्यापाराभावात् प्रकृते आहरणपदार्थमाह। यथास्वमिति। स्वस्वविषयं व्याप्नुवन्ति इत्यर्थः। धारयन्ति, देहमिति शेषः।

कर्मेन्द्रियव्याप्यानां वचनादीनां पञ्चत्वेन कथं दशधात्वं अतस्तद्दर्शयति। ते च दिव्यादिव्यतयेति। दिव्याः देवभोग्याः, अदिव्याः अस्मदादिभोग्याः। व्याप्या इति। विषयाः प्रकाश्या इति यावत्।

सम्प्रति त्रयोदशविधकरणानामवान्तरविभागप्रतिपादनपरं कारिकान्तरमवतारयति। त्रयोदशविध इति। अवान्तरविभागः करणत्वसाक्षाद्व्याप्यधर्मपुरस्कारेण धर्मिप्रतिपादनमित्यर्थः।

त्रिविधमिति कारिकाभागोक्तान् अन्तःकरणविशेषान् नामतो निर्दिशति। बुद्धिः

नः' इति, शरीराभ्यन्तरवर्तित्वादन्तःकरणम् ।

"दशधा बाह्यं"—करणं, "त्रयस्य"—अन्तःकरणस्य "विषयाख्यम्"—विषयमाख्याति—विषयसङ्कल्पाभिमानाध्यवसायेषु कर्तव्येषु द्वारीभवति। तत्र बुद्धीन्द्रियाण्यालोचनेन, कर्मेन्द्रियाणि तु यथास्वं व्यापारेण ।

बाह्यान्तरयोः करणयोर्विशेषान्तरमाह—"साम्प्रतकालम्" इति ।

---

रहङ्कारो मन इतीति। एतेषां अन्तःकरणपदार्थत्वे हेतुमाह। शरीराभ्यन्तरवर्तित्वादिति। तथा च अन्तःकरण इति संज्ञा न पारिभाषिकी अपि तु यौगिक्येवेति भावः। दशधा बाह्यमिति। पञ्च ज्ञानेन्द्रियाणि पञ्च कर्मेन्द्रियाणि चेति दशविधानि करणानि बाह्यानि इत्यर्थः। बाह्यानां करणानां अन्तःकरणेभ्यो बाह्यत्वरूपं विशेषमुक्त्वा विशेषान्तरमाह। त्रयस्येति। त्रयस्येत्यस्यार्थमाह। अन्तःकरणस्येति। विषयमाख्याति इति। विषयं व्यापारं आख्याति जनयति। एतदेवाह। विषयसङ्कल्पेत्यादि। विषयाः व्यापारभूता ये सङ्कल्पाभिमानाध्यवसायाः तेषु कर्तव्येषु कार्येषु द्वारीभवति प्रयोजकं भवतीत्यर्थः। तत्र बुद्धीन्द्रियाणां उक्तव्यापारेषु प्रयोजकत्वं दर्शयति। तत्रेति। दशविधेषु बाह्येषु करणेष्वित्यर्थः। आलोचनेनेति। द्वारीभवतीति पूर्वोक्तमनुषज्यते। तथाच आलोचनस्य सङ्कल्पं प्रति कारणत्वेन तम्प्रति च बाह्येन्द्रियाणां कारणत्वेन बाह्येन्द्रियाणां परम्परया कारणत्वरूपं प्रयोजकत्वं सङ्गतमेव। अत्रेदमवधेयम्, यत्र युगपच्चतुष्टयस्य तु इत्यादिना दर्शितस्थलविशेषे युगपदेव आलोचनादीनां सत्त्वेन न आलोचनद्वारा बाह्येन्द्रियाणां कारणत्वं सम्भवति तादृशस्थलेपि बाह्येन्द्रियाणां उक्तचतुर्विधव्यापारम्प्रत्यपि साक्षादेव कारणत्वसत्त्वात् बाह्येन्द्रियाणां तादृशव्यापारप्रयोजकत्वं युक्तमेव। एवं च उक्तस्थले प्रयोजकत्वं कारणतत्कारणसाधारणं बाध्यम्। साक्षात्कारणत्वस्य युगपच्चतुष्टयस्येत्यादिना पूर्वं प्रतिपादनेन सिद्धतया परम्परया कारणत्वं दर्शयितुं ग्रन्थकृता बाह्येन्द्रियाण्यालोचनेनेत्याद्युक्तमिति। न च अन्तःकरणप्रवृत्ति प्रयोजकत्वं मनसि अतिव्याप्तं तस्य सङ्कल्पं प्रति कारणत्वात् तद्द्वारा च इतरवृत्तिष्वपि कारणत्वादिति वाच्यम्। मनसः सङ्कल्पस्वरूपतया तस्य तम्प्रत्यकारणत्वात्, अत एव स्वालक्षण्यं वृत्तिरित्याद्युक्तमिति।

ननूक्तरीत्या बाह्येन्द्रियाणां उक्तव्यापारप्रयोजकत्वेपि कर्मेन्द्रियाणां कथं तत्प्रयोजकत्वं तेषामालोचन प्रत्यकारणत्वेन तद्द्वारा सङ्कल्पजनकत्वासम्भवात् इत्यत आह। कर्मेन्द्रियाणि त्विति। वागादीनि यथास्वं स्वव्यापारेण वचनादिना। द्वारीभवन्तीत्यत्राप्यनुषज्यते। अयमभिप्रायः, कर्मेन्द्रियाणि यथायथं वचनादीनि पदार्थान्युत्पादयन्ति ततश्च तैरेव पदार्थैस्तेषां आलोचनात्मकं ज्ञानं जायते ततश्च सङ्कल्पादयो भवन्तीत्यनया रीत्या परम्परया कारणत्वं सङ्कल्पादिकं प्रति वागादीनामप्यस्त्येवेति तेषामपि उक्तव्यापारप्रयोजकत्वमक्षतमेव।

कारिकाद्वितीयार्धं व्याख्यातुमाह। बाह्यान्तरयोः करणयोरिति। विशेषान्तरम् बाह्यत्वाभ्यन्तरत्व अन्तःकरणप्रवृत्तिप्रयोजकत्वाप्रयोजकत्व रूपविशेषभिन्नं विशेषम्।

वर्तमानकालं बाह्यमिन्द्रियम् । वर्तमानसमीपमनागतमतीतमपि वर्तमानम्, अतो वागपि वर्तमानकालविषया भवति । "त्रिकालमाभ्यन्तरं करणम्" इति । तद्यथा—नदीपूरभेदादभूद्वृष्टिः; अस्ति धूमादग्निरिह नगनिकुञ्जे, असत्युपघातके पिपीलिकाण्डसञ्चरणाद्भविष्यति वृष्टिरिति, तदनुरूपाश्च सङ्कल्पाभिमानाध्यवसाया भवन्ति ।

कालश्च वैशेषिकाभिमत एको न अनागतादिव्यवहारभेदं प्रवर्त

---

वर्तमानकालमिति । वर्तमानः कालो यस्य विषयतया यत्सम्बन्धी इति व्युत्पत्त्या वर्तमानकालविषयकमित्यर्थः । वर्तमान इति निर्देशः वर्तमानमात्रवचनः तथाच वर्तमानमात्रविषयकत्वं बाह्येन्द्रियाणां विशेषः इति पर्यवसन्नम् । अन्यथा अन्तःकरणानामपि त्रिकालविषयकत्वेन वर्तमानविषयकत्वसत्त्वात् तेष्वतिव्याप्त्यापत्तेः ।

नच सम्बद्धं वर्तमानं च गृह्यते चक्षुरादिना इति नियमेन चक्षुरादीनां ज्ञानेन्द्रियाणां वर्तमानविषयकत्वसत्त्वेऽपि कर्मेन्द्रियाणां वागादीनां विषयीभूतस्य वचनादेः तादृशेन्द्रियजन्यत्वेन वर्तमानविषयकत्वाभावेन तत्राव्याप्तिरित्याशङ्कां वर्तमानपदस्य वर्तमानतत्समीपान्यतरार्थकतामङ्गीकुर्वन्निराकरोति । वर्तमानसमीपमिति । तथा च वर्तमानसमीपस्यानागतस्यापि वर्तमानपदार्थत्वेन शब्दोच्चारणविषयस्य वागिन्द्रियस्यापि वर्तमानविषयकत्वमप्रत्यूहमेवेति । आभ्यन्तरकरणानां त्रिकालविषयत्वं स्पष्टयति । तद्यथेति । तत् त्रिकालविषयत्वम् । नदीपूरमात्रस्य नदीरोधादिनापि सम्भवेन तस्य वृष्टिव्यभिचारितया न तत्साधकत्वं सम्भवतीत्यत उक्तम् भेदेति । नदीपूरविशेषादित्यर्थः । विशेषश्च बहुतरफेनरजस्वलजलवत्त्वादिरूपः, तस्य तु वृष्ट्यव्यभिचारितया तत्साधकत्वं सम्भवत्येव । इदं चातीतविषयकस्योदाहरणम् । वर्तमानविषयकत्वं अन्तःकरणानां दर्शयति । अस्ति धूमादग्निरिति । नगनिकुञ्जे लतादिपिहितोदरे पर्वतप्रदेशे, एतेन सिद्ध्यभावसत्त्वात् पक्षतासम्पत्तिः सूचिता । भविष्यविषयमनुमानमाह । असत्युपघात इति । वृष्टिमूलकारणे महाभूतसंक्षोभे सति पार्थिवोष्मणा पीड्यमानाः पिपीलिकाः स्वान्यण्डानि गृहीत्वा इतस्ततः सञ्चरन्ते तथाविधेन सञ्चारेण भविष्यत्कालीना वृष्टिरनुमीयते इति हि वस्तुस्थितिः, तत्र च पिपीलिकाण्डसञ्चरणस्य तद्गृहोपघातादिनापि सम्भवेन तथाविधोपघातजन्यस्य तत्सञ्चरणस्य वृष्टिव्यभिचारित्वेन तत्साधकत्वासम्भवादाह । असत्युपघात इति । तथाविधोपघातासमानकालीनेत्यर्थः । भवतूक्तरीत्या अनुमानस्य त्रिकालविषयत्वं तथापि तेषामन्तःकरणत्रयस्य कथं त्रिकालविषयत्वमित्यत आह । तदनुरूपाश्चेति । तथाविधातीताद्यनुगुणा एवेत्यर्थः । सङ्कल्पेत्यादि मन आदीनां त्रयाणां वृत्तिप्रदर्शनम् ।

ननु मूलप्रकृतिरविकृतिरित्यादि कारिकायां कालरूपतत्त्वान्तरानुपपादनात् साम्प्रतकालं त्रिकालमित्यादि कालोल्लेखः कालरूपतत्त्वान्तरमभ्युपेत्य न सङ्गच्छते तादृशोल्लेखविषयस्यासिद्धेः इत्याशङ्कां निराकरोति । कालश्चेति । अनागतादिव्यवहारभेदं प्रवर्तयितुं कालो नार्हतीति इत्यत्र हेतुगर्भं विशेषणं । एक इति । तथा च एकस्य अनागतादिव्यवहारभेदप्रवर्तकत्वासम्भवात् । वैशेषिकाभिमतः कालः त्रिकालमित्यादि कालोल्लेखविषयो न सम्भवति तस्य अस्माभिरनभ्युपगमात् । न च

यितुमर्हति तस्मादयं यैरुपाधिभेदैरनागतादिभेदं प्रतिपद्यते, सन्तु त-एवोपाधयः, येऽनागतादिव्यवहारहेतवः, कृतमत्राऽन्तर्गडुना कालेनेति साङ्ख्याचार्याः । तस्मान्न कालरूपतत्त्वान्तराभ्युपगम इति ।

साम्प्रतकालानां बाह्येन्द्रियाणां विषयं विवेचयति—

**बुद्धीन्द्रियाणि तेषां पञ्च विशेषाविशेषविषयाणि ।**
**वाग्भवति शब्दविषया शेषाणि तु पञ्चविषयाणि ॥३४॥**

"बुद्धीन्द्रियाणि" इति । बुद्धीन्द्रियाणि" तेषां"-दशानामिन्द्रियाणां मध्ये "पञ्च," विशेषाविशेषविषयाणि" विशेषाः—स्थूलाः शब्दादयः शान्तघोरमूढरूपाः पृथिव्यादिरूपाः, अविशेषास्तन्मात्राणि सूक्ष्माः शब्दादयः । मात्रग्रहणेन स्थूलभूतमपाकरोति । विशेषाश्च अविशेषाश्च विशेषाविशेषाः त एव विषया येषां बुद्धीन्द्रियाणां तानि

---

कालस्य एकत्वेपि उपाधिभेदात् अनागतादिव्यवहारभेदप्रवर्तकत्वे न कापि क्षतिरिति अनागतादि व्यवहारप्रवर्तकस्य कालरूपतत्त्वान्तरस्य स्वीकार आवश्यक एवेति कुतस्तदनभ्युपगम इत्यत आह । तस्मादिति । यस्मात् एकस्य कालस्य व्यवहारभेदप्रवर्तकत्वं न सम्भवति तस्मादित्यर्थः । अयं वैशेषिकाभिमतः कालः यैः उपाधिभेदैः कार्यप्रागभाव कार्यप्रध्वंस रविक्रियादिरूपैः । अनागतादीत्यादिना अतीतवर्तमानक्षणमुहूर्तादिपरिग्रहः । सन्त्विति । त एवानागतादिव्यवहारहेतव उपाधयः कालपदार्थाः सन्तु अन्तर्गडुना अनर्थकेन कालेन कालाख्यतत्त्वान्तरेण, अत्र अतीतादिव्यवहारे कृतम् अलम्, तथाच अतीतादिव्यवहारकारणत्वं कालस्य यत् वैशेषिकैरुच्यते तन्न युक्तमिति कालाख्यतत्त्वान्तरमनभ्युगम्यते साङ्ख्याचार्यैरित्यर्थः । उपसंहरति । तस्मादिति ।

साम्प्रतकालं बाह्यमित्यादि पूर्वकारिकायां बाह्येन्द्रियाणां साम्प्रतकालविषयत्वप्रतिपादनात् बाह्येन्द्रियेषु केषामिन्द्रियाणां किं विषयमित्याशङ्कायां कारिकान्तरमवतारयति । साम्प्रतकालानामिति ।

तेषामित्यस्य विवरणे दशानामिन्द्रियाणां मध्ये इति । पञ्चेति बुद्धीन्द्रियाणां विशेषणम् । विशेषाविशेषविषयाणीत्यत्र विशेषपदार्थं माह । विशेषाः स्थूला इति । स्थूलशब्दादीनां स्थूलत्वे प्रमाणं शान्तघोरमूढरूपा इति । तथाच शान्तघोरमूढात्मकानां पृथिव्यादीनामस्मदादिप्रत्यक्षविषयत्वात् स्थूलत्वं, अत एव च तत्र विशेषत्वमिति भावः । अविशेषपदार्थमाह । अविशेषास्तन्मात्राणीति । तन्मात्राणीत्यस्यार्थमाह । सूक्ष्माः शब्दादय इति । आकाशादीनामपि तदेव तन्मात्रमिति व्युत्पत्त्या शब्दतन्मात्ररूपत्वेन तस्य च अस्मदादिप्रत्यक्षविषयत्वेन सूक्ष्मत्वाभावादाह । मात्रग्रहणेनेति । मात्रपदेनेत्यर्थः । भूतभावं भूतरूपेण परिणामं । तथाच भूतरूपेण परिणतानां शब्दादीनां न तन्मात्रपदार्थत्वं भूतरूपेणापरिणतशब्दादेः तदर्थत्वादिति भूतरूपेण परिणतस्य आकाशपरनामधेयस्य शब्दस्य तन्मात्रपदार्थत्वाभावेन अस्मदादिप्रत्यक्षविषयत्वेन स्थूलत्वेपि न क्षतिः । त एव विशेषाविशेषा एव, एव

तथोक्तानि । तत्रोर्ध्वस्रोतसां योगिनाञ्च श्रोत्रं शब्दतन्मात्रविषयं स्थूलशब्दविषयं च, अस्मदादीनां तु स्थूलशब्दविषयमेव । एवं तेषां त्वक् स्थूलसूक्ष्मस्पर्शविषया, अस्मदादीनां तु स्थूलस्पर्शविषयैव । एवञ्चक्षुरादयो ऽपि तेषामस्मदादीनां च रूपादिषु सूक्ष्मस्थूलेषु द्रष्टव्याः ॥

एवं कर्मेन्द्रियेषु मध्ये "वाग्भवति शब्दविषया" स्थूलशब्दविषया, तद्धेतुत्वात् । नतु शब्दतन्मात्रस्य हेतुस्तस्याहङ्कारिकत्वेन वागिन्द्रियेण सहैककारणकत्वात् । शेषाणि तु चत्वारि पायूपस्थपाणिपादाख्यानि पञ्चविषयाणि पाण्याद्याहार्याणां घटादीनां पञ्चशब्दाद्यात्मकत्वादिति ॥ ३४ ॥

साम्प्रतं त्रयोदशसु करणेषु केषाञ्चिद्गुणभावं केषाञ्चित्प्रधानभावं सहेतुकमाह —

**सान्तःकरणा बुद्धिः सर्वं विषयमवगाहते यस्मात् ।**
**तस्मात्त्रिविधं करणं द्वारि द्वाराणि शेषाणि ॥ ३५ ॥**

---

कारेण अहङ्कारादीनां तत्त्वादीनां व्यवच्छेदः ।

नच अस्मदादिचक्षुरिन्द्रियाणां स्थूलभूतविषयकत्वमेव सिद्धं नतु तन्मात्रविषयकत्वं इति कथं बाह्येन्द्रियाणामुभयविषयकत्वोक्तिः सङ्गच्छते इत्याशङ्कां अस्मदादिबाह्येन्द्रियस्य उभयविषयकत्वाभावेपि योगिदेवादीनां तद्विषयकत्वसत्त्वान्न क्षतिरिति परिहरति । तत्रेति । ऊर्ध्वस्रोतसः देवाः, योगिनो यमनियमाद्यष्टाङ्गयोगानुष्ठातारः । अस्मदादीनां योगिभिन्नानां मनुष्यादीनाम् ।

बाह्येन्द्रियाणां विषयानुक्त्वा कर्मेन्द्रियाणां विषयप्रतिपादकं कारिकाद्वितीयपादं व्याचष्टे । एवमिति । शब्दविषयेति । तथाच वागिन्द्रियं शब्दविषयमेव नतु पाण्यादिकर्मेन्द्रियान्तरवत् पञ्चविषयमित्यर्थः । शब्दतन्मात्रस्य अहङ्कारजन्यत्वेन वागिन्द्रियाजन्यत्वात् वागिन्द्रियविषयत्वं न सम्भवति इति वागिन्द्रियस्य न सामान्यतः शब्दमात्रविषयत्वमपि तु स्थूलशब्दविषयत्वमेवेति स्फुटीकरोति । शब्दविषया स्थूलशब्दविषयेति । वागिन्द्रियस्य स्थूलशब्दविषयत्वं कथमित्यत आह । तद्धेतुत्वात् इति । स्थूलशब्दहेतुत्वादित्यर्थः । तथाच यतः वागिन्द्रियं स्थूलशब्दहेतुः अतः स्थूलं शब्दं विषयीकरोति उच्चारयतीत्यर्थः । शब्दशब्दस्य स्थूलशब्दार्थकत्वपरत्वे हेतुमाह । नत्विति । वागिति पूर्वोक्तमनुषज्यते । वागिन्द्रियस्य शब्दतन्मात्राहेतुत्वे कारणमाह । तस्येति । तस्य शब्दतन्मात्रस्य, आहङ्कारिकत्वेन अहङ्कारकार्यत्वेन, एककारणकत्वात् यस्य कार्यं वागिन्द्रियं तस्यैव शब्दतन्मात्रमपि अतो न वागिन्द्रिये शब्दतन्मात्रहेतुत्वमित्यर्थः ।

पञ्चविषयाणीति । पञ्च शब्दादयो विषया येषां तथाभूतानीत्यर्थः । एतदेव विवृणोति । पाण्याद्याहार्याणामिति । पाण्यादिभिः आहार्याणामित्यर्थः । आदिना पादादीनां परिग्रहः । पञ्च शब्दाद्यात्मकत्वादिति । गुणगुणिनोरभेदादिति भावः ॥

"सान्तः करणा" इति। द्वारि—प्रधानम्। "शेषाणि" करणानि—बाह्येन्द्रियाणि-द्वाराणि। तैरुपनीतं सर्वं विषयं समनोऽहङ्कारा बुद्धिः यस्मादवगाहते—ऽध्यवस्यति, तस्माद्बाह्येन्द्रियाणि द्वाराणि, द्वारवती च सान्तःकरणा बुद्धिरिति ॥ ३५ ॥

न केवलं बाह्येन्द्रियाण्यपेक्ष्य प्रधानं बुद्धिः, अपि तु ये अप्यहङ्कारमनसी द्वारणी ते अप्यपेक्ष्य बुद्धिः प्रधानमित्याह—

**एते प्रदीपकल्पाः परस्परविलक्षणा गुणविशेषाः।**
**कृत्स्नं पुरुषस्यार्थं प्रकाश्य बुद्धौ प्रयच्छन्ति ॥३६॥**

"एते" इति। यथा हि ग्रामाध्यक्षः कौटुम्बिकेभ्यः करमादाय विषयाध्यक्षाय प्रयच्छति, विषयाध्यक्षश्च सर्वाध्यक्षाय, स च भूपतये, तथा बाह्येन्द्रियाण्यालोच्य मनसे समर्पयन्ति, मनश्च सङ्कल्प्याहङ्काराय, अहङ्कारश्चाभिमत्य बुद्धौ सर्वाध्यक्षभूतायां,-तदिदमुक्तम्- "पुरुषस्यार्थं प्रकाश्य बुद्धौ प्रयच्छन्ति" इति।

बाह्येन्द्रियमनोऽहङ्काराश्च-गुणविशेषाः,—गुणानां सत्त्वरजस्तमसां विकाराः, ते तु परस्परविरोधशीला अपि पुरुषार्थेन भोगापवर्ग·

---

द्वारि प्रधानमिति। द्वारापेक्षया द्वारिणः प्रधानत्वात्। सान्तःकरणायाः बुद्धेः द्वारित्वं द्वारान्तरं विना न सम्भवतीत्यतः द्वाराण्याह। शेषाणीति। शेषाणां घटपटादीनां द्वारत्वाभावादाह। करणानीति। कानि तानीत्यत आह। बाह्येन्द्रियाणीति। सान्तः करणाया बुद्धेर्द्वारित्वे शेषाणां बाह्येन्द्रियाणां च द्वारत्वे हेतुमाह। तैरुपनीतमित्यादि। तैः बाह्येन्द्रियैः, उपनीतं गृहीतम्, सान्तः करणेत्यत्र अन्तःकरणपदं मनोहङ्कारोभयपरमित्याशयेनाह। समनोहङ्कारेति। ग्रहणात्मकस्य अवगाहनस्य बुद्धिकार्यत्वाभावात् अवगाहनपदं अध्यवसायपरतया व्याचष्टे। अध्यवस्यतीति निगमयति। तस्मादिति।

बाह्येन्द्रियापेक्षया मनोहङ्कारबुद्धीनां प्राधान्येपि किं तेषां समप्राधान्यमुत तत्राप्यस्ति अङ्गप्रधानभाव इत्याशङ्कया तेषामपि अङ्गप्रधानभावप्रतिपादकं कारिकान्तरमवतारयति। न केवलमित्यादिना।

बुद्धेः सर्वापेक्षया प्राधान्ये दृष्टान्तमाह। यथेति। ग्रामाध्यक्षः ग्रामेऽधिकृतः (जमीदारापरनामधेयः) कौटुम्बिकेभ्यः कृषकेभ्यः, विषयाध्यक्षाय विषयः ग्रामसमूहः जनपदाख्यः तदध्यक्षाय, प्रधानमन्त्रिणे प्रयच्छतीति पूर्वोक्तमनपज्यते। दार्ष्टान्तिके योजयति। तथेति। बाह्येन्द्रियाणि आलोच्य आलोचनात्मकव्यापारं कृत्वा, एवमग्रेपि। सर्वाध्यक्षभूतायामिति। सर्वाध्यक्षः यथा न स्वतन्त्रः तथा बुद्धिरपि परतन्त्रैवेति भावः।

कारिकापूर्वार्धं व्याख्यातुमाह। बाह्येन्द्रियेति। विशेषपदार्थमाह। विकारा इति। परस्परविलक्षणा इत्यस्य विवरणं परस्परविरोधशीला इति। पुरुषार्थेनेति। एव च

रूपेणैकवाक्यतां नीताः, यथा वर्त्तितैलवह्नयः सन्तमसापनयेन रूपप्रकाशाय मिलिताः प्रदीपः, एवमेते गुणविशेषाः इति योजना ।

कस्मात्पुनर्बुद्धौ प्रयच्छन्ति ? न तु बुद्धिरहङ्काराय द्वारिणे मनसे वेत्यत आह—

**सर्वं प्रत्युपभोगं यस्मात्पुरुषस्य साधयति बुद्धिः ।**
**सैव च विशिनष्टि पुनः प्रधानपुरुषान्तरं सूक्ष्मम् ॥३७॥**

"सर्वम्" इति । पुरुषार्थस्य प्रयोजकत्वात् तस्य यत्साक्षात्साधनं तत् प्रधानम् । बुद्धिश्चाऽस्य साक्षात्साधनम्, तस्मात्सैव प्रधानम् । यथा सर्वाध्यक्षः साक्षाद्राजार्थसाधनतया प्रधानम् । इतरे तु ग्रामाध्यक्षादयस्तम्प्रति गुणभूताः । बुद्धिर्हि पुरुषसन्निधानात् तच्छायापत्त्या तद्रूपेव सर्वं विषयोपभोगं पुरुषस्य साधयति । सुखदुःखानुभवो हि भोगः, स च बुद्धौ, बुद्धिश्च पुरुषरूपेवेति, सा च पुरुषमुप-

---

प्रदीपवच्चार्थतो वृत्तिरिति कारिकाव्याख्यानावसरे स्पष्टम् ॥

ननु मनोहङ्कारबुद्धीनामन्तःकरणत्वाविशेषेण कुतो बुद्धेरेव प्राधान्यमुच्यते न त्वितरयोरित्याशङ्कानिराकरणपरं कारिकान्तरमवतारयति । कस्मादित्यादिना । न त्विति । तथा च बुद्धिरेव प्रधानं न त्वहङ्कारादिकमित्यत्र किं प्रमाणमित्याशङ्कार्थः । बुद्धेरेव प्राधान्यं साधयितुं प्रथमं प्रधानत्वं निर्वक्ति । पुरुषार्थस्येत्यादिना । अनागतावस्थस्य पुरुषार्थस्य स्वोत्पत्त्यर्थं सर्वेषामिन्द्रियादीनां प्रवर्तकत्वात् तस्य यत् साक्षात्साधनं तदेव प्रधानमिति । तथा च साक्षादुद्देश्यसाधनत्वं प्रधानत्वमिति । प्रकृते बुद्धौ प्रधानत्वं सङ्गमयति । बुद्धिश्चेति । अस्य पुरुषार्थस्य । साक्षात्साधनस्य प्रधानत्वे दृष्टान्तमाह । यथेति । तं प्रति सर्वाध्यक्षं प्रति, गुणभूताः अङ्गभूताः । बुद्धेरेव साक्षात्पुरुषार्थसाधनत्वमित्यत्र प्रमाणमाह । बुद्धिर्हीति । पुरुषसन्निधानात् चिद्रूपेण पुरुषेण भेदाग्रहात्, तच्छायापत्त्या चित्प्रतिबिम्बाश्रयतया, तद्रूपेव चिद्रूपेव, विषयोपभोगमिति । तस्यैव पुरुषार्थत्वात् । तथाच साक्षात्पुरुषार्थसाधनत्वं बुद्धावक्षतमेवेति बुद्धिः प्रधानमित्यर्थः ।

ननु पुरुषस्यासङ्गतया भोगस्य पुरुषधर्मत्वासम्भवात्कथं तस्य पुरुषार्थत्वमित्याशङ्कायामाह । सुखदुःखानुभवो हीति । अनुभवः साक्षात्कारः, तेन परकीयदुःखाद्यनुमानरूपस्यानुभवस्य भोगरूपत्वाभावेपि न क्षतिः । स च बुद्धाविति । ज्ञानसुखादीनां बुद्धिधर्मत्वादिति भावः । तथापि कथं तस्य पुरुषार्थत्वमित्यत आह । बुद्धिश्चेति । पुरुषरूपेवेति । पुरुषसन्निधानात्तच्छायापत्त्या तस्याः पुरुषरूपत्वस्य पूर्वमुक्तत्वादित्यर्थः । इति अनेन प्रकारेण, सा बुद्धिः । पुरुषमुपभोजयतीति । तथाच उक्तरूपस्य विषयोपभोगस्य पुरुषेऽसत्त्वेऽपि चित्प्रतिबिम्बाश्रयतया बुद्धिः चिद्रूपेव भूत्वा स्वकीयसुखदुःखादि पुरुषे बोधयति इति रीत्या बुद्धेः पुरुषार्थं प्रति साक्षात्साधनत्वमस्त्येवेति भावः । ननु पूर्वकारिकोक्तरीत्या इन्द्रियादिभिः आलोचनादिव्यापारपुर-

भोजयति। यथाऽर्थालोचनसङ्कल्पाभिमानाश्च तत्तद्रूपपरिणामेन बुद्धावुपसङ्क्रान्ताः, तथेन्द्रियव्यापारा अपि बुद्धेरेव स्वव्यापारेणाऽध्यवसायेन सहैकव्यापारीभवन्ति, यथा स्वसैन्येन सह ग्रामाध्यक्षादिसैन्यं सर्वाध्यक्षस्य भवति। "सर्वं"--शब्दादिकं "प्रति" यः उपभोगः "पुरुषस्य" तं साधयति।

ननु पुरुषस्य सर्वविषयोपभोगसम्पादिका यदि बुद्धिः, तर्ह्यनिर्मोक्ष इत्यत आह—"सैव चे" ति पश्चात् "प्रधानपुरुषयोरन्तरं" "विशिनष्टि" करोति–यथौदनपाकं पचतीति,–करणं च प्रतिपादनम्। ननु प्रधानपुरुषयोरन्तरस्य कृतकत्वादनित्यत्वं तत्कृतस्य मोक्षस्य स्यादित्यत आह--"विशिनष्टि"--'प्रधानं सविकारमन्यदहमन्यः' इति विद्यमानमेवाऽन्तरमविवेकेना ऽविद्यमानमिव बुद्धिर्बोध-

---

स्सरं उपनीतं विषयं यस्माद्बुद्धिरवगाहते तस्माज्ज्ञानेन्द्रियापेक्षया बुद्धेः प्राधान्यसिद्धावपि कथं कर्मेन्द्रियापेक्षया तस्याः प्राधान्यमित्याशङ्कायामाह। तथा चेति। अर्थालोचनेति ज्ञानेन्द्रियव्यापारोपदर्शनम्। तत्तद्रूपपरिणामेन, कार्यकारणयोरभेदात् आलोचनादीनां सकल्पादिकं प्रति कारणत्वेन सङ्कल्पादिरूपेण ।परिणामाङ्गीकारात। तथाच आलोचनं सङ्कल्परूपेण सङ्कल्पश्चाभिमानरूपेण एवमभिमानो अध्यवसायरूपेण परिणमतीत्यर्थः। बुद्धावुपसङ्क्रान्ताः इति। बुद्धिव्यापारभूताः सञ्जाता इत्यर्थः। दार्ष्टान्तिके आह। तथेति। इन्द्रियादीति। कर्मेन्द्रियादीत्यर्थः। तेन दृष्टान्तदार्ष्टान्तिकभावसङ्गतिः। व्यापारा इति। वचनादानादिरूपा इत्यर्थः। अध्यवसायेन सहेति। वचनादीनामपि परम्परया अध्यवसायरूपेण परिणामादिति भावः। उक्तार्थे दृष्टान्तमाह। यथेति। यथा स्वसैन्यं सर्वाध्यक्षस्य एवमेव ग्रामाध्यक्षसैन्यमपि तस्यैव भवति। तथा अध्यवसायात्मकस्वव्यापार इव इन्द्रियादिव्यापारोपि बुद्धेरेवेत्यर्थः।

इदानीमक्षरार्थमाह। सर्वमिति। सर्वमित्यस्यार्थमाह। शब्दादिकमिति। आदिना विषयमात्रपरिग्रहः। प्रतीति। तथाच शब्दादिविषयक इत्यर्थः। शब्दादिज्ञानस्य नसुखाद्यविषयकत्वपि शब्दं श्रुत्वा सुखं।मे जातमित्याकारकस्य तस्य शब्दा।दिविषयकत्वमपि सङ्गतमेव:।

द्वितीयार्धं व्याख्यातुमाशङ्कते। नन्विति। तर्ह्यनिर्मोक्ष इति। बुद्धेः सर्वदा सद्भावात् भवद्भिः सत्कार्यवादाङ्गीकारादिति भावः। विशेषस्य विशेषासम्भवादाह। विशिनष्टि करोतीति। तथाचोक्तस्थले धातोः प्रयत्नमात्रार्थकत्वमिति। विशिष्टवाचकानां पदानां सति पृथग्विशेषणवाचकपदसमवधाने विशेष्यमात्रपरत्वमिति नियमादिति भावः। अत्रैव दृष्टान्तमाह। यथेति। तथाचोक्तस्थले यथा पाकस्य पाकासम्भवात् धातोः प्रयत्नमात्रार्थकत्वमेवमेव अत्रापि प्रयत्नार्थकत्वमेवेति भावः। अन्तरपदार्थस्य भेदस्य नित्यत्वेन न तत्कर्तृत्वं बुद्धेः सम्भवति इत्यत आह। करणञ्च प्रतिपादनमिति। भोगात्मकस्य पुरुषार्थस्य साक्षात्साधनत्वं बुद्धेः कारिकार्धेन प्रतिपाद्य अपवर्गात्मकस्य तस्य साक्षात्साधनत्वं तत्र प्रतिपादयितुं कारिकाया उत्तरार्ध-

र्यति, न तु करोति, येनानित्यत्वमित्यर्थः । अनेनापवर्गः पुरुषार्थो दर्शितः, "सूक्ष्मम्"-दुर्लक्ष्यम्-तदन्तरमित्यर्थः ॥ ३७ ॥

तदेवं करणानि विभज्य विशेषाविशेषान् विभजते—

**तन्मात्राण्यविशेषाः तेभ्यो भूतानि पञ्च पञ्चभ्यः ।**
**एते स्मृता विशेषाः शान्ता घोराश्च मूढाश्च ॥ ३८ ॥**

"तन्मात्राणि" इति । शब्दादितन्मात्राणि सूक्ष्माणि । न चैषां शान्तत्वादिरस्ति । उपभोगयोग्योऽविशेष इति मात्रशब्दार्थः ।

अविशेषानुक्त्वा विशेषान्वक्तुमुत्पत्तिमेषामाह-"तेभ्यो भूतानि" इति । तेभ्यस्तन्मात्रेभ्यो यथासंख्यमेकद्वित्रिचतुःपञ्चभ्यो भूतान्याकाशानिलानलसलिलावनिरूपाणि पञ्च "पञ्चभ्यः"तन्मात्रेभ्यः ।

अस्त्वेतेषामुत्पत्तिः, विशेषत्वे किमायातमित्यत आह-"एते स्मृता विशेषाः" इति । कुतः ? "शान्ता घोराश्च मूढाश्च" । चकार एको हेतौ, द्वितीयः समुच्चये । यस्मादाकाशादिषु स्थूलेषु सत्त्वप्रधानत-

---

माह । सैव चेति । एतदेव विशदयति । अनेन चेति । बुद्धेः प्रधानपुरुषभेदप्रतिपादकत्वकथनेनेत्यर्थः । अपवर्गः आत्यन्तिकदुःखनिवृत्तिरूपः पुरुषार्थः, दर्शितः प्रधानसाध्यतयेति शेषः । यथात्रात्मनः स्वाभाविकदुःखरहितत्वेऽपि दुःखनिवृत्तेः पुरुषार्थत्वं सम्भवति तथोपपादितमधस्तात् ॥

कारिकान्तरमवतारयति । तदेवमिति । एवमुक्तप्रकारेण विशेषाविशेषान् बुद्धीन्द्रियविषयभूतान् ।

तदेव तन्मात्रमिति व्युत्पत्त्या शब्दादितन्मात्राणां शान्तत्वादिधर्माभावेन विरुद्धधर्मवत्स्वरूपविशेषत्वासम्भवात् तेषां अविशेषत्वमित्याशयेनाह । नचैषामिति । शब्दादितन्मात्राणामित्यर्थः । ननु शब्दतन्मात्रादिष्वपि शब्दतन्मात्रत्वादिरूपस्य विशेषस्य सत्त्वात् कथं तस्याविशेषत्वमित्यत आह । उपभोगयोग्यो विशेष इति । तथाच उपभोगयोग्यधर्म एव विशेषः सच शान्तत्वादिरूप इति तस्य तत्रासत्त्वान्न तस्य विशेषत्वसम्भवः । मात्रशब्दार्थः । मात्र पदेन तत्र उपभोगयोग्यस्य शान्तत्वादेर्व्यावृत्तिः सूचिता नतु तन्मात्रत्वादेरपीति भावः ।

तेभ्यः पञ्चभ्यः इत्यनेन पञ्चतन्मात्राणां मिलितानां पञ्चमहाभूतजनकत्वं प्रतीयते तच्चैतन्न सम्भवति आकाशात्मकस्य महाभूतस्य शब्दतन्मात्रमात्रजन्यत्वात् इत्यत आह । यथासङ्ख्यमिति । एकद्वित्रिचतुः पञ्चभ्य इति । स्पष्टमेवैतत् मूलकृता कृतम् पूर्वम् ।

द्वितीयार्धं व्याख्यातुमाशङ्कते । अस्त्वेषामिति । विशेषत्वे किमायातमिति । विशेषत्वं कथमायातमित्यर्थः । शान्ता घोराश्च मूढाश्चेत्यत्र हेतुवाचकस्याभावात् कथमस्य हेतुत्वबोधकत्वमित्यत आह । चकार एको हेताविति । तथाच यत इत्यर्थः । यस्मादित्यादिना । शान्तत्वस्य सत्त्वधर्मतानां शान्तघोरमूढरूपत्वं विवेचयति ।

या केचिच्छान्ताः, सुखाः, प्रकाशा, लघवः, केचिद्रजःप्रधानतया घोरा, दुःखा, अनवस्थिताः, केचित्तमःप्रधानतया मूढा विषण्णा गुरवः। तेऽमी परस्परव्यावृत्त्याऽनुभूयमाना 'विशेषाः' इति च 'स्थूलाः' इति चोच्यन्ते। तन्मात्राणि त्वस्मदादिभिः परस्परव्यावृत्तानि नाऽनुभूयन्ते, इत्यविशेषाः सूक्ष्मा इति चोच्यन्ते ॥ ३८ ॥

विशेषाणामवान्तरविशेषमाह—

**सूक्ष्मा मातापितृजाः सहप्रभूतैस्त्रिधा विशेषाः स्युः।**
**सूक्ष्मास्तेषां नियता मातापितृजा निवर्तन्ते ॥ ३९ ॥**

"सूक्ष्मा" इति। "त्रिधा विशेषाः स्युः" इति। तान् विशेषप्रकारानाह—"सूक्ष्माः"—सूक्ष्मदेहाः परिकल्पिताः, मातापितृजाः षाट्कौशिकाः। तत्र मातृतो लोमलोहितमांसानि, पितृतस्तु स्नाय्वस्थिमज्जा-

---

र्मतया तत्सहचरितानन्यानपि धर्मानाह। सुखाः प्रसन्ना इति। एवमग्रेपि। शान्तघोरमूढत्वेपि कथमेषां विशेषत्वमित्यत आह। तेऽमीति। अमी भूताः परस्परव्यावृत्ताः परस्परव्यावृत्ततया प्रतीयमानाः। अत एव विशेषाः इत्युच्यन्ते। तथाच परस्परव्यावृत्ततया प्रतीयमानत्वमेव स्थूलत्वम्। यद्यपि तन्मात्रादावपि अस्मदादिभिः परस्परव्यावृत्तया अनुभूयमानत्वाभावेपि। योगिनां परस्परव्यावृत्ततया अनुभूयमानत्वसत्वात् अतिव्याप्तिः। तथापि अस्मदादिभिः परस्परव्यावृत्ततया अनुभूयमानत्वमेव स्थूलत्वं विवक्षितमिति नोक्तातिव्याप्तिः। एतदभिप्रायेणैव तन्मात्राणि तु अस्मदादिभिः परस्परव्यावृत्तानि नानुभूयन्ते इत्यत्र अस्मदादिपदं दत्तम्। भूतानां स्थूलत्वापरपर्यायं विशेषत्वमुक्त्वा तन्मात्राणामविशेषत्वं स धयति। तन्मात्राणि त्विति। योगिभिः परस्परव्यावृत्ततया अनुभूयमानत्वादाह। अस्मदादिभिरिति ॥

अग्रिमकारिकामवतारयति। विशेषाणामिति। अवान्तरविशेषं व्याप्यधर्मम् व्याचष्टे। त्रिधेति। त्रिधाः त्रिविधाः। पूर्वकारिकोक्तानां तन्मात्रादिरूपाणां सूक्ष्माणां अविशेषत्वेन विशेषप्रकारान्तर्गतत्वासम्भवात् प्रकृते सूक्ष्मपदं सूक्ष्मदेहपरतया व्याचष्टे। सूक्ष्मदेहा इति। नच सूक्ष्मदेहसत्त्वे प्रमाणाभावः। तस्य सूक्ष्मत्वेन प्रत्यक्षासिद्धत्वात् लिङ्गाद्यभावेन च अनुमित्यसिद्धत्वात् शब्दस्य च तत्प्रतिपादकस्याभावात् इत्याशङ्कां निराकर्तुमाह। परिकल्पिता इति। अनुमिता इत्यर्थः। एतच्च लिङ्गशरीरनिरूपणावसरे व्यक्तीभविष्यति।

मातापितृजाः देहा इति पूर्वोक्तमनुपद्यते। शरीरस्य षाट्कौशिकस्य मातापितृजत्वं स्पष्टयति। तत्रेति। षट्सु कोशेषु इत्यर्थः। एषां षण्णां कोशत्वं तु वुद्धितस्याच्छादकत्वादसिकोषवदेव बोध्यम्। अत्र लोमपदं लोमोपलक्षितायाः त्वचो बोधकं तेन "एतत् षाट्कौषिकं शरीरं त्रीणि पितृतः त्रीणि मातृतः। अस्थिस्नायुमज्जानः पितृतः। त्वङ्मांसरुधिराणि मातृतः। इत्यादिश्रुत्या सह न विरोधः। त्वक्पदं विहाय लोमपदप्रयोगस्तु त्वगिन्द्रियभ्रमनिरासार्थः। प्रभूतपदस्य प्रचुरार्थकत्वकरं

न इति षट्कोशाः । प्रकृष्टानि महान्ति भूतानि प्रभूतानि—तैस्सह-सूक्ष्मं शरीरमेको विशेषः, मातापितृजो द्वितीयः, महाभूतानि तृतीयः, महाभूतवर्गे च घटादीनां निवेश इति ।
सूक्ष्ममातापितृजयोर्द्वयोर्विशेषमाह—"सूक्ष्मास्तेषाम्" विशेषाणां मध्ये ये ते "नियताः" नित्याः "मातापितृजा निवर्तन्ते" इति, रसान्ता वा भस्मान्ता वा विडन्ता वेति ॥ ३९ ॥

सूक्ष्मशरीरं विभजते—

पूर्वोत्पन्नमसक्तं नियतं महदादिसूक्ष्मपर्यन्तम् ।
संसरति निरुपभोगं भावैरधिवासितं लिङ्गम् ॥४०॥

'पूर्वोत्पन्नम्' इति । "पूर्वोत्पन्नम्" प्रधानेनाऽऽदिसर्गे प्रतिपुरुषमेकैकमुत्पादितम् । "असक्तम्", अव्याहतं, शिलामप्यनुविशति । "नियतम्" आ चाऽऽदिसर्गात्, आ च महाप्रलयादवतिष्ठते । "महदादिसूक्ष्मपर्यन्तम्", महदहङ्कारैकादशेन्द्रियपञ्चतन्मात्रपर्यन्तम् । एषां

---

निराकर्तुमाह । प्रकृष्टानीति । कारिकोक्तं विशेषाणां त्रिविधत्वं विशदयति । सूक्ष्मशरीरमेको विशेष इति । महाभूतानीति । एतेन तन्मात्राणामेतन्मते सूक्ष्मभूतत्वं सूचितम् । तृतीय इति । विशेष इत्यनुषज्यते । एवम्पूर्वत्रापि ।

नच घटपटादीनां पृथिव्यादिरूपमहाभूतजन्यत्वान्महाभूतत्वाभावेन तेषाञ्च शान्तघोरमूढरूपत्वेन विशेषत्वात्तेषामविभजनेन न्यूनत्वमत आह । महाभूतवर्गे चेति । तथाच महाभूतजन्यानामपि तेषां महाभूतत्वमविरुद्धमिति तेषां महाभूते अन्तर्भावान्न न्यूनत्वमिति भावः । नित्या इति । मोक्षपर्यन्तमवस्थायिन इत्यर्थः । रसान्ता इति । रसा पृथिवी अन्तो येषां तथाभूता इत्यर्थः । पृथिव्यादौ रोपितानां शरीराणां पृथिवीभावाप्तेः । भस्मान्ता इति । श्मशाने दग्धशरीराणां भस्मान्तत्वं बोध्यम् । विडन्ता इति । व्याघ्रादिभिः भक्षितस्य शरीरस्य विष्ठारूपेण परिणामात् इत्यर्थः ।

विभजते इति । अत्र विभागो नावान्तरधर्मप्रकारेण धर्मिप्रतिपादनरूपः अपि तु समुदायात्मकस्य वस्तुनः समुदायघटकपदार्थप्रतिपादनरूपो बोध्यः ।

व्याचष्टे । पूर्वोत्पन्नमिति । आदिसर्गे प्राथमिकसृष्टिसमये । प्रतिपुरुषमिति । पुरुषभेदेन सूक्ष्मशरीरस्य भिन्नत्वाङ्गीकारावश्यकत्वात् । असक्तम् सङ्गरहितम् सङ्गश्च प्रतिघात इत्याशयेनाह । अव्याहतमिति । अन्यथा पाषाणान्तरवर्तिमण्डूकसूक्ष्मशरीरस्य पाषाणानुप्रवेशो न स्यादित्याशयेनाह । शिलामपीति । नियतशब्दस्य नित्यार्थकत्वे पूर्वोत्पन्नमित्यनेन विरोधः स्यादित्याशयेन तस्य सर्गकालमारभ्य मोक्षकालपर्यन्तमवस्थायित्वार्थकत्वमाह । आ चादिसर्गादिति । आदिसर्गमारभ्य मोक्षपर्यन्तस्थमित्यर्थः । महदादि इत्यत्र आदिपदग्राह्यानाह । महदहङ्कारेति । सूक्ष्मपदार्थमाह । पञ्चतन्मात्राणीति । एषां महदहङ्कारादिसूक्ष्मान्तानां, तथाच महदहङ्काराष्टादशानां

समुदायः सूक्ष्मं शरीरम्, शान्तघोरमूढैरिन्द्रियैरन्वितत्वाद्विशेषः।

नन्वस्त्वेतदेव शरीरं भोगायतनं पुरुषस्य, कृतं दृश्यमानेन षाट्कौशिकेन शरीरेणेत्यत आह—"संसरति" इति। उपात्तमुपात्तं षाट्कौशिकं शरीरं जहाति, हायं हायं चोपादत्ते। कस्मात्? "निरुपभोगं" यतः षाट्कौशिकं शरीरं निरुपभोगं तस्मात्सूक्ष्मं शरीरं संसरति।

ननु धर्माधर्मनिमित्तः संसारः, न च सूक्ष्मशरीरस्याऽस्ति तद्योगः, तत्कथं संसरतीत्यत आह—"भावैरधिवासितम्" इति। धर्माधर्मज्ञानाज्ञानवैराग्यावैराग्यैश्वर्यानैश्वर्याणि भावाः, तदन्विता बुद्धिः,

---

समुदाय एव लिङ्गशरीरम् नतु तेभ्योऽतिरिक्तः कश्चन पदार्थः येन मूलप्रकृतिरित्यादिकारिकार्थां तस्याविभजनादसङ्गतिः स्यादिति।

नच तन्मात्राण्यविशेषा इति कारिकायां पञ्चमहाभूतानां विशेषत्वं प्रतिपादितं सूक्ष्मा मातापितृजा इत्यत्र विशेषाणां सूक्ष्मशरीरस्थूलशरीरपञ्चमहाभूतभेदेन त्रिविधत्वं प्रतिपादितं तन्न सङ्गच्छते सूक्ष्मशरीरस्य पञ्चमहाभूतात्मकत्वाभावेन विशेषत्वासम्भवादित्याशङ्कां निराकरोति। शान्तघोरमूढैरिन्द्रियैरिति। तथा च शान्तघोरमूढरूपतयाऽनुभूयमानत्वमेव विशेषत्वमिति पञ्चमहाभूतानामिव इन्द्रियाणामपि शान्तघोरमूढरूपतयाऽनुभूयमानत्वात् विशेषत्वमेव। तथाच सूक्ष्मशरीरस्यापि इन्द्रियात्मकत्वात् विशेषत्वं युक्तमेव। अत्र इन्द्रस्य आत्मनः लिङ्गमितिव्युत्पत्त्या इन्द्रियपदं करणमात्रोपलक्षकम्। तेन चक्षुरादाविव बुद्ध्यादावपि शान्तत्वाद्यनुभवविषयत्वसत्त्वेन विशेषत्वं निराबाधमेव। यद्यपि सूक्ष्मशरीरस्य इन्द्रियात्मकत्वेन विशेषत्वमिव तन्मात्रस्वरूपत्वेनाविशेषत्वात् तस्योभयरूपत्वं वक्तुमुचितं तथापि वैशेष्यात्तु तद्वाद इति न्यायेन अधिकसंख्याकानां विशेषाणामेव तदन्तर्गत्त्वात् तस्य विशेषत्वोक्तिर्युक्तैव। अन्वितत्वादिति। घटितत्वादित्यर्थः।

कारिकाद्वितीयार्धं अवतारयितुमाशङ्कते नन्विति। कृतमिति। यद्यपि दृश्यमानं षाट्कौषिकं शरीरं प्रत्यक्षसिद्धत्वादेव नापलपितुं योग्यम्। तथापि तस्य भोगायतनत्वं मास्तु सूक्ष्मशरीरस्यैव भोगायतनत्वादिति आशङ्कितुरभिप्रायः। संसरतीत्यस्यार्थम.ह। उपात्तमुपात्तमिति। तथाच पूर्वशरीरत्यागपूर्वको देहान्तरपरिग्रह एव संसारः। उक्त संसारस्य सूक्ष्मदेहनिष्ठस्य षाट्कौशिक देहान्तरस्वीकरणं विना असम्भवेन तस्याप्यङ्गीकार आवश्यक इति भावः। सूक्ष्मशरीरस्य षाट्कौशिकशरीरं विना संसारित्वानुपपत्तिसूचकानि विशेषणानि व्याचष्टे। यत इत्यादिना। निरुपभोगं सुखदुःखसाक्षात्कारात्मकभोगरहितम्। संसरति सुखदुःखानुभवार्थं स्थूलदेहं परिगृह्णाति। विशेषणान्तरमुत्थापयितुमाशङ्कते। नन्विति। तथाच संसारं प्रति धर्माधर्मयोः कारणत्वात् कारणस्य च कार्याधिकरणवृत्तिताया आवश्यकत्वात् धर्माधर्मादीनामात्ममात्रधर्मत्वेन सूक्ष्मशरीरस्य तदनाश्रयत्वेन कथं संसारित्वसम्भव इति आशङ्कितुरभिप्रायः। तत्कथं संसरतीति। सूक्ष्मशरीरमिति शेषः। भावैरधिवासितमित्यत्र भावपदार्थमाह। धर्माधर्मेति। तदन्विता बुद्धिरिति। अस्मन्मते धर्माधर्मादीनां

तदन्वितञ्च सूक्ष्मं शरीरमिति तदपि भावैरधिवासितम् । यथा सुरभिचम्पककुसुमसम्पर्काद्वस्त्रं तदामोदवासितम्भवति । तस्माद्भावैरेवाऽधिवासितत्वात्संसरति । कस्मात् पुनः प्रधानमिव महाप्रलयेऽपि तच्छरीरं न तिष्ठतीत्यत आह—"लिङ्गम्" इति । लयं गच्छतीति लिङ्गम्—हेतुमत्त्वेन चाऽस्य लिङ्गत्वमिति भावः ॥ ४० ॥

स्यादेतत्—बुद्धिरेव साहङ्कारेन्द्रिया कस्माच्च संसरति ? कृतं सूक्ष्मशरीरेणाऽप्रामाणिकेनेत्यत आह—

**चित्रं यथाऽऽश्रयमृते स्थाण्वादिभ्यो विना यथा च्छाया ।**
**तद्वद्विना विशेषैर्न तिष्ठति निराश्रयं लिङ्गम् ॥ ४१ ॥**

"चित्रम्" इति । लिङ्गनात् ज्ञापनात् बुद्ध्यादयो 'लिङ्गम्', तत् "अनाश्रयं न तिष्ठति । जन्मप्रायणान्तराले बुद्ध्यादयः प्रत्युत्पन्नश-

---

बुद्धिधर्मत्वाङ्गीकारात् । अस्तु धर्माधर्मादीनां बुद्धिधर्मत्वं तथापि सूक्ष्मशरीरस्य कथं संसारित्वमित्यत आह । तदन्वितञ्चेति । धर्माधर्मादिभावान्वितबुद्ध्यन्वितमित्यर्थः । बुद्धेः धर्माधर्मान्वितत्वेपि सूक्ष्मशरीरस्यापि धर्माधर्माश्रयत्वे दृष्टान्तमाह । यथा सुरभिचम्पकेति । तथाच वस्त्रैकदेशे चम्पकसम्पर्केपि समस्तस्य चम्पकामोदवासितत्वम् , एवमेव सूक्ष्मशरीरैकदेशवर्तिना धर्माधर्मेण सूक्ष्मशरीरस्यापि धर्माधर्मान्वितत्वम् । सूक्ष्मशरीरघटकानां इतरेषां बुद्धिप्रयोज्यत्वात् बुद्धिधर्मा धर्मादयस्तेषु सूक्ष्मरूपेणावस्थिता एवेति सर्वेषामपि तेषां धर्माधर्माश्रयत्वेन सूक्ष्मशरीरस्य धर्माधर्माश्रयत्वं सङ्गतमेवेति भावः । सूक्ष्मशरीरस्य महाप्रलयपर्यन्तमवस्थायित्वमुक्तम् तत्राशङ्कते । कस्मादिति । लिङ्गमितीति । तथाच प्रधानस्य नित्यत्वेन महाप्रलयेपि स्थितिः स्यादेव अस्य तु विनाशित्वेन न महाप्रलयकाले स्थितिसम्भव इति भावः । नच सूक्ष्मशरीरस्य विनाशित्वे किम्प्रमाणमित्यत आह । हेतुमत्त्वादिति । तथाच पूर्वोत्पन्नमित्यनेन।तस्योत्पत्तिमत्त्वप्रतिपादनात् उत्पत्तिमत्त्वस्य विनाशित्वव्याप्यत्वेन तेन हेतुना तत्र विनाशित्वसाधनात् । ध्वंसाङ्गीकर्तृमते ध्वंसान्तर्भावेण व्यभिचारेण हेतौ भावत्वं विशेषणं बोध्यम् ।

कारिकान्तरमवतारयितुमाशङ्कते । स्यादेतदिति । सूक्ष्मशरीरेण लिङ्गशरीरान्तर्गतेन पञ्चतन्मात्रात्मकेन सूक्ष्मपदार्थेनेत्यर्थः । अथ प्रमाणसिद्धत्वादेव तस्य सत्त्वमङ्गीकार्यमित्यत आह । अप्रामाणिकेनेति ।

कारिकास्थं कर्तृवाचकं लिङ्गपदं व्याचष्टे । लिङ्गनात् ज्ञापनादिति । प्रधानस्येति शेषः। तथाच प्रधानसाधकत्वात् बुद्ध्यादयो लिङ्गमित्युच्यन्ते । अनाश्रितं न तिष्ठति इति । अस्तु स्थूलशरीरस्य तदाश्रयत्वमित्यत आह । जन्मप्रयाणान्तराल इति । एकस्थूलशरीरत्यागानन्तरं स्थूलशरीरान्तरग्रहणात्पूर्वं यःकालस्तस्मिन्काले अनाश्रितं न तिष्ठति इत्यर्थः । तथाच तत्काले बुद्ध्यादीनां आश्रयं किञ्चिदभ्युपेयमेव तदेव सूक्ष्मशरीरमित्यर्थः ।

नच बुद्ध्यादीनां शरीरविशेषमनाश्रित्य तदानीं स्थितिर्न भवतीत्यत्र किम्प्रमाण-

रीराश्रिताः,-प्रत्युत्पन्नपञ्चतन्मात्रवत्त्वे सति बुद्ध्यादित्वात्-दृश्यमानशरीरवृत्तिबुद्ध्यादिवत्। "विना विशेषैः" इति, सूक्ष्मैः शरीरैरित्यर्थः। आगमश्चात्र भवति—

"ततः सत्यवतः कायात् पाशबद्धं वशङ्गतम्।
अङ्गुष्ठमात्रं पुरुषं निश्चकर्ष बलाद्यमः"। (भार, व. २९६)

इत्यङ्गुष्ठमात्रत्वेन सूक्ष्मशरीरत्वमुपलक्षयति। आत्मनो निष्कर्षासम्भवात्, सूक्ष्ममेव शरीरं 'पुरुषः', तदपि पुरि स्थूलशरीरे शेते इति ॥ ४१ ॥

एवं सूक्ष्मशरीरास्तित्वमुपपाद्य यथा संसरति, येन हेतुना च, तदुभयमाह—

**पुरुषार्थहेतुकमिदं निमित्तनैमित्तिकप्रसङ्गेन।**
**प्रकृतेर्विभुत्वयोगान्नटवद्व्यवतिष्ठते लिङ्गम् ॥४२॥**

"पुरुषार्थहेतुकम्" इति पुरुषार्थेन हेतुना प्रयुक्तम्। "निमित्तम्"

---

मित्यतस्तत्रानुमानं प्रमाणमाह। बुद्ध्यादय इति। प्रत्युत्पन्नशरीराश्रिता इति। उत्पन्नैकैकशरीराश्रिता इत्यर्थः। जन्मप्रयाणान्तराल इति शेषः। तेन न स्थूलशरीराश्रितत्वमादाय सिद्धसाधनं। अत्र हेतुमाह। प्रत्युत्पन्नेत्यादि। तन्मात्रसमानकालीनत्वे सतीत्यर्थः। बुद्ध्यादित्वमात्रस्य हेतुत्वे सर्गक्रमे पञ्चतन्मात्रोत्पत्तेः पूर्वं बुद्ध्यादिषु बुद्ध्यादित्वरूपस्य हेतोः सत्त्वात्तत्र च उक्तसाध्यस्यासत्त्वाद्व्यभिचारःस्यात् अतो हेतौ प्रत्युत्पन्नपञ्चतन्मात्रवत्त्वे सति इति विशेषणम्। तथाच तदानीं पञ्चतन्मात्रोत्पत्त्यभावेन उक्तहेतोस्तत्राभावान्न व्यभिचार इति भावः। दृष्टान्तमाह। दृश्यमानेति। स्थूलशरीरेत्यर्थः। बुद्ध्यादित्वादित्युक्तौ घटादौ व्यभिचारः स्यात् तस्य शरीराश्रितत्वाभावादतस्तदुपादानम्। विना विशेषैरिति कारिकायामकारप्रश्लेषमाह। विना अविशेषैरिति। ननूक्तानुमानमप्रयोजकं इत्याशङ्कायामागमरूपं अनुकूलतर्कमाह। आगमश्चात्रेति। अत्र सूक्ष्मशरीरे। पुरुषं सत्यवतो देहं, सूक्ष्मशरीरस्य अङ्गुष्ठमात्रपरिणामकत्वे प्रमाणाभावेन अङ्गुष्ठमात्रपदं सूक्ष्मपरतया व्याचष्टे। अङ्गुष्ठमात्रत्वेनेति। ननूक्तवाक्ये पुरुषपदस्य शरीरार्थकत्वे किंप्रमाणमित्यत आह। आत्मन इति। निष्कर्षासम्भवेनेति। असङ्गस्य तस्य विभुनो वा निष्कर्षात्मक्रियाया असम्भवात् पुरुषपदं सूक्ष्मशरीरपरमेवेति भावः। तस्य पुरुषपदवाच्यत्वं योगेन दर्शयति। तदपीति। सूक्ष्मशरीरमपीत्यर्थः। पुरि स्थूलशरीरे, तथाच स्थूलशरीरवृत्तित्वरूपस्य योगार्थस्य सूक्ष्मशरीरसाधारणत्वमिति तस्य पुरुषपदार्थत्वं युक्तमेवेति।

कारिकान्तरमवतारयति। एवमिति। उक्तप्रकारेणेत्यर्थः। यथा येन प्रकारेण, संसरति पूर्वदेहं परित्यज्य देहान्तरमुपादत्ते, तथाच सूक्ष्मशरीरस्य पूर्वदेहपरित्यागपूर्वकदेहान्तरोपादानहेतुं तत्प्रकारञ्चाहेत्यर्थः।

पुरुषार्थहेतुकमित्यत्र पुरुषार्थो हेतुः प्रयोजको यस्य तत्पुरुषार्थहेतुकमितिरीत्या व्याचष्टे। पुरुषार्थेनेति। भोगापवर्गात्मकेनेत्यर्थः। प्रयुक्तं प्रेरितम्। निमित्तनैमि-

धर्माधर्मादि, "नैमित्तिकम्" तेषु तेषु निकायेषु यथायथं षाट्कौशिकशरीरग्रहः, स हि धर्मादिनिमित्तप्रभवः । निमित्तञ्च नैमित्तिकञ्च—तत्र यः प्रसङ्गः प्रसक्तिस्तया "नटवद्व्यवतिष्ठते लिङ्गम्" सूक्ष्मशरीरम् । यथा हि नटस्तां तां भूमिकां विधाय परशुरामो वाऽजातशत्रुर्वा वत्सराजो वा भवति, एवं तत्तत्स्थूलशरीरपरिग्रहणाद्देवो वा मनुष्यो वा पशुर्वा वनस्पतिर्वा भवति सूक्ष्मं शरीरमित्यर्थः ।

कुतस्त्यः पुनरस्येदृशो महिमेत्यत आह—"प्रकृतेर्विभुत्वयोगात्"इति । तथा च पुराणम्—"वैश्वरूप्यात् प्रधानस्य परिणामोऽयमद्भुतः"इति ॥ ४२ ॥

"निमित्तनैमित्तिकप्रसङ्गेन" इत्युक्तम्—तत्र निमित्तनैमित्तिके विभजते—

**सांसिद्धिकाश्च भावाः प्राकृतिका वैकृताश्च धर्माद्याः ।**
**दृष्टाः करणाश्रयिणः कार्याश्रयिणश्च कललाद्याः ॥४३॥**

"सांसिद्धिकाश्च" इति । "वैकृताः" नैमित्तिकाः, पुरुषस्य जातस्योत्तरकालदेवताराधनादिनोत्पन्नाः । "प्राकृतिकाः", स्वाभाविका भावाः सांसिद्धिकाः ।

---

त्तिकेत्यत्र निमित्तपदार्थमाह । निमित्तं धर्मादीति । आदिना ज्ञानादिपरिग्रहः । निमित्ताज्जातं नैमित्तिकमिति व्युत्पत्त्या नैमित्तिकपदं धर्माधर्माद्युत्पन्नस्य शरीरपरिग्रहस्योपलक्षकमित्याशयेन नैमित्तिकपदं व्याचष्टे । तेषु तेष्विति । नैमित्तिकपदस्य उक्तशरीरपरिग्रहार्थकत्वे हेतुमाह । स हीति । उक्तशरीरपरिग्रहो हीत्यर्थः । प्रसक्तिरिति । अनुरक्तिरित्यर्थः ।

व्यवतिष्ठते व्यवहरतीत्यर्थः । अत्रैव दृष्टान्तमाह । नटवदिति । उक्तं दृष्टान्तं विशदयति । यथा हीति । तां तां भूमिकां तथाविधवेषभूषादिकं, अजातशत्रुः युधिष्ठिरः, वत्सराजः रत्नावलीनाटिकाप्रसिद्धः उदयनः ।

प्रकृतेर्विभुत्वयोगादिति कारिकाभागं व्याख्यातुमाशङ्कते । कुतस्त्य इति । कुतो भवः कुतस्त्यः किंकारणक इत्यर्थः । विभुत्वयोगात् विभुत्वस्य सम्बन्धादित्यर्थः । वैश्वरूप्यात् समस्तजगत्स्वरूपत्वात् कार्यकारणयोरभेदात्, अद्भुत इति । तथाच प्रकृत्यापूरापगमाभ्यां सर्वं कार्यजातं विचित्रं सम्भवत्येवेति भावः ।

कारिकान्तरमवतारयति । निमित्तेति । कारिकायां सांसिद्धिकाश्चेति । अयमर्थः करणाश्रयिणः करणं महत्तत्त्वरूपं आश्रयन्ते अधितिष्ठन्तीति करणाश्रयिणः धर्माद्या भावाः सांसिद्धिका असांसिद्धिकाश्चेति द्विविधाः, तत्र ये प्राकृतिकाः ते सांसिद्धिकाः ये त्वप्राकृतिका वैकृताः ते असांसिद्धिका इति । कौमुद्यां वैकृता नैमित्तिका इति । उपायानुष्ठानात्मकनिमित्तप्रभवा इत्यर्थः । स्वाभाविका इति । स्वाश्रयोत्पत्तिकाले उत्पन्ना इत्यर्थः । सांसिद्धिकधर्मज्ञानवैराग्यैश्वर्यात्मकसात्त्विकभावोदा-

तथा हि—सर्गादावादिविद्वानत्रभवान् कपिलो महामुनिर्धर्मज्ञानवैराग्यैश्वर्यसम्पन्नः प्रादुर्बभूवेति स्मरन्ति ।

वैकृताश्च भावा असांसिद्धिकाः, ये उपायानुष्ठानेनोत्पन्नाः, यथा प्राचेतसप्रभृतीनां महर्षीणाम् । एवमधर्माज्ञानावैराग्यानैश्वर्याण्यपि ।

कार्यं शरीरं तदाश्रयिणः, तस्याऽवस्थाः, कललबुद्बुदमांसपेशीकरण्डाद्यङ्गप्रत्यङ्गव्यूहाः गर्भस्थस्य, ततो निर्गतस्य बालस्य बाल्यकौमारयौवनवार्धकानीति ॥ ४३ ॥

अवगतानि निमित्तनैमित्तिकानि । कतमस्य तु निमित्तस्य कतमन्नैमित्तिकमित्यत आह—

**धर्मेण गमनमूर्ध्वं, गमनमधस्ताद्भवत्यधर्मेण ।**
**ज्ञानेन चाऽपवर्गो, विपर्ययादिष्यते बन्धः ॥ ४४ ॥**

"धर्मेण गमनमूर्ध्वम्" द्युप्रभृतिषु लोकेषु । "गमनमधस्ताद्भवत्यधर्मेण", सुतलादिषु लोकेषु । "ज्ञानेन चाऽपवर्गः" । तावदेव प्र-

---

हरणमाह । यथेति । स्मरन्ति इति । ऋषिं प्रसूतं कपिलं यस्तमग्रे ज्ञानैर्बिभर्ति इत्यादिश्रुतिमूलकस्मृतेः । असांसिद्धिकानामुदाहरणमाह । यथा प्राचेतसप्रभृतीनामिति । तथा च प्राचेतसादीनां जन्मत एव धर्मादियुक्तत्वविरहेण उपासनाद्यनुष्ठानेन धर्माद्युत्पत्त्या तेषां भावानां वैकृतत्वमेव । सात्त्विकभावानां सांसिद्धिकासांसिद्धिकभेदेन द्विविधत्वेऽपि तामसानां अधर्मादीनां नैमित्तिकत्वमेवास्तीत्याह । एवमिति। असांसिद्धिकानीति शेषः । कारिकाचतुर्थभागं व्याचष्टे । कार्यमित्यादिना । घटादिरूपकार्याणां कललाद्यवस्थाया अभावेन कारिकायां कार्यपदं शरीरपरमित्याह । कार्यं शरीरमिति । कललाद्या इत्यत्राद्यपदग्राह्यानाह । कललबुद्बुदमांसेत्यादि । तत्र कललं रजसा संयुक्तं जरायुपरिवेष्टितं रेतः, तच्च एकदिनेन भवति । बुद्बुदं शुक्रस्याधोभावेन शोणितस्योर्ध्वभावेनावस्थानम्, तच्च पञ्चरात्रेण भवति, मांसपेशी रक्तसहितः मांसपिण्डः, स च सप्तरात्रेण भवति । करण्डं अङ्कुरं, तच्च पञ्चविंशतिरात्रिषु गतासु भवति, अनन्तरं अङ्गानि ग्रीवाशिरस्कन्धपृष्ठवंशोदररूपाणि, प्रत्यङ्गानि । अङ्गुल्यादीनि च जायन्ते । एताः पूर्वोक्ताः सर्वा अवस्थाः गर्भस्य भवन्तीत्याह । गर्भस्थस्येति । गर्भकालीनावस्थाः प्रतिपाद्य उत्तरकालीनाः ताः प्रतिपादयति । ततो निर्गतस्येति । ततः गर्भात् । बाल्यम् स्पष्टशब्दोच्चारणात् पूर्वावस्था । कौमारं श्मश्रूद्गमात् पूर्वावस्था । यौवनं इन्द्रियप्राबल्यावस्था । वार्धकं इन्द्रियाणां क्षीणावस्था । तथा चोक्तरीत्या वैकृतानां भावानां करणाश्रयित्वं कार्याश्रयित्वं च दृष्टमेवेत्यर्थः ।

कारिकान्तरमवतारयति । अवगतानीति । निमित्तस्य धर्मादिरूपस्य, नैमित्तिकं कार्यम् ।

ऊर्ध्वंस्यस्य विवरणं द्युप्रभृतिषु लोकेष्विति । एतेषां लोकानां ऊर्ध्वत्वं च पुराणादिभ्योऽवगन्तव्यम् । अधस्तादित्यस्यार्थः सुतलादिष्विति । ज्ञानेन सत्त्वपुरुषान्यताप्रत्ययेन साक्षात्कारात्मकेन, अपवर्गः मोक्षः, प्रकृतेर्नित्यतया प्रकृतिपुरुषभेदग्रहे

कृतिभोगमारभते न यावद्विवेकख्यातिं करोति । अथ विवेकख्यातौ सत्यां कृतकृत्यतया विवेकख्यातिमन्तं पुरुषं प्रति निवर्तते यथाऽऽहुः—

"विवेकख्यातिपर्यन्तं ज्ञेयं प्रकृतिचेष्टितम्" इति ॥

"विपर्ययात्" अतत्त्वज्ञानात् "इष्यते बन्धः" ॥

स च त्रिविधः—प्राकृतिको वैकृतिको दाक्षिणकश्चेति । तत्र प्रकृतावात्मज्ञानाद्ये प्रकृतिमुपासते तेषां प्राकृतिको बन्धः, यः पुराणे प्रकृतिलयान् प्रत्युच्यते ।

"पूर्णं शतसहस्रं हि तिष्ठन्त्यव्यक्तचिन्तकाः" इति ॥

वैकारिको बन्धस्तेषां ये विकारानेव भूतेन्द्रियाहङ्कारबुद्धीः पुरुषधियोपासते, तान् प्रतीदमुच्यते—

"दश मन्वन्तराणीह तिष्ठन्तीन्द्रियचिन्तकाः ।
भौतिकास्तु शतं पूर्णं, सहस्रं त्वाभिमानिकाः ॥
बौद्धा दश सहस्राणि तिष्ठन्ति विगतज्वराः ।"

"ते खल्वमी विदेहा येषां वैकृतिको बन्धः" इति । इष्टापूर्तेन

---

सत्यपि कुतो न बन्धः इत्याशङ्कायामाह । तावदेवेति । आरभते पुरुषभोगं जनयति ।
कृतकृत्यतया अपवर्गात्मकस्य मुख्यकृत्यस्य कृतत्वेन, तथाच भोगापवर्गात्मकस्यानाः
गतावस्थस्य पुरुषार्थस्यैव प्रवर्तकत्वेन उक्तस्थले उभयोरपि निष्पन्नत्वेनानागताव-
स्थाकत्वाभावान्न प्रकृतेः प्रवृत्तिरिति भावः । उक्तार्थे प्रमाणमाह । विवेकख्यातिपर्य-
न्तमिति । विपर्ययादित्यस्यार्थमाह । अतत्त्वज्ञानादिति ।
बन्धं विभजते । स च त्रिविध इति । प्राकृतिकबन्धस्य स्वरूपमाह । तत्रेति । तेषु
मध्ये इत्यर्थः । प्रकृतावात्मज्ञानादिति । आत्मत्वेन प्रकृतिविशेष्यकज्ञानादित्यर्थः ।
प्रकृतिमुपासते पुरुषबुद्ध्येति शेषः । प्रकृतिलयान् प्रकृतौ लयो येषां तान् प्रतीत्यर्थः ।
उक्तार्थे पुराणमाह । पूर्णं शतसहस्रं त्विति । मन्वन्तराणामिति शेषः । प्राकृतिकब-
न्धस्य स्वरूपं प्रदर्श्य वैकृतिकस्य स्वरूपमाह । वैकारिको बन्ध इति । इन्द्रियचि-
न्तकाः इन्द्रियाणां आत्मबुद्ध्योपासकाः । भौतिकाः आत्मबुद्ध्या भूतोपासकाः, आ-
भिमानिकाः आत्मबुद्ध्या अहङ्कारोपासकाः, बौद्धाः आत्मबुद्ध्या महत्तत्त्वोपासकाः,
विगतज्वराः विगतदुःखत्रयाः, वैकृतिकबन्धवतां श्रुतिप्रसिद्धं संज्ञान्तरमाह । विदे-
हा इति । अत्र च इन्द्रियाद्यपेक्षया अभिमानादीनां अव्यक्तत्वेन तेषां आत्मबुद्ध्योपा-
सनस्य अधिकफलत्वं बोध्यम् । तृतीयबन्धस्वरूपमाह । इष्टापूर्तेनेति । इष्टं यागादि,
आपूर्तं वापीकूपतडागादि तज्जन्य इत्यर्थः । दाक्षिणक इति । उक्तस्य यागादेः
दक्षिणासम्बद्धत्वात् तत्कारिणां दक्षिणमार्गगामित्वाच्च दाक्षिणक इति उक्तबन्ध-
स्यानुगुणमेवाभिधानमिति । ननु यागादिषु शरीरादिभ्यो भेदेनात्मज्ञानवत एवा-
धिकारितया तद्विपर्ययादिष्यते बन्ध इत्यनेन आत्मज्ञानाभाववत एव बन्धो भवती-
त्युक्तिर्न युक्ता उक्तयागादिकर्तुरात्मज्ञानवत्त्वात् तस्य च दाक्षिणकबन्धजननादि-
त्याशङ्कायामाह । पुरुषतत्त्वानभिज्ञो हीति । असङ्गत्वाकर्तृत्वादिरूपपुरुषतत्त्वानभिज्ञ

दाक्षिणकः। पुरुषतत्त्वानभिज्ञो हीष्टापूर्तकारी कामोपहतमना बध्यते इति ॥ ४४ ॥

**वैराग्यात् प्रकृतिलयः, संसारो भवति राजसाद्रागात्।**
**ऐश्वर्यादविघातो, विपर्ययात्तद्विपर्यासः ॥ ४५ ॥**

"वैराग्यात प्रकृतिलयः" इति। पुरुषतत्त्वानभिज्ञस्य वैराग्यमात्रात् प्रकृतिलयः, प्रकृतिग्रहणेन प्रकृतिमहदहङ्कारभूतेन्द्रियाणि गृह्यन्ते, तेष्वात्मबुद्ध्योपास्यमानेषु लयः। कालान्तरेण च पुनराविर्भवति।

"संसारो भवति राजसाद्रागात्" इति। 'राजसात्' इत्यनेन रजसो दुःखहेतुत्वात् संसारस्य दुःखहेतुता सूचिता।

"ऐश्वर्यादविघातः" इति। इच्छायाः। ईश्वरो हि यदेवेच्छति तदेव करोति। "विपर्ययात्"—अनैश्वर्यात्, "तद्विपर्यासः"—सर्वत्रेच्छाविघात इत्यर्थः ॥ ४५ ॥

---

इत्यर्थः। तथाचोक्तयागादिकर्तुः शरीराद्यपेक्षया पुरुषस्य भेदग्रहेऽपि बुद्ध्यपेक्षया भेदग्रहो नास्त्येवेति सत्त्वपुरुषान्यताख्यातिरूपज्ञानाभाववत इष्टापूर्तकारिणः दाक्षिणको बन्धः सङ्गत एव। इष्टापूर्तकारिणः पुरुषतत्त्वानभिज्ञत्वे प्रमाणमाह। कामोपहतमना इति। कामेन स्वर्गादिकामनया, उपहतं भ्रान्तं मनो यस्य तथाभूतः तथाच स्वर्गादिकामनावत एव यागाधिकारित्वेन कामनायाः बुद्धिधर्मत्वेनात्मनि तज्ज्ञानस्य विवेकाग्रहनिमित्ततया यागाद्यधिकारिणः तत्त्वानभिज्ञत्वं स्पष्टमेव।

धर्माधर्मज्ञानाज्ञानरूपस्य बुद्धिधर्मचतुष्टयस्य कार्यं प्रतिपाद्य सम्प्रति अवशिष्टानां वैराग्यावैराग्यैश्वर्यानैश्वर्याणां तदाह कारिकायां वैराग्यादिति।

तत्त्वज्ञानिनः वैराग्यस्य प्रकृतिलयसाधनत्वाभावादाह। पुरुषतत्त्वानभिज्ञस्येति। वैराग्यमात्रादिति। मात्रपदेन पुरुषतत्त्वजिज्ञासाव्यवच्छेदः।

वैराग्यसत्त्वे प्रकृतिमात्मत्वेन उपासमानानां यथा प्रकृतिलयो भवति एवमेव बुद्ध्यादीनात्मत्वेनोपासमानानां बुद्ध्यादावपि लयो भवत्येव, उक्तदश मन्वन्तराणीत्यादिपुराणवचनात् तथा च वैराग्यात्प्रकृतिमात्रलयाभिधानमसङ्गतमित्यत आह। प्रकृतिग्रहणेनेति। प्रकृतिपदेनेत्यर्थः। कालान्तरेणेति। दश मन्वन्तरादिरूपपूर्वोक्तकालानन्तरमित्यर्थः।

सम्प्रति वैराग्यप्रतिपक्षभूतस्य रागस्य कार्यमाह। संसार इति। रागस्य राजसत्वं सिद्धमेवेति तदुपादानं नातिप्रयोजनकमित्यत आह। राजसादित्यनेनेति।

अविघातः कस्य भवतीत्याशङ्कायामाह। इच्छाया इति। गमनप्रतिबन्धकसत्त्वे गमनाभावरूपस्य विघातस्य इच्छायां गमनासम्भवेनासम्भवात् प्रकृतेऽविघातपदार्थं सूचयन्नाह। ईश्वरो हीति। समर्थ इत्यर्थः। तदेव करोतीति। कृत्या तदेव साधयतीत्यर्थः। सर्वत्रेति। यद्यपि अणिमाद्यष्टविधैश्वर्याभाववतामस्माकं भोजनादीच्छासत्त्वे तस्या विघातो न भवति इति सर्वत्रेच्छाविघातः अनीश्वरस्य भवतीत्युक्तिः न सङ्गच्छते। तथापि सर्वसामर्थ्याभावे भोजनादीच्छासत्त्वे तस्या अपि विघातो भवत्येवेति।

बुद्धिधर्मान् धर्मादीनष्टौ भावान् समासव्यासाभ्यां मुमुक्षूणां हेयोपादेयान् दर्शयितुं प्रथमं तावत् समासमाह—

**एष प्रत्ययसर्गो विपर्ययाशक्तितुष्टिसिद्ध्याख्यः।**
**गुणवैषम्यविमर्दात्, तस्य च भेदास्तु पञ्चाशत् ॥४६॥**

"एषः" इति। प्रतीयते ऽनेनेति प्रत्ययो बुद्धिः, तस्य सर्गः। तत्र—"विपर्ययः"—अज्ञानमविद्या, साऽपि बुद्धिधर्मः। "अशक्तिः" अपि करणवैकल्यहेतुका बुद्धिधर्म एव। "तुष्टिसिद्धी" अपि वक्ष्यमाणलक्षणे बुद्धिधर्मावेव। तत्र विपर्ययाशक्तितुष्टिषु यथायोगं सप्तानां धर्मादीनां ज्ञानवर्जमन्तर्भावः, सिद्धौ च ज्ञानस्येति।

व्यासमाह—"तस्य च भेदास्तु पञ्चाशत्"इति। कस्मात्? "गुणवैषम्यविमर्दात्" इति। गुणानां वैषम्यम्—एकैकस्याऽधिकब-

---

कारिकान्तरमवतारयति। धर्मादीनिति। आदिना अधर्मज्ञानाज्ञानवैराग्यावैराग्यैश्वर्यानैश्वर्याणां परिग्रहः। भावान् पदार्थान्, समासव्यासाभ्यां संक्षेपविस्ताराभ्याम्, हेयोपादेयानिति। अधर्मादयः मुमुक्षुणा हेयाः धर्मादयस्तु सात्त्विका उपादेयाः।

प्रत्ययपदस्य बुद्धिरूपार्थकत्वं दर्शयितुं अवयवार्थमाह। प्रतीयतेऽनेनेति। प्रतीयते निश्चीयते, अध्यवसायरूपस्य निश्चयस्य बुद्धिधर्मत्वेन बुद्धिजन्यत्वात्। विपर्ययशब्दार्थस्य सप्रतियोगिकत्वेन तत्प्रतियोगिनं दर्शयन्नाह। अज्ञानमिति। ज्ञानभावरूपस्याज्ञानस्य बुद्धिकार्यत्वासम्भवात्प्रकृते अज्ञानपदं विपरीतज्ञानार्थकमित्याशयेनाह। अविद्येति। अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिरविद्या इत्यादौ विपरीतज्ञानस्यैवाविद्यापदार्थत्वप्रतिपादनात्। सा च बुद्धिधर्म इति। तामसमस्माद्विपर्यस्तमिति कारिकांशेन अज्ञानस्य तामसबुद्धिधर्मत्वस्य पूर्वं प्रतिपादितत्वात्। एवं विपर्ययस्य बुद्धिधर्मत्वं प्रदर्श्य अशक्तेरपि बुद्धिधर्मत्वं दर्शयति। अशक्तिरपीति। अध्यवसायात्मकव्यापारजननेऽसामर्थ्यमित्यर्थः। नचालोचनसङ्कल्पाभिमानेषु सत्सु अध्यवसायस्यावश्यंभावित्वेन कथं बुद्धेस्तद्व्यापारजननेऽसामर्थ्यमित्याशङ्कायामाह। करणवैकल्यहेतुकेति। करणानां त्रयोदशप्रकाराणां वैकल्यं दुष्टत्वं तदेव हेतुर्यस्या एवम्भूता इत्यर्थः। तथाच वक्ष्यमाणबाधिर्यादिकरणवैकल्यसत्त्वे आलोचनादीनामेवानुत्पत्त्या न अध्यवसायरूपव्यापारोत्पादनसामर्थ्यं बुद्धेः सम्भवतीति भावः। तुष्टिसिद्ध्योः बुद्धिधर्मत्वं दर्शयति। तुष्टिसिद्धी इति। वक्ष्यमाणे इति। अग्रिमकारिकायामिति शेषः। ननु तुष्ट्यादिभावानां धर्मादिरूपत्वाभावेन बुद्धिधर्मानष्टौ भावान् समासव्यासाभ्यामाहेत्युक्तिरसङ्गतेत्याशङ्कां निरसितुं तुष्ट्यादीनामत्रैवान्तर्भावमाह। विपर्ययाशक्तितुष्टिष्विति। यथायोगं सप्तानामिति। तथाहि विपर्यये अविद्यारूपे अज्ञानस्यान्तर्भावः स्पष्ट एव। कार्यकारणयोरभेदेन अशक्तौ अधर्मावैराग्यानैश्वर्याणां, तुष्टौ च धर्मवैराग्यैश्वर्याणामन्तर्भावः।

व्यासप्रतिपादकत्वेन कारिकार्धं व्याख्यातुमाह। व्यासमाहेति। बुद्धिधर्माणामिति शेषः। व्यासः विस्तरः। ननु कथमेकस्मात्कारणादेतावन्ति कार्याणि इत्याशङ्कते। कस्मादिति। समाधत्ते गुणवैषम्येति। वैषम्यपदार्थमाह। ऐकैकस्येति।

लता द्वयोर्द्वयोर्वा, एकैकस्य न्यूनबलता द्वयोर्द्वयोर्वा, ते च न्यूनाधिक्ये मन्दमध्याधिमात्रतया यथाकार्यमुन्नीयेते । तदिदं गुणानां वैषम्यम्, तेनोपमर्दः, एकैकस्य न्यूनबलस्य द्वयोर्द्वयोर्वाऽभिभवः । तस्माच्चस्य भेदाः पञ्चाशदिति ।

तानेव पञ्चाशद्भेदान् गणयति—

**पञ्च विपर्ययभेदा भवन्त्यशक्तिश्च करणवैकल्यात् ।**
**अष्टाविंशतिभेदा तुष्टिर्नवधाऽष्टधा सिद्धिः ॥ ४७ ॥**

"पञ्च" इति । अविद्याऽस्मितारागद्वेषाभिनिवेशा यथासङ्ख्यं तमोमोहमहामोहतामिस्रान्धतामिस्रसञ्ज्ञकाः पञ्च विपर्ययविशेषाः । विपर्ययप्रभवाणामप्यस्मितादीनां विपर्ययस्वभावत्वात् ।

यद्वा—यदविद्यया—विपर्ययेणाऽवधार्यते वस्तु, अस्मितादयस्त-

---

न्यूनबलतेति । यद्यपि द्वयोर्द्वयोरधिकबलतायां एकैकस्य न्यूनबलता सिद्धैव, तथापि क्वचित्कार्ये एकैकस्य न्यूनबलता प्रयोजिका क्वचिच्च द्वयोरधिकबलतेति द्योतयितुं पृथगभिधानम् । ननु न्यूनाधिक्ये गुणानां कथं प्रत्येतव्ये इत्याशङ्कायामाह । त चेति । मन्दा अल्पा, मध्या नात्यल्पा नात्यधिका, एवमधिका मात्रा येषां तथाभूतकार्यानुसारेण गुणानां न्यूनाधिक्येऽवगन्तव्ये, तथाच कार्ये अधिकदुःखदर्शने रजोगुणस्याधिक्यमवगन्तव्यमित्यादिरीत्या गुणानां न्यूनाधिक्ये बोध्ये इति भावः । द्वयोर्द्वयोर्वेति । न्यूनबलस्येति न्यूनबलयोरिति विभक्तिविपरिणामेनानुषज्यते । उपसंहरति । तस्मादिति । तस्येति । बुद्धिसर्गस्येत्यर्थः ।

कारिकान्तरमवतारयति । तानेवेति । अविद्याऽस्मितारागद्वेषाभिनिवेशाः क्लेशाः । इति योगसूत्रे क्लेशपदस्य विपर्ययार्थकत्वं भाष्यकृतोक्तमिति तदनुसारेण विपर्ययस्य पञ्चविधत्वमाह । अविद्यास्मितेति । अविद्यादीनां पञ्चानां नामान्तराण्याह । तमो मोहेति । यथासंख्यमविद्यादीनां एतानि नामानि । विपर्ययविशेषा इति । मुमुक्षूणां हेयभूता विपर्यया इत्यर्थः । उक्तविपर्यायाणामेव क्लेशमूलत्वात् । एतेन अविद्यारूपस्य अतस्मिँस्तद्बुद्ध्यात्मकस्य विपर्ययस्य शुक्तिरजतादिविपर्ययेपि सत्त्वेन तस्याविभजनाच्च न्यूनत्वं । नन्वस्मितादीनां विपर्ययरूपत्वं न सम्भवति अनात्मसु आत्मबुद्धेरेवोक्तस्थले अविद्यारूपत्वेन एतादृशस्याविद्यात्वस्य अहमस्मीत्याकारकाभिमानितारूपास्मितायां रागादौ चाभावात् इत्याशङ्कानिरासायाह । विपर्ययप्रभवाणामपीति । तथा चास्मितादीनां विपर्ययरूपत्वाभावेपि विपर्ययजन्यत्वात् कार्यकारणयोश्चाभेदाद् विपर्ययत्वोपचारात् विपर्ययत्वव्यवहार इति भावः ।

ननु नैतत्सम्भवति कार्यकारणयोरभेदात् अस्मितादीनामपि विपर्ययत्वमिति । उपादानोपादेययोरेवाभेदाङ्गीकारेण विपर्ययस्य चास्मितादिषु निमित्तकारणत्वेनोपादानत्वविरहेणास्मितादिभिः सहाविद्याया अभेदासम्भवात् इत्यत आह । यद्वेति । यद्वस्तु अविद्यया तमोरूपया, विपर्ययेण वैपरीत्येन, अवधार्यते, अस्मितादयस्तत्स्व-

त्स्वभावाः सन्तस्तदभिनिविशन्ते । अत एव 'पञ्चपर्वाऽविद्या' इत्याह भगवान् वार्षगण्यः ।

सम्प्रति पञ्चानां विपर्ययभेदानामवान्तरभेदमाह—

**भेदस्तमसोऽष्टविधो मोहस्य च, दशविधो महामोहः ।**
**तामिस्रोऽष्टादशधा, तथा भवत्यन्धतामिस्रः ॥ ४८ ॥**

"भेदः" इति । भेदस्तमसोऽविद्याया अष्टविधः । अष्टस्वव्यक्तमहदहङ्कारपञ्चतन्मात्रेष्वनात्मस्वात्मबुद्धिरविद्या तमः, अष्टविधविषयत्वात्तस्याऽष्टविधत्वम् ॥

---

भावाः सन्तः तत् अभिनिविशन्ते विषयीकुर्वन्ति । तथा चास्मितादीनां अविद्योपादानकत्वविरहेपि तद्विषयविषयत्वेनाविनाभावात्तेषु विपर्ययत्वोपचार इति भावः । अत्रैव विषये पूर्वाचार्यसम्मतिमाह । अत एवेति । पञ्चपर्वा पञ्चप्रकारा इत्यर्थः । वार्षगण्यः तदाख्यः साङ्ख्याचार्यः । 'तमो मोहो महामोहो तामिस्रो ह्यन्धसंज्ञकः । अविद्या पञ्चपर्वैषा प्रादुर्भूता महात्मनः । इत्यादि विष्णुपुराणवचनमपि उक्तार्थं प्रमाणमनुसन्धेयम् । कारिकायां विपर्ययस्य पञ्च प्रकारानुक्त्वा अशक्तेः प्रकारानाह । भवन्त्यशक्तिश्चेति । ननु रोगादिकृतानामशक्तीनां रोगसमसंख्याकतया कथमष्टाविंशतिधाऽशक्तिस्तत्राह । करणवैकल्यादिति । करणानां चक्षुरादीनां यद्वैकल्यं अन्धत्वादिरूपं तस्मात् अष्टाविंशतिप्रकारा अशक्तिरित्यर्थः । एतच्चाग्रे कौमुद्यां स्फुटीभविष्यति । तुष्टेः प्रकारानाह । नवधेति । सिद्धेः प्रकारानाह । अष्टधेति । तथाच एतेषां सर्वेषां मेलने पञ्चाशत् संख्याकाः प्रकारा भवन्तीति पूर्वोक्तं तस्य तु भेदास्तु पञ्चाशदित्युपपन्नमेवेति ।

कारिकान्तरमवतारयति । सम्प्रतीति । अविद्याया अष्टविधविषयत्वेन अष्टविधत्वं दर्शयितुं अष्टसंख्याकान् तद्विषयानाह । अष्टस्विति । अनात्मस्विति । तथाचानात्मसु आत्मबुद्धिरेवाविद्या अनात्मनामष्टविधत्वेन तादृशबुद्धेरपि अष्टविधत्वात् अविद्याया अष्टविधत्वमिति । यद्यपि अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिरविद्या । इति योगसूत्रे अनित्ये नित्यबुद्धिः अशुचौ शुचिबुद्धिः दुःखे सुखबुद्धिरपि अविद्या पदेनोक्ता तथापि उक्तबुद्धीनामप्यनात्मसु आत्मबुद्धिरूपत्वमेव । यतो हि प्रकृत्यादीनां परिणामित्वेन नित्यत्वाभावात् आत्मन एव नित्यरूपतया अनित्ये नित्यबुद्धेः अनात्मसु आत्मबुद्धिरूपत्वं व्यक्तमेव एवं पुरुषस्यासङ्गतया दोषरहितत्वेन शुचित्वात् इतरेषां अशुचित्वात् अशुचौ शुचिबुद्धिरपि अनात्मनि आत्मबुद्धिरेव एवं आत्मनो निर्दुःखत्वेन इतरेषां च सत्त्वरजस्तमोगुणात्मकतया दुःखरूपत्वेन दुःखे सुखबुद्धेरपि अनात्मसु आत्मबुद्धिरूपतैव उक्तसूत्रे सुखपदस्य दुःखभिन्नार्थकत्वात् तस्मात्सुष्ठूक्तं अनात्मसु आत्मबुद्धिरविद्येति । अत्र यद्यपि पञ्चमहाभूतेष्वप्यनात्मसु आत्मबुद्धेः अविद्यात्वात् तस्या त्रयोदशविधत्वमेव वक्तुमुचितं न त्वष्टविधत्वं, तथापि मुमुक्षूणां हेयोपादेयानां इह निरूपणीयत्वेन पञ्चमहाभूतात्मकेषु शरीरादिषु आत्मत्वाभिमानिनां मुमुक्षुत्वासम्भवात् अष्टविधानामेवात्र परिगणनं कृतमिति ।

"मोहस्य च" इति, अत्राऽप्यष्टविधो भेदश्चकारेणाऽनुषज्यते। देवा ह्यष्टविधमैश्वर्यमासाद्याऽमृतत्वाभिमानिनोऽणिमादिकमात्मीयं शाश्वतिकमभिमन्यन्ते, सेयमस्मिता मोहोऽष्टविधैश्वर्यविषयत्वादष्टविधः।

"दशविधो महामोहः" इति। शब्दादिषु पञ्चसु दिव्यादिव्यतया दशविधेषु विषयेषु राग आसक्तिर्महामोहः, स च दशविधविषयत्वाद्दशविधः।

"तामिस्रः–" द्वेषः "अष्टादशधा", शब्दादयो दश विषया रञ्जनीयाः स्वरूपतः, ऐश्वर्यन्त्वणिमादिकं न स्वरूपतो रञ्जनीयम्, किं तु रञ्जनीयशब्दाद्युपायाः, ते च शब्दादय उपस्थिताः परस्परेणोपहन्यमानास्तदुपायाश्चाऽणिमादयः स्वरूपेणैव कोपनीया भवन्तीति शब्दादिभिर्दशभिः सहाऽणिमाद्यष्टकमष्टादशधेति, तद्विषयो द्वेषस्तामिस्रोऽष्टादशविषयत्वादष्टादशधेति।

"तथा भवत्यन्धतामिस्रः"। अभिनिवेशोऽन्धतामिस्रः। तथेत्य-

---

मोहस्य चेत्यत्र तद्विधावाचकपदाभावात् पूर्वोक्ताष्टविधो भेदः इत्यनुषञ्जनीयमित्याह। अत्रापीति। मोहस्य अष्टविधत्वं दर्शयितुमाह। देवा हीति। अष्टविधमिति। अणिमालघिमादिपूर्वोक्तमष्टप्रकारमित्यर्थः। अमृतत्वाभिमानिनः वयममृता इत्याकारकाभिमानवन्त इत्यर्थः। यद्यपि मनुष्यादीनामप्यष्टैश्वर्यसिद्धिः योगादिना सम्भवति। तथापि देवानां जन्मत एवैश्वर्यवत्त्वेन तेषामेवैश्वर्ये अमृतत्वाभिमानः सम्भवति। मनुष्यादीनामैश्वर्यस्य उपायाद्यनुष्ठानेनोत्पन्नतया उत्पत्तिमत्त्वहेतुना तेषु विनाशित्वनिश्चयेन तेषाममृतत्वाभिमानो न सम्भवत्येवेति देवानामेवात्रोपादानं कृतम्। शाश्वतिकं नित्यम्, तथाचोक्ताणिमाद्यष्टैश्वर्यविषयकः शाश्वतिकत्वाभिमान एव अस्मितापरपर्यायो मोह इत्यर्थः। एवं च ऐश्वर्यस्य अष्टविधत्वादस्मितापरपर्यायस्य मोहस्याप्यष्टविधत्वमिति। महामोहस्य दशविधत्वं दर्शयितुमाह। शब्दादिष्विति। आदिना स्पर्शरूपरसगन्धानां परिग्रहः। दिव्यादिव्यतयेति। दिव्याः देवभोग्याः अदिव्याः भौमाः, रञ्जनीयेषु इष्टसाधनेषु यो रागः आसक्तिः स एव महामोह इत्यर्थः। तस्य दशविधत्वं दर्शयति। दशविधविषयत्वादिति।

तामिस्रशब्दार्थमाह। द्वेष इति। द्वेषस्याष्टादशधात्वं दर्शयति। शब्दादयो दश विषया इति। स्वरूपत इति साक्षादित्यर्थः। स्वप्रत्यक्षमात्रेणेति यावत्। शब्दादीनां रञ्जनीयत्वात् तत्र द्वेषविषयत्वं कथं इत्याशङ्कायां तत्र द्वेषविषयत्वं दर्शयति। ते चेति। परस्परेणोपहन्यमानाः अन्योन्यं निवर्त्यमानाः। स्वरूपेणैव कोपनीया भवन्तीत्यग्रिमेणान्वयः। न केवलं परस्परेणोपहन्यमानानां शब्दादीनामेव कोपनीयत्वं अपि तु तदुपायभूतानामणिमादीनामपीत्याह। तदुपायाश्चेति। कोपनीयाः अनिष्टसाधनाः। अभिनिवेशस्यान्धतामिस्रापरपर्यायतायाः पूर्वमुक्तत्वेन अभिनिवेशपदार्थमाह। अभिनिवेशस्त्रास इति। अन्धतामिस्रसंख्याबोधकपदस्य कारिकायामभावेन

नेनाष्टादशधेत्यनुषज्यते । देवाः खल्वणिमादिकमष्टविधमैश्वर्यमासाद्य दश शब्दादीन् भुञ्जानाः-'शब्दादयो भोग्यास्तदुपायाश्चाऽणिमादयोऽस्माकमसुरादिभिर्मोपघानिषत' इति बिभ्यति । तदिदं भयमभिनिवेशोऽन्धतामिस्रोऽष्टादशविषयत्वादष्टादशधेति ।

सोऽयं पञ्चविधविकल्पो विपर्ययोऽवान्तरभेदाद्द्वाषष्टिरिति ॥

तदेवं पञ्च विपर्ययभेदानुक्त्वाऽष्टाविंशतिभेदामशक्तिमाह--

**एकादशेन्द्रियवधाः सह बुद्धिवधैरशक्तिरुद्दिष्टा ।**
**सप्तदश वधा बुद्धेर्विपर्ययात्तुष्टिसिद्धीनाम् ॥ ४९ ॥**

"एकादश"-इति । इन्द्रियवधस्य ग्रहो बुद्धिवधहेतुत्वेन, न स्वशक्तिभेदपूरणत्वेन । एकादशेन्द्रियवधाः—

बाधिर्यं कुष्ठिताऽन्धत्वं जडताऽजिघ्रता तथा ।
मूकता कौण्यपङ्गुत्वे क्लैब्योदावर्तमन्दताः ॥

यथासङ्ख्यं श्रोत्रादीनामिन्द्रियाणां वधाः । एतावत्येव तु तद्धे-

---

अष्टादशधेत्यस्यानुषङ्गमाह। तथेत्यनेनेति। अनिष्टशङ्कारूपस्य त्रासस्य अष्टादशधात्वं दर्शयितुं तस्य अष्टादशविषयानाह। देवाः खल्वित्यादिना । उपघानिषत विनाशिता भवेयुः । एवं प्रकारं यद्भयं तदेवान्धतामिस्र इत्यर्थः । अणिमाद्यष्टैश्वर्यविषयकत्वात् दिव्यादिव्यभेदेन दशविधशब्दादिविषयकत्वाच्चाष्टादशप्रकारोयमन्धतामिस्र इत्यभिप्रायः । तदेवं रीत्या सर्वेषां विपर्ययविशेषाणां मेलनेन द्वाषष्टिभेदो विपर्ययो जायत इत्याह । सोयमिति ।

विपर्ययाशक्तितुष्टिसिद्ध्याख्य इति कारिकायां विपर्ययोत्तरं अशक्तेः क्रमप्राप्ततया विपर्ययावान्तरभेदनिरूपणानन्तरं अशक्तेरवान्तरभेदोपदर्शिकां कारिकामवतारयति । तदेवमिति ।

इन्द्रियदोषरूपस्य इन्द्रियवधस्य इन्द्रियधर्मत्वेन कथं तस्य बुद्धिधर्मत्वं इत्याशङ्कां निराकर्तुमाह । इन्द्रियवधस्येति । ग्रहः ग्रहणं । बुद्धिवधहेतुत्वेनेति । इन्द्रियवधस्येत्यनुषज्यते । तथाच इन्द्रियवधा इत्यस्य इन्द्रियवधहेतुका बुद्धिवधा इत्यर्थः । एकादशेन्द्रियवधा इति । इन्द्रियाणां एकादशत्वात्, तानेवेन्द्रियवधानाह । बाधिर्यमित्यादिना । बाधिर्यं श्रोत्रेन्द्रियवधरूपः प्रसिद्ध एव । कुष्ठिता अयं च त्वगिन्द्रियवधः कुष्ठाख्यरोगे त्वगिन्द्रियेण प्रत्यक्षाजननात् । तथाहि आयुर्वेदे कुष्ठलक्षणावसरे 'दाहः कण्डूस्त्वचि स्वापः' इत्यादिना त्वगिन्द्रियस्य सुप्तत्वं प्रत्यक्षाजनकत्वरूपमुक्तम् । जडता रसनेन्द्रियदोषः । अजिघ्रता घ्राणेन्द्रियदोषः । एतान् पञ्चज्ञानेन्द्रियवधानुक्त्वा कर्मेन्द्रियवधानाह । मूकतेति । कौण्यं हस्तदोषः । पङ्गुत्वं पाददोषः । उदावर्तः गुदेन्द्रियदोषः,अस्मिन्रोगे मूत्रपुरीषादीनां कृच्छ्रेणाधोगतिर्भवति अतिवेगे तु न भवत्येव । मनोदोषमाह । मन्दतेति । प्रमाद इत्यर्थः । एतावत्येव एतावत्संख्याका एव, तद्धेतुका इन्द्रियवधहेतुका, स्वव्यापारे अध्यवसायात्मके बुद्धेर्भवति । तथा च इन्द्रियेषु बाधिर्यादिदोषसत्वे द्वारभूतैरिन्द्रियैरगृहीते विषये तत्तद्विषये सङ्कल्पाभि-

तुका बुद्धेरशक्तिः स्वव्यापारे भवति। तथा चैकादशहेतुकत्वादेकादशधा बुद्धेरशक्तिरुच्यते। हेतुहेतुमतोरभेदविवक्षया च सामानाधिकरण्यम्।

तदेवमिन्द्रियवधद्वारेण बुद्धेरशक्तिमुक्त्वा स्वरूपतोऽशक्तीराह—"सह बुद्धिवधैः" इति। कति बुद्धेः स्वरूपतो वधा इत्यत आह "सप्तदश वधा बुद्धेः"। कुतः? "विपर्ययात्तुष्टिसिद्धीनाम्।" तुष्टयो नवधेति तद्विपर्ययास्तन्निरूपणान्नवधा भवन्ति, एवं सिद्धयोऽष्टाविति तद्विपर्ययास्तन्निरूपणादष्टौ भवन्तीति॥

---

मानयोरभावेन अध्यवसायोपि न भवतीत्यर्थः। नन्विन्द्रियाणां वधरूपाया अशक्तेरिन्द्रियधर्मत्वेन बुद्धिधर्मत्वं कथं इत्याशङ्कायामाह। हेतुहेतुमतोरिति। कार्यकारणयोरित्यर्थः।

स्वरूपत इति। स्वीयदोषहेतुकेत्यर्थः। तुष्टिसिद्धीनां विपर्ययात् बुद्धिवधानां सप्तदशधात्वं प्रदर्शयति। तुष्टयो नवधेति। तुष्टीनां नवधात्वं च अग्रे विशदो भविष्यति। ननु तुष्टीनां नवधात्वेपि तद्विपर्यायाणां नवधात्वं कथमित्याशङ्कायामाह। तन्निरूपणादिति। तैस्तुष्टिभेदैः निरूपणादित्यर्थः। तथा च तुष्ट्यवान्तरविशेषाणां प्रतियोग्यतावच्छेदकविशिष्टप्रतियोग्यानाम् भेदेन तन्निरूपकाणां व्यतिरेकाणां बुद्धिवैकल्यात्मकानामपि भेदः निर्बाध एव।

नास्ति प्रधानमिति प्रतीतिरसुवर्णानाम्नी प्रथमा अतुष्टिः। एवं नास्ति महत्तत्त्वमिति प्रतीतिरनिलानाम्नी द्वितीया। नास्त्यहङ्कार इति प्रतीतिर्मनोज्ञानाम्नी तृतीया। नैव सन्ति तन्मात्राणि भूताकाशादीनि चेति प्रतीतिरदृष्टिनाम्नी चतुर्थी। धनार्जनप्रवृत्तिरपरानाम्नी पञ्चमी। रक्षणप्रवृत्तिः सुपरानाम्नी षष्ठी। तत्क्षयदोषमपश्यतः प्रतिपत्तिरसुनेत्रानाम्नी सप्तमी। भोगासक्तिर्वसुनाडिका नाम्नी अष्टमी। हिंसादिदोषमपश्यतो भोगे प्रवृत्तिरनुत्तमाम्भसिकानाम्नी नवमी इति तुष्टेर्विपर्ययान्नव तुष्टयो भवन्तीति भावः। एवं सिद्धिविपर्ययादसिद्धयोऽष्टौ भवन्ति। तथाहि अध्ययनेन विना यत्किञ्चित्तत्त्वाविर्भावः अतारमित्याख्या प्रथमा। अन्यार्थशब्दश्रवणाज्जायमानं ज्ञानमशब्दः यथाशास्त्राध्ययनानुत्पन्नत्वादसुतारमित्याख्या द्वितीया। आगमाविरोध्यूहनं विना जायमानं ज्ञानमतारतारमित्याख्या तृतीया। असुहृत्प्राप्युपदेशाज्जायमानं विपरीतज्ञानमरम्यकं तदाख्या चतुर्थी। दानादिनाऽपरितुष्टाद्गुरोरुत्पन्नं वासनानुच्छेदकं ज्ञानं असदामुदितमिति पञ्चमी। आध्यात्मिकदुःखाभिभूतस्यापि संसारेऽनुद्वेगात् अजिज्ञासाऽप्रमोदमिति षष्ठी। आधिभौतिकदुःखाभिभूतस्यापि संसारेऽनुद्वेगादजिज्ञासाऽमुदितनाम्नी सप्तमी। आधिदैविकदुःखाभिभूतस्यापि संसारेऽनुद्वेगादजिज्ञासा अमोदमाननाम्नी अष्टमीत्यष्टौ असिद्धयः। उक्तनवतुष्टिविपर्ययाश्च मिलित्वा सप्तदश, ते एकादशेन्द्रियवधाश्च मिलित्वा अष्टाविंशतिभेदा अशक्तिरिति। तथाचोक्तरूपाणां तुष्टिसिद्धिप्रतिबन्धकानां बुद्धिवैकल्यरूपाणां अतुष्टयसिद्धीनां सप्तदशसंख्यत्वेन स्ववैकल्यहेतुकाया अशक्तेः सप्तदशसङ्ख्यत्वमुपपन्नमेवेति भावः।

तुष्टिर्नवधेत्युक्तम्, ताः परिगणयति—

**आध्यात्मिक्यश्चतस्रः प्रकृत्युपादानकालभाग्याख्याः ।**
**बाह्या विषयोपरमात् पञ्च नव तुष्टयोऽभिमताः ॥५०॥**

"आध्यात्मिक्यः" इति । आध्यात्मिक्यः—'प्रकृतिव्यतिरिक्त आत्माऽस्ति' इति प्रतिपद्य, ततो ऽस्य श्रवणमननादिना विवेकसाक्षात्काराय त्वसदुपदेशतुष्टो यो न प्रयतते, तस्याऽऽध्यात्मिक्यश्चतस्रस्तुष्टयो भवन्ति, प्रकृतिव्यतिरिक्तमात्मानमधिकृत्य यस्माच्चास्तुष्टयस्तस्मादाध्यात्मिक्यः । कास्ता इत्यत आह—"प्रकृत्युपादानकालभाग्याख्याः", प्रकृत्यादिराख्या यासां तास्तथोक्ताः ।

तत्र प्रकृत्याख्या तुष्टिर्यथा—कस्यचिदुपदेशे,—

'विवेकसाक्षात्कारो हि प्रकृतिपरिणामभेदस्तञ्च प्रकृतिरेव करोतीति कृतं तद्ध्यानाभ्यासेन, तस्मादेवमेवाऽऽस्व वत्स'—

इति सेयमुपदेष्टव्यस्य शिष्यस्य या तुष्टिः प्रकृतौ, सा तुष्टिः प्रकृत्याख्या 'अम्भः' उच्यते ।

या तु,—प्राकृत्यपि विवेकख्यातिर्न सा प्रकृतिमात्राद्भवति, मा

---

क्रमप्राप्तां तुष्टिं निरूपयति । तुष्टिर्नवधेत्युक्तमिति । सप्तचत्वारिंशत्कारिकायामिति शेषः । ताः तुष्टीः । आध्यात्मिकीनां तुष्टीनां स्वरूपमाह । प्रकृतिव्यतिरिक्त इति । प्रकृत्यादिभ्य इत्यर्थः । आदिना महत्तत्त्वादीनां परिग्रहः । व्यतिरिक्त इति । अत्यन्तभिन्न इति व्यर्थः । ततः उक्तप्रतिपत्त्यनन्तरं, असदुपदेशतुष्टो असन्तो ये उपदेशाः तेन तुष्टः सम्प्राप्तसन्तोषः यः श्रवणमननादिना श्रवणमननादिप्रयुक्तं यद्विवेकज्ञानं तदर्थं न प्रयतते तस्य उक्तविवेकज्ञानाप्रवृत्तिप्रयोजको असदुपदेशजन्यो यः सन्तोषः स एव आध्यात्मिकी तुष्टिरित्युच्यते । तासां आध्यात्मिकीपदार्थत्वे ।युक्तिमाह । प्रकृतिव्यतिरिक्तमात्मानमधिकृत्येत्यादि । अधिकृत्य विषयीकृत्य । असतां उपदेशानां चतुर्विधत्वेन तुष्टीनां चतुर्विधत्वमिति मनसि निधाय तासां चतस्रो विधा आह । कास्ता इति ।

प्रकृत्याख्यतुष्टिप्रयोजकीभूतं असदुपदेशं दर्शयितुमाह । तत्र प्रकृत्याख्या तुष्टिर्यथेति । विवेकसाक्षात्कारः संसारप्रयोजकीभूतविवेकाग्रहप्रतिपक्षभूतः प्रकृतिपुरुषयोर्भेदसाक्षात्कारः । प्रकृतिपरिणामभेद इति । प्रकृतेः प्रकृतिकार्यस्य महत्तत्त्वस्य, परिणामभेदः परिणामविशेषः । कार्यकारणयोरभेदात् प्रकृतिपदेन बुद्धितत्त्वस्य परिग्रहः । साक्षात्कारस्य अन्तःकरणवृत्तिविशेषरूपत्वेन प्रकृतिपरिणामविशेषस्वरूपत्वात् । प्रकृतिरेव करोतीति । प्रकृतेः परिणामस्वभावत्वात् । कृतम् अलम्, तद्ध्यानाभ्यासेन तस्य आत्मनः ध्यानस्याभ्यासेन । एवमेव श्रवणमननादिकं विहायैव, आस्व तिष्ठ । इति इत्याकारकोपदेशप्रयोज्या, प्रकृतौ प्रकृतिविषयिणी या तुष्टिः सा प्रकृतिरित्युच्यते । तस्या नामान्तरमप्याह । अम्भ उच्यते इति ।

उपादानाख्यां तुष्टिं निरूपयति । या त्विति । प्राकृत्यपि प्रकृतिपरिणामविशेष-

भूत्सर्वस्य सर्वदा, तन्मात्रस्य सर्वान् प्रत्यविशेषात्, प्रव्रज्यायास्तु सा भवति, तस्मात् प्रव्रज्यामुपाददीथाः, कृतं ते ध्यानाभ्यासेनाऽऽयुष्मन्–'

इति उपदेशे या तुष्टिः सोपादानाख्या 'सलिलम्' उच्यते।

या तु,–

प्रव्रज्याऽपि न सद्यो निर्वाणदेति सैव कालपरिपाकमपेक्ष्य सिद्धिं ते विधास्यति, अलमुत्तप्ततया तव'–

इति उपदेशे या तुष्टिः सा कालाख्या 'ओघः' उच्यते।

या तु,–न [प्रकृतेर्न] कालान्नाऽप्युपादानाद्विवेकख्यातिः, अपि तु भाग्यादेव। अत एव मदालसापत्यान्यतिबालानि मातुरुपदेशादेव विवेकख्यातिमन्ति मुक्तानि बभूवुः, तस्माद्भाग्यमेव हेतुर्नाऽन्यत्'–

---

रूपापि, सा विवेकख्यातिः न प्रकृतिमात्राद्भवतीति। मात्रग्रहणेन प्रकृत्यतिरिक्तस्यापि कस्यचित्कारणत्वं तत्रास्तीति सूचितम्। विवेकख्यातिं प्रति प्रकृत्यतिरिक्तस्य कारणत्वे युक्तिमाह। माभूत्सर्वस्य सर्वदा इति। तथाच विवेकख्यातिर्यदि प्रकृतिमात्रजन्या स्यात् सर्वस्य सर्वदा स्यात् नच तथा तस्मान्न सा प्रकृतिमात्रजन्या अपि तु कारणान्तरसापेक्षैव। तन्मात्रस्येति। प्रकृतिमात्रस्येत्यर्थः। सर्वान् प्रत्यविशेषात् सर्वपुरुषसाधारणत्वात्। किं तत् कारणान्तरं यत्प्रकृतिर्विवेकख्यात्यै अपेक्षते इत्याशङ्कायामाह। प्रव्रज्यायास्त्विति। सन्यासाश्रमादित्यर्थः। सा विवेकख्यातिः। उपाददीथाः स्वीकुर्याः, उपदेशे इति सतीति शेषः। उपादानाख्यायाः साङ्ख्यशास्त्रप्रसिद्धं संज्ञान्तरमाह। सलिलमुच्यत इति।

क्रमप्राप्तायाः कालाख्यायाः तुष्टेः स्वरूपमाह। या त्विति। प्रकृतिसहितप्रव्रज्यामात्रस्य कारणत्वं निरसितुमाह। न सद्यो निर्वाणदेति। न अव्यवहितोत्तरकाले मुक्तिदेत्यर्थः। तथाच प्रव्रज्यामात्रं यदि कारणं स्यात् तदा प्रव्रज्याव्यवहितोत्तरकाले मुक्तिः स्यात् नच तथा दृश्यते तस्मान्न प्रव्रज्यामात्रस्य हेतुत्वं। सैव प्रव्रज्यैव प्रव्रज्यासहकारिभूतं कारणान्तरमाह। कालपरिपाकमपेक्ष्येति। कालस्य परिपाकं फलजनकतावच्छेदकविशेषं आश्रित्येत्यर्थः। सिद्धिं विवेकख्यातिम्, विधास्यति करिष्यति, उत्तप्ततया उद्विग्नतया, कालाख्यायाः तुष्टेः संज्ञान्तरमाह। ओघ उच्यते इति।

भाग्याख्यां चतुर्थीं तुष्टिमाह। या त्विति। न कालादिति। न कालमात्रात् नाप्युपादानसहितात् कालात्। तर्हि किं कारणं विवेकख्यातेरित्याशङ्कायामाह। भाग्यादेवेति। एवकारेण कालोपादानादीनां कारणत्वव्यवच्छेदः नतु प्रकृतेः विवेकख्यातेः प्रकृतिविकाररूपत्वेन प्रकृतिजन्यत्वावश्यकत्वादित्याशयेन न कालान्नाप्युपादानादित्यनेन एवकारेण व्यवच्छिन्नत्वं कालोपादानयोरेवेति सूचितम्। अत एव "भाग्यं फलति सर्वत्र न विद्या नच पौरुषम्" इत्यभियुक्तोक्तिरपि सङ्गच्छते। यद्यपि दैवं पुरुषकारश्च कालश्च पुरुषोत्तम। त्रयमेतन्मनुष्याणां पिण्डितं स्यात् फलावहम्। इत्यादौ भाग्यस्येव पुरुषकारकालयोरपि फलहेतुत्वं प्रतिपादितम्। तथापि भाग्यस्य प्राधा-

इति उपदेशे या तुष्टिः सा भाग्याख्या 'वृष्टिः' उच्यते ।

बाह्या दर्शयति—"बाह्याः" तुष्टयः "विषयोपरमात् पञ्च" । याः खल्वनात्मनः प्रकृतिमहदहङ्कारादीनात्मेत्यभिमन्यमानस्य वैराग्ये सति तुष्टयस्ता बाह्याः, आत्मज्ञानाभावे सत्यनात्मानमधिकृत्य प्रवृत्तेरिति । ताश्च वैराग्ये सति तुष्टय इति वैराग्यहेतुपञ्चत्वाद्वैराग्याण्यपि पञ्च, तत्पञ्चत्वात् तुष्टयः पञ्चेति । उपरम्यतेऽनेनेत्युपरमो वैराग्यम्, विषयादुपरमो विषयोपरमः । विषयाः भोग्याः शब्दादयः पञ्च, उपरमा अपि पञ्च ।

तथा हि—अर्जनरक्षणक्षयभोगहिंसादोषदर्शनहेतुजन्मानः पञ्चोपरमा भवन्ति ।

तथा हि—सेवादयो धनार्जनोपायाः ते च सेवकादीन् दुःखाकुर्वन्ति,

"दृप्यद्दुरीश्वरद्वाःस्थदण्डिचण्डार्धचन्द्रजाम् ।
वेदनां भावयन् प्राज्ञः कः सेवास्वनुषज्जते ?" ।

एवमन्येऽप्यर्जनोपायाः दुःखा इति विषयोपरमे या तुष्टिः सैषा

---

न्यात् साधकतमत्वात्तस्य तस्यैवोपदेशो युक्तो न कालादेरिति भावः । उक्ततुष्टेः नामान्तरमाह । वृष्टिरुच्यते इति ।

आध्यात्मिकीनां तुष्टीनां चतुरः प्रकारानुक्त्वा बाह्यतुष्टेः प्रकारान्वक्तुमाह। बाह्या दर्शयति इति । बाह्यतुष्टेः स्वरूपमाह । याः खल्विति । अनात्मनः आत्मभिन्नान्, अहङ्कारादीत्यादिना भूतानां परिग्रहः । वैराग्ये सतीति । शब्दादिष्विति शेषः । उक्तुष्टीनां बाह्यत्वे हेतुमाह । आत्मज्ञानाभावे इति । प्रकृत्यादिभ्यो विवेकेनात्मज्ञानाभावे, बाह्यतुष्टेः वैराग्यपञ्चविधत्वप्रयुक्तं पञ्चविधत्वं दर्शयितुमाह । ताश्चेति । बाह्याश्चेत्यर्थः । तुष्टय इत्यग्रिमेण सम्बन्धः । इति वैराग्यपञ्चत्वात्, तुष्टेः पञ्चविधत्वं वैराग्यस्य पञ्चविधत्वे हेतुमाह । वैराग्यहेतुपञ्चविधत्वादिति ।

विषयोपरमादिति व्याचष्टे । उपरम्यते अनेनेति । उपरम्यते विषयोपभोगान्निःसुखीभूयते अनेनेति । विषयोपभोगनिवृत्तिसाधनत्वं वैराग्यस्य बोधितं भवति । विषयपदार्थमाह । भोग्याः शब्दादय इति । उपरमस्य पञ्चविधत्वं दर्शयितुं तेषां पञ्च कारणानि दर्शयति । तथाचेत्यादिना ।अर्जन रक्षण क्षय भोग हिंसारूपा ये दोषास्तेषां दर्शनेन जन्म येषां तथाभूता इत्यर्थः । अर्जनादीनां दुःखसाधनत्वरूपं दोषत्वं विशदीकरोति । तथाहीत्यादिना । सेवादय इति । सेवाया दुःखजनकत्वं दर्शयति । दृप्यदिति । दृप्यन् दर्पयुक्तः यः दुरीश्वरः दुष्टः स्वामी, द्वास्थाः द्वारि स्थिताः ये दण्डिनः दण्डधराः तेषां चण्डः असह्यः योऽर्धचन्द्रः अर्धचन्द्राकारांगुष्ठतर्जनीप्रमाणसंस्थानविशेषजन्यं गलपीडनं तस्माज्जातां वेदनां दुःखं भावयन् कः प्राज्ञः विचारी सेवासु अनुषज्जते प्रवृत्तो भवेत् अपितु न कोपि प्राज्ञः । सेवारूपस्यार्जनोपायस्य दुःखहेतुत्वं प्रदर्श्य अन्येषामपि तथात्वमाह । एवमन्येपीति । वाणिज्यादयस्तथाहि । वाणिज्यदुःखं भावयतः विषयोपरकस्य कस्यचित्तुक्तिरियम् ।

'पारम्' उच्यते ।

तथाऽर्जितन्धनं राजैकागारिकाग्निजलौघादिभ्यो विनङ्क्ष्यतीति तद्रक्षणे महद् दुःखमिति भावयतो विषयोपरमे या तुष्टिः सा द्वितीया 'सुपारम्' उच्यते ।

तथा महताऽऽयासेनार्जितं धनं भुज्यमानं क्षीयते इति तत्प्रक्षयं भावयतो विषयोपरमे या तुष्टिः सा तृतीया 'पारापारम्' उच्यते ।

एवं शब्दादिभोगाभ्यासात् प्रवर्धन्ते कामाः, ते च विषयाप्राप्तौ कामिनं दुःखाकुर्वन्तीति भोगदोषं भावयतो विषयोपरमे या तुष्टिः सा चतुर्थी 'अनुत्तमाम्भः' उच्यते ।

एवं नाऽनुपहत्य भूतानि विषयोपभोगः सम्भवतीति हिंसादोषदर्शनाद्विषयोपरमे या तुष्टिः सा पञ्चमी 'उत्तमाम्भः' उच्यते ।

एवमाध्यात्मिकीभिश्चतसृभिः, बाह्याभिश्च पञ्चभिः 'नव तुष्टयो-

---

क्षान्तं न क्षमया गृहोचितसुखं त्यक्तं न सन्तोषतः ।
सोढा दुःसहवातशीततपनक्लेशा न तप्तं तपः ॥
ध्यातं वित्तमहर्निशं नियमितैः प्राणैर्न शम्भोः पदं ।
तत्तत्कर्मकृतं यदेव मुनिभिस्तैस्तैः फलैर्वञ्चितम् ॥

इत्यादिकं द्रष्टव्यम् ।

इति ज्ञानजन्यो यो विषयोपरमः तस्मिन्सति या तुष्टिः सा पारमित्युच्यते इति ।

अर्जनस्य दुःखहेतुत्वं प्रतिपाद्य रक्षणस्य दुःखहेतुत्वं प्रतिपादयति । तथेति । एकागारिकश्चौरः जलौघः जलप्रवाहः । आदिना भूकम्पादिपरिग्रहः । महद्दुःखमिति । चौरादिभीत्या रात्रौ निद्राया अपि अप्राप्तेः । रक्षणदोषदर्शनजन्यायाः तुष्टेः संज्ञामाह । सुपारमिति ।

क्षयदोषदर्शनजन्यां तृतीयां तुष्टिं दर्शयितुं क्षयस्य दुःखत्वं दर्शयति । तथेति । महता आयासेन दुरीश्वरद्वाःस्थदण्डिचण्डार्धचन्द्रादिजन्येन कष्टेन, तस्याः संज्ञामाह । पारापारमिति ।

चतुर्थीमुदाहरति । एवमिति । अभ्यासः पौनःपुन्येन सम्बन्धः । वर्धन्ते इति । न जातु कामः कामानामुपभोगेन शाम्यति । हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते । इत्यादिवचनात् । ते च कामाश्च, विषयाप्राप्तौ विषयस्य इच्छाविषयस्य शब्दादेः अप्राप्तौ दुःखाकुर्वन्ति दुःखमुत्पादयन्ति । अस्या नामान्तरमाह । अनुत्तमाम्भ इति ।

पञ्चमीमाह । एवमिति । नानुपहत्येति । भूतहिंसां विनेत्यर्थः । भोजनादावपि कण्डनं पेषणं चुल्ली इत्यादिजन्यभूतहिंसाया अनिवार्यत्वात् । हिंसादोषदर्शनादिति । हिंसारूपदोषदर्शनादित्यर्थः । अस्या एव संज्ञामाह । उत्तमाम्भ इति ।

तुष्टेः नवविधत्वं दर्शयन् उपसंहरति । एवमिति । चतसृणां पञ्चानां च मेलने नवसंख्यायाः सम्भवादिति ।

विज्ञानभिक्षवस्तु पूर्वोक्तां वाचस्पतिव्याख्यां कल्पित्वमां कारिकामन्यथा व्या-

ऽभिमताः" ॥ ५० ॥

गौणमुख्यभेदैः सिद्धीराह—

ऊहः शब्दोऽध्ययनं दुःखविघातास्त्रयः सुहृत्प्राप्तिः ।
दानं च सिद्धयोऽष्टौ, सिद्धेः पूर्वोऽङ्कुशस्त्रिविधः ॥ ५१ ॥

"ऊहः" इति । विहन्यमानस्य दुःखस्य त्रित्वात्तद्विघातास्त्रय इतीमा मुख्यास्तिस्रः सिद्धयः, तदुपायतया त्वितरा गौण्यः पञ्च सिद्धयः, ता अपि हेतुहेतुमत्तया व्यवस्थिताः । तत्राऽऽद्याऽध्ययनलक्षणा सिद्धिर्हेतुरेव । मुख्यास्तु सिद्धयो हेतुमत्य एव । मध्यमास्तु हेतुहेतुमत्यः ।

---

ख्यातवानित्यादिना अनूद्य, तन्न, तद्व्याख्याततुष्टीनामभावस्य ज्ञानाद्यनुकूलत्वेनाशक्तिपरिभाषानौचित्यादिना उक्तव्याख्यानं खण्डितवन्तः । अयमत्र तेषामभिप्रायः, एकादशेन्द्रियवधाः सह बुद्धिवधैरशक्तिरुद्दिष्टा । सप्तदशवधा बुद्धेर्विपर्ययात्तुष्टिसिद्धीनाम् इति कारिकायां तुष्टिसिद्धीनां विपर्ययेण सप्तदशसंख्याका बुद्धेर्वधाः अशक्त्यपरपर्याया भवन्तीति प्रतिपादितं तद्धि तदा संगच्छेत यदि उक्ततुष्टीनां ज्ञानाविरोधित्वं भवेत् तदा उक्ततुष्ट्यभावे अशक्तिर्भवेत्, नच तदस्ति उक्ततुष्टीनां ज्ञानविरोधित्वात् तासामभावस्य ज्ञानानुकूलत्वेन अशक्तिपरिभाषानौचित्यादिति । तस्मात् तत्र प्रकृत्याख्या तुष्टिर्यथा साक्षात्कारपर्यन्तः परिणामः सर्वोऽपि प्रकृतेरेव तं च प्रकृतिरेव करोति अहं तु कूटस्थः पूर्णः इत्यात्मभावात् परितोषः । इयं तुष्टिः अम्भ इत्युच्यते । ततश्च प्रव्रज्योपादानेन या तुष्टिः सोपादानाख्या सलिलमित्युच्यते । ततश्च प्रव्रज्यायां बहुकालं समाध्यनुष्ठानेन या तुष्टिः सा कालाख्या ओघ इत्युच्यते । ततश्च प्रज्ञानपरमकाष्ठारूपे धर्ममेघसमाधौ सति या तुष्टिः सा भाग्याख्या वृष्टिरुच्यते । इत्येवं अस्मदीयं व्याख्यानमेव युक्तमिति च वदन्ति । तदेतन्नातिरमणीयमिव प्रतिभाति । तथाहि विपर्ययात्तुष्टिसिद्धीनामिति पूर्वकारिकायां विपर्ययस्य बुद्धिवधरूपाशक्तिहेतुत्वं तद्रूपत्वं वा न प्रतिपादितम् अपि तु बुद्धिवैकल्यस्य तुष्टिसिद्धिप्रतिबन्धकत्वात् तुष्टिसिद्धीनां सप्तदशसंख्यत्वेन तत्प्रतिबध्यनिरूपित प्रतिबन्धकत्वभेदेन एकस्यापि वैकल्यस्य सप्तदशसंख्यत्वं भवत्येवेति तुष्टिसिद्धीनां विपर्ययस्य बुद्धिवधानां सप्तदशत्वसाधकत्वमेव इति न काचिदनुपपत्तिः । किञ्च भवन्मते भाग्याख्यायाः तुष्टेः मुख्यसिद्धिगर्भतया मुख्यसिद्ध्युपादानवैयर्थ्यापत्तिः स्यात तस्मादुक्तव्याख्यानमेव युक्तमिति ।

कारिकान्तरमवतारयति । गौणमुख्यभेदा इति । क्रमप्राप्ता इति शेषः ।

मुख्यसिद्धेः त्रिविधत्वं दर्शयति । विहन्यमानस्य, विघातविषयीभूतस्य, त्रित्वात् आध्यात्मिकाधिभौतिकाधिदैविकभेदेन त्रिविधत्वात् तद्विघाता दुःखविघाताः, मुख्या इति ।। मुख्यत्वं च इतरेच्छानधीनेच्छाविषयत्वं, तथाच दुःखत्रयनिवृत्तेरिच्छाया इतरेच्छानधीनत्वात् तद्विषयीभूतायाः दुःखत्रयनिवृत्तेः मुख्यसिद्धित्वं । इतरासां पञ्चसिद्धीनां इतरेच्छाधीनेच्छाविषयत्वरूपगौणत्वे हेतुमाह। तदुपायतयेति। दुःखत्रय-

विधिवद् गुरुमुखादध्यात्मविद्यानामक्षरस्वरूपग्रहणमध्ययनं प्रथमा सिद्धिस्तारमुच्यते ।

तत्कार्यम्—शब्दः; 'शब्दः' इतिपदं शब्दजनितमर्थज्ञानमुपलक्षयति, कार्ये कारणोपचारात्। सा द्वितीया सिद्धिः 'सुतारम्' उच्यते । पाठार्थाभ्यां तदिदं द्विधा श्रवणम् ।

"ऊहः"—तर्कः—आगमाविरोधिन्यायेनाऽऽगमार्थपरीक्षणम्। परीक्षणञ्च संशयपूर्वपक्षनिराकरणेनोत्तरपक्षव्यवस्थापनम् । तदिदं मननमाचक्षते आगमिनः । सा तृतीया सिद्धिः 'तारतारम्' उच्यते ।

---

निवृत्त्युपायतयेत्यर्थः । तथाच उपायेच्छां प्रति फलेच्छायाः कारणत्वात् उक्तपञ्चविधसिद्धीनां दुःखत्रयनिवृत्तरूपफलेच्छाधीनेच्छाविषयत्वात् गौणप्रयोजनत्वं बोध्यम् । ताः अष्टविधा अपि सिद्धयः। हेतुहेतुमत्तयेति । हेतुतया हेतुमत्तया हेतुहेतुमत्तया चेत्यर्थः । तत्र हेतुरूपां सिद्धिमाह। अध्ययनलक्षणेति । अध्ययनस्वरूपेत्यर्थः। हेतुरेव सिद्धिरिति शेषः। एवकारेण हेतुमत्त्वव्यवच्छेदः । तेन अध्ययनादेरपि जन्यतया हेतुमत्त्वेपि न क्षतिः । मुख्यास्त्वति । दुःखनिवृत्तिरूपास्तिस्र इत्यर्थः । हेतुमत्य एवेति । एवकारेण हेतुत्वव्यवच्छेदः । मध्यमाः शब्दोहसुहृत्प्राप्तिदानात्मिकाश्चतस्र इत्यर्थः । हेतुहेतुमत्य इति । तथाहि शब्दात्मिका ऊहस्य हेतुः अध्ययनहेतुमती च एवमेव पूर्वपूर्वसिद्धिहेतुमत्त्वं उत्तरोत्तरसिद्धिहेतुत्वं च बोध्यम् ।

तत्र सर्वप्रथमां अध्ययनलक्षणां सिद्धिं दर्शयति । विधिवदिति । धर्मशास्त्रोक्ताध्ययनविध्यनुसारेणेत्यर्थः । अक्षरस्वरूपग्रहणमिति । यद्यपि गुरुमुखोच्चारणानूच्चारणस्य अध्ययनपदार्थत्वं अन्यत्र प्रतिपादितं तथापि उक्तोच्चारणं प्रति अक्षरस्वरूपज्ञानस्य कारणत्वात् तस्यैवेह अध्ययनपदार्थत्वोक्तिः अध्ययनरूपायाः सिद्धेः शब्दलक्षणसिद्धिकारणत्वोपपत्तये, शाब्दबोधात्मकार्थज्ञानं प्रति पदज्ञानस्य कारणत्वात्। उक्तसिद्धेः नामान्तरमाह । तारमुच्यते इति । पूर्वाचार्यैरिति शेषः। एवमग्रेपि ।

द्वितीयां सिद्धिं व्याचष्टे । तत्कार्यमिति। अध्ययनलक्षणसिद्धिकार्यमित्यर्थः । शब्दस्य अध्ययनकार्यत्वं कथमित्याशङ्कायां आह । शब्द इति पदमिति । उपलक्षयतीति । तथाच शब्दपदं शाब्दबोधात्मकज्ञानोपलक्षकमिति शाब्दबोधस्य पदज्ञानात्मकाध्ययनजन्यत्वमक्षतमेव । उक्तसिद्धेः संज्ञान्तरमाह । सुतारमिति । उक्तद्विविधसिद्धेरपि "आत्मा वारे द्रष्टव्यः श्रोतव्य" इत्यादि श्रुतिविहितश्रवणपदार्थत्वमाह । तदिदमिति । इदं अध्ययनशब्दात्मकसिद्धिद्वयम् ।

तृतीयां सिद्धिमाह । ऊह इति । तर्कपदार्थमाह । आगमाविरोधिन्यायेनेत्यादि । आगमस्याविरोधी यो न्यायः युक्तिस्तेन आगमार्थस्य परीक्षणं तर्क इत्यर्थः । नरशिरःकपालं शुचि प्राण्यङ्गत्वादित्यादिन्यायानां आगमाविरोधित्वाभावान्न तत्परीक्षणस्य तर्करूपत्वं । परीक्षणपदार्थमाह । परीक्षणञ्चेति । संशयस्य पूर्वपक्षस्य च निराकरणपूर्वकं यदुत्तरपक्षव्यवस्थापनं तदेव परीक्षणमित्यर्थः । उक्तस्योहस्यैव वैदिकप्रसिद्धं नामान्तरमाह । तदिदमिति । उक्तपरीक्षणमित्यर्थः । उक्तसिद्धेः साङ्ख्याचार्यप्रसिद्धं नामान्तरमाह । तारतारमुच्यते इति ।

(स्वोत्प्रेक्षितं मननममननमेवासुहृत्सम्मतमिति द्वितीयं मननमाह।)

"सुहृत्प्राप्तिः",न्यायेन स्वयं परीक्षितमप्यर्थं न श्रद्धत्ते, न यावद् गुरुशिष्यसब्रह्मचारिभिः सह संवाद्यते। अतः सुहृदां गुरुशिष्यसब्रह्मचारिणां संवादकानां प्राप्तिःसुहृत्प्राप्तिः। सा सिद्धिश्चतुर्थी 'रम्यकं' उच्यते ।

"दानं च" शुद्धिर्विवेकज्ञानस्य, 'दैप् शोधने' ( सि० कौ० ६ । ४ । ६८ ) इत्यस्माद्धातोर्दानपदव्युत्पत्तेः । यथाह भगवान् पतञ्जलिः –"विवेकख्यातिरविप्लवा हानोपायः' । इति ( योगसूत्रम् २ । २६ ) । 'अविप्लवः' शुद्धिः, सा च सवासनसंशयविपर्यासानां परिहारेण विवेकसाक्षात्कारस्य स्वच्छप्रवाहेऽवस्थापनम्। सा च न विनाऽऽदरनै-

---

चतुर्थीं सिद्धिमाह।स्वोत्प्रेक्षितमित्यादिना। असुहृत्सम्मतमिति । सुहृदामसम्मतं अमननमेव अल्पमननमेव, अनुदरमुदरं तरुण्या इतिवत्। द्वितीयं मननमिति । मननस्य प्रकारान्तरमित्यर्थः । तथाच यथा अध्ययनशब्दाभ्यां द्विप्रकारं श्रवणं, एवं ऊहसुहृत्प्राप्तिभ्यां मननस्यापि द्विप्रकारत्वं बोध्यम् । सुहृत्प्राप्तेः पुरुपार्थत्वरूपसिद्धित्वं दर्शयति । न्यायेनेत्यादिना । न्यायेन अनुमानेन परीक्षितं संशयपूर्वपक्षनिराकरणपूर्वकं व्यवस्थापितं, न श्रद्धत्ते न प्रमाणत्वेन विनिश्चिनोति । सब्रह्मचारिणः संवादः समानो वादः । सुहृदां अनसूयकानां असूयकानां प्रतारणयापि समानवादसम्भवात् । अतएव "तं गुरुशिष्यसब्रह्मचारिशिष्टश्रेयोर्थिभिरनसूयुभिरभ्युपेयात्" इति सूत्रे अनसूयुपदं दत्तम् । उक्तसिद्धेः नामान्तरमाह । रम्यकमुच्यते इति ।

पञ्चमीं सिद्धिमाह। दानञ्चेति । दानपदस्य स्वस्वत्वध्वंसपूर्वकपरस्वत्वोत्पादनानुकूलव्यापारार्थकत्वभ्रमं निराकर्तुं तदर्थमाह।शुद्धिरिति। कस्य शुद्धिरित्याशङ्कायामाह । विवेकज्ञानस्येति । दानशब्दस्य शुद्ध्यर्थकत्वं विवृणोति । दैप् शोधने इत्यादि । भवतु उक्तरीत्या दानपदस्य शुद्ध्यर्थकत्वं तथापि प्रसिद्धतरस्वस्वत्वनाशपूर्वकपरस्वत्वोत्पादनार्थकत्वपरित्यागे किं बीजमित्याकाङ्क्षायां दुःखत्रयनिवृत्त्यात्मकसुखसिद्धिहेतुत्वाच्छुद्धिरेवात्र दानपदार्थं इति वक्तुं उक्तशुद्धेः दुःखत्रयनिवृत्तिहेतुत्वे पतञ्जलिसूत्रं प्रमाणयति । यथाह भगवान् पतञ्जलिरित्यादिना । अविप्लवा विप्लवोऽशुद्धिः तद्रहिता तथाच शुद्धेत्यर्थः । हानं दुःखत्रयनिवृत्तिः तस्या उपाय इत्यर्थः । शुद्धिपदार्थमाह । सा चेति । शुद्धिश्चेत्यर्थः । सवासनानां संस्कारसहितानां संशयः प्रकृतेर्भिन्नः पुरुषो नवेत्यादिरूपः विपर्ययाः प्रकृत्यभिन्ना बुद्धिरित्याद्याकारकाः तेषां परिहान्या विनाशेन विवेकसाक्षात्कारस्य प्रकृतिपुरुषयोर्भेदसाक्षात्कारस्य स्वच्छः संशयादिमलरहितः यः प्रवाहः चित्तवृत्तिधारा तस्मिन् यदवस्थानं तदेव शुद्धिरित्युच्यते । तथा च विवेकसाक्षात्कारे सत्यपि मध्ये मध्ये उक्तसंशयविपर्यासस्त्वे दुःखत्रयनिवृत्तिर्न भवेत् । नापि संशयादिजन्यवासनासत्त्वे तादृशवासनया पुनरपि व्युत्थानसम्भवात् इति सवासनमिथ्याज्ञाननाशानन्तरं विवेकसाक्षात्कारधारया दुःखत्रयनिवृत्तिर्भवेदेवेति ।

नच उक्तवासनायाः कथं विनाशः सम्भवति इत्याशङ्कायामाह । सा चेति । उक्त-

रन्तर्यदीर्घकालसेविताभ्यासपरिपाकाद्भवतीति दानेन विवेकख्यात्या कार्येण सोऽपि सङ्गृहीतः। सेयम्पञ्चमी सिद्धिः 'सदामुदितम्' उच्यते ॥

तिस्रश्च मुख्याः सिद्धयः प्रमोदमुदितमोदमाना इत्यष्टौ सिद्धयः।

अन्ये व्याचक्षते—विनोपदेशादिना प्राग्भवीयाभ्यासवशात्तत्त्वस्य स्वयमूहनं यत् सा सिद्धिरूहः। यस्य साङ्ख्यशास्त्रपाठमन्यदीयमाकर्ण्य तत्त्वज्ञानमुत्पद्यते सा सिद्धिः शब्दः, शब्दपाठादनन्तरम्भावात्। यस्य शिष्याचार्यसम्बन्धेन साङ्ख्यशास्त्रं ग्रन्थतोऽर्थतश्चाधीत्य ज्ञानमुत्पद्यते साऽध्ययनहेतुका सिद्धिरध्ययनम्। सुहृत्प्राप्तिरिति यस्याधिगततत्त्वं सुहृदं प्राप्य ज्ञानमुत्पद्यते सा ज्ञानलक्षणा सिद्धिस्तस्य सुहृत्प्राप्तिः। दानञ्च सिद्धिहेतुः, धनादिदानेनाऽऽराधितो ज्ञानी ज्ञानम्प्रयच्छति। अस्य च युक्तायुक्तत्वे सूरिभिरेवावगन्तव्ये इति कृतम्परदोषोद्भावनेन नः सिद्धान्तमात्रव्याख्यानप्रवृत्तानामिति ॥

---

लक्षणलक्षिता शुद्धिश्चेत्यर्थः। आदरः गुरुवाक्ये प्रामाण्यनिश्चयः नैरन्तर्यमविच्छेदः ताभ्यां दीर्घकालं बहुकालं सेवितः अनुष्ठितः योऽभ्यासः प्रकृतिपुरुषविवेकसाक्षात्कारस्य, तस्य यः परिपाकः तस्मादित्यर्थः। सोपि उक्तपरिपाकोपि कारणभूत इति शेषः। उक्तपारिपाक एव निदिध्यासनमित्युच्यते। तथाच दानमित्यनेन उक्तविवेकज्ञानाभ्यासपरिपाकरूपं निदिध्यासनमपि संगृहीतं। उक्तसिद्धेः नामान्तरमाह। सदामुदितमिति।

पूर्वोक्तानां दुःखत्रयनिवृत्तिरूपाणां सिद्धीनां नामान्याह। प्रमोदमुदितेत्यादि। तथाच आध्यात्मिकदुःखनिवृत्तेः प्रमोद इति नाम, आधिभौतिकदुःखनिवृत्तेः मुदितसंज्ञा, आधिदैविकदुःखनिवृत्तेः मोदमानसंज्ञा।

व्याख्यानान्तरमाह। अन्ये व्याचक्षते इति। प्राग्भावीयः जन्मान्तरभावीयः योभ्यासः तद्वशादित्यर्थः। अन्यदीयं अन्यथोपेच्छयोच्चरितं, उक्तसिद्धेः शब्दपदवाच्यत्वे हेतुमाह। शब्दपाठादिति। साङ्ख्यशास्त्रात्मकशब्दपाठादनन्तरभावित्वात् तस्या अपि शब्दपदवाच्यत्वमित्यर्थः। उक्तव्याख्यानस्य अयुक्ततायाः सूरिभिः स्वयं ज्ञातुं शक्यतया तत्र दोषोद्भावनमकृत्वैवाह। अस्य चेति। उक्तव्याख्यानस्येत्यर्थः। सूरिणां उक्तव्याख्याने दोषस्य स्वयं ज्ञातुं शक्यत्वेपि इतरेषामपि तदभिव्यक्तये दिङ्मात्रमुपदर्श्यते। तथाहि प्राग्भावीयाभ्याससत्त्वेपि तादृशाभ्यासजन्यसंस्कारोद्बोधार्थं गुरूपदेश आवश्यक एवेति न अभ्यासमात्रेण तत्त्वज्ञानोत्पत्तिः सम्भवति। अतएव मदालसापत्यानामपि मातुरुपदेशादेव विवेकख्यातिः प्रतिपादिता। एवं शब्दपाठादनन्तरभावित्वादन्यदीयसाङ्ख्यशास्त्रपाठादिजन्या सिद्धिः शब्द इत्युच्यते यदि तदा स्वकीयपाठाकर्णनजन्याया अपि सिद्धेः शब्दपाठादनन्तरभावित्वात् शब्दपदवाच्यत्वापत्तिः। अधिकं स्वयमेवोहनीयम्।

सिद्धितुष्टिविपर्ययेणाऽशक्तिर्बुद्धिवधस्सप्तदशधा द्रष्टव्यः। अत्र प्रत्ययसर्गे सिद्धिरुपादेयेति प्रसिद्धमेव। तन्निवारणहेतवस्तु विपर्ययाशक्तितुष्टयो हेया इत्याह—"सिद्धेः पूर्वोऽङ्कुशस्त्रिविधः" इति। "पूर्वः" इति विपर्ययाशक्तितुष्टीः परामृशति। ताः सिद्धिकरिणीनामङ्कुशः-निवारकत्वात्, अतः सिद्धिपरिपन्थित्वात् विपर्ययाशक्तितुष्टयो हेया इत्यर्थः॥

स्यादेतत्-पुरुषार्थप्रयुक्ता सृष्टिः, स च पुरुषार्थः प्रत्ययसर्गाद्वा तन्मात्रसर्गाद्वा सिध्यतीति कृतमुभयसर्गेणेत्यत आह—

**न विना भावैर्लिङ्गं, न विना लिङ्गेन भावनिर्वृत्तिः।**
**लिङ्गाख्यो भावाख्यस्तस्माद्द्विविधः प्रवर्तते सर्गः॥५२॥**

"न विना" इति। "लिङ्गम्" इति तन्मात्रसर्गमुपलक्षयति, "भावैः" इति च प्रत्ययसर्गम्।

एतदुक्तम्भवति—तन्मात्रसर्गस्य पुरुषार्थसाधनत्वं स्वरूपञ्च न प्रत्ययसर्गाद्विना भवति। एवं प्रत्ययसर्गस्य स्वरूपं पुरुषार्थसाधन-

---

सप्तदशवधा बुद्धेर्विपर्ययात्तुष्टिसिद्धीनामिति कारिकायां प्रतिपादितं बुद्धिवधस्य सप्तदशधात्वं उपसंहरति। सिद्धीति। उक्तरीत्या तुष्टेर्नवधात्वेन सिद्धेश्च अष्टधात्वेन तयोर्मेलने सप्तदशत्वेनेत्यर्थः। बुद्धिधर्मान् धर्मादीनष्टौ भावान् मुमुक्षुणां हेयोपादेयान् दर्शयितुमाहेत्यनेन हेयोपादेयाः बुद्धिधर्माः सन्तीति प्रतिपादितम् तेषु हेयान् उपादेयांश्च दर्शयति। अत्रेति। उपादेया मुमुक्षूणामिति शेषः। प्रसिद्धमेव सिद्धमेव, मुख्यसिद्धेः स्वाभाविकेच्छाविषयत्वात्, इतरसिद्धीनाञ्च मुख्यसिद्धीच्छाधीनेच्छाविषयत्वाच्चेत्यर्थः। हेयानाह मूलकार इत्याह। तन्निवारणहेतवस्त्विति। उक्तसिद्धनिवारणहेतव इत्यर्थः। पूर्वशब्दार्थमाह। विपर्ययाशक्तितुष्टीरिति। विपर्ययाशक्तितुष्टीनां अङ्कुशत्वे सिद्धेः करिणीत्वमाह। सिद्धिकरिणीनामिति। तासामङ्कुशत्वे हेतुः निवारकत्वात् इति। केचित्तु सिद्धेः पूर्वोऽङ्कुशस्त्रिविध इत्यन्यथा व्याचक्षते। तथाहि एषु पूर्वस्त्रिविधः ऊहशब्दाध्ययनरूपः मुख्यसिद्धेः अङ्कुश आकर्षक इति। तदेतदङ्कुशशब्दस्य निवारकत्वार्थकताया ज्वराङ्कुश इत्यादिषु क्लृप्तत्वेन आकर्षकत्वार्थकत्वे प्रमाणाभावात् पञ्चानामपि गौणसिद्धीनां मुख्यसिद्धिहेतुत्वेन तिसृणामेव तद्धेतुत्वप्रतिपादने बीजाभावाच्चोपेक्षितम्।

पूर्वोत्पन्नमित्यादिकारिकायां लिङ्गपदस्य सूक्ष्मशरीरार्थकत्वात्प्रकृते तदर्थकत्वभ्रमं निरसितुं तन्मात्रसर्गार्थकत्वमाह। लिङ्गमितीति। भावैरित्यस्य प्रत्ययसर्गार्थकत्वमाह। प्रत्ययसर्गमिति। उपलक्षयतीति पूर्वोक्तमनुषज्जते। निर्गलितार्थमाह। एतदुक्तम्भवतीत्यादिना। न विना भावैर्लिङ्गमित्यस्य प्रत्ययसर्गं विना तन्मात्रसर्गो न भवतीत्यर्थकत्वमिव भूतोपि पुरुषार्थसाधनं न भवतीत्यर्थकत्वमाह। पुरुषार्थसाधनत्वं स्वरूपञ्चेत्यादिना। उक्तरीत्या प्रत्ययसर्गस्यावश्यकत्वमुक्त्वा तन्मात्रसर्गस्य तदाह। एवमिति। प्रत्ययसर्गस्य स्वरूपतः सम्भवेपि तस्य पुरुषार्थत्वसाधनत्वं तन्मात्रसर्गं विना न सम्भवतीत्याह। पुरुषार्थसाधनत्वञ्चेत्यादिना।

त्यञ्च न तन्मात्रसर्गादृत इत्युभयथा सर्गप्रवृत्तिः। भोगः पुरुषार्थो न भोग्यान् शब्दादीन् भोगायतनं शरीरद्वयञ्चाऽन्तरेण सम्भवतीत्युपपन्नस्तन्मात्रसर्गः।

एवं स एव भोगो भोगसाधनानीन्द्रियाण्यन्तः करणानि चाऽन्तरेण न सम्भवति। न च तानि धर्मादीन् भावान् विना सम्भवन्ति। न चाऽपवर्गहेतुर्विवेकख्यातिरुभयसर्गं विना, इत्युपपन्न उभयविधः सर्गः॥

अनादित्वाच्च बीजाङ्कुरवन्नान्योन्याश्रयदोषमावहति। कल्पादावपि प्राचीनकल्पोत्पन्नभावलिङ्गसंस्कारवशाद्भावलिङ्गयोरुत्पत्तिर्नानुपपन्नेति सर्वमवदातम्॥

विभक्तः प्रत्ययसर्गः। भूतादिसर्गं विभजते—

**अष्टविकल्पो दैवस्तैर्यग्योनश्च पञ्चधा भवति।**
**मानुषश्चैकविधः, समासतो भौतिकः सर्गः॥५३॥**

---

तत्र तन्मात्रसर्गमुपपादयति। भोगः पुरुषार्थः इति। भोगात्मकः पुरुषार्थं इत्यर्थः। नेति सम्भवतीति परेण अन्वयः। शरीरद्वयं स्थूलसूक्ष्मशरीरं। तथाच भोगं प्रति विषयविधया भोग्यानां शब्दादीनां भोगायतनशरीरादेश्च कारणत्वात् तदात्मकः प्रत्ययसर्गः उपपन्नः युक्तिसिद्ध इत्यर्थः। तन्मात्रसर्गमुपपाद्य प्रत्ययसर्गमुपपादयति। एवमिति। स एवेति। पुरुषार्थरूप इत्यर्थः। अन्तःकरणानि बुद्ध्यहङ्कारमनांसि। भवतु इन्द्रियाणामन्तःकरणानाञ्च भोगसाधनत्वं तथापि विपर्ययाशक्तितुष्टिसिद्ध्यात्मकस्य प्रत्ययसर्गस्य हेतुत्वं कथमित्याशङ्कायामाह। नच तानीति। तानि इन्द्रियान्तःकरणानि। धर्मादीन् विनेति। धर्मादीनां तद्धेतुत्वात्। भोगात्मकस्य पुरुषार्थस्य उभयविधसर्गं विनाऽसम्भवमुक्त्वा अपवर्गात्मकस्य तस्य तथात्वमाह। नचेति। विवेकख्यातिः सत्त्वपुरुषान्यताप्रत्ययः साक्षात्कारात्मकः उभयसर्गं विना प्रत्ययसर्गतन्मात्रसर्गात्मकोभयसर्गं विना, उक्तसाक्षात्कारस्य श्रवणमननिदिध्यासनादिसाध्यत्वेन तदर्थं उभयसर्गस्याप्यावश्यकत्वादिति भावः।

नच शरीरादीनां धर्मादिजन्यत्वात् धर्मादीनाञ्च शरीरादिजन्यत्वात् अन्योन्याश्रय प्रसङ्ग इत्यत आह। अनादित्वाच्चेति। बीजाङ्कुरवदिति। तथाच बीजं प्रति अङ्कुरस्य अङ्कुरं प्रति च बीजस्य कारणत्वे तदेव बीजं यदि तदङ्कुरकार्यं कारणञ्च स्यात् तदैवान्योन्याश्रयः बीजान्तरस्य कारणत्वाङ्गीकारादेव तस्य न सम्भवः एवमेवात्रापि नान्योन्याश्रय इत्यर्थः। अनवस्था तर्हि स्यादित्यत आह। अनादित्वाच्चेति। अथ तथापि कल्पादौ कथं उक्तसर्गाणामुत्पत्तिः इत्यत आह। कल्पादावपीति। तथाच सर्गमात्रस्य प्रलयपूर्वत्वेन पूर्वसर्गीयभावलिङ्गानां सूक्ष्मरूपेणावस्थानात् तद्वशादेव भावलिङ्गयोरुत्पत्तिर्नानुपपन्ना। अवदातम् शुद्धं निर्मलमिति यावत्।

कारिकान्तरमवतारयति। विभक्तः प्रत्ययसर्गं इत्यादिना। भूतादिसर्गं तन्मात्रसर्गम्।

"अष्टविकल्प" इति। ब्राह्मः, प्राजापत्यः, ऐन्द्रः, पैत्रः, गान्धर्वः, याक्षः, राक्षसः, पैशाचः इत्यष्टविधो "दैवः" सर्गः।

"तैर्यग्योनश्च पञ्चधा भवति," पशुमृगपक्षिसरीसृपस्थावराः इति।

"मानुषकश्चैकविधः" इति ब्राह्मणत्वाद्यवान्तरजातिभेदाविवक्षया, संस्थानस्य चतुर्ष्वपि वर्णेष्वविशेषात्, इति। "समासतः"—सङ्क्षेपतः "भौतिकः सर्गः"। घटादयस्त्वशरीरत्वेऽपि स्थावरा एवेति।

भौतिकस्याऽस्य सर्गस्य चैतन्योत्कर्षनिकर्षतारतम्याभ्यामूर्ध्वाधोमध्यभावेन त्रैविध्यमाह—

**ऊर्ध्वं सत्त्वविशालस्तमोविशालश्च मूलतः सर्गः।**
**मध्ये रजोविशालो ब्रह्मादिस्तम्बपर्यन्तः॥ ५४॥**

"ऊर्ध्वं सत्त्वविशालः" इति। द्युप्रभृतिसत्यान्तो लोकः सत्त्वबहुलः। "तमोविशालश्च मूलतः सर्गः" पश्वादिस्थावरान्तः, सोऽयं मोहमयत्वात्तमोबहुलः। भूर्लोकस्तु सप्तद्वीपसमुद्रसन्निवेशो "मध्ये

---

अष्टविकल्पः अष्टविधः तानेवाष्टप्रकारानाह। ब्राह्मेति। ब्राह्मः ब्रह्मलोकसम्बन्धी प्राजापत्यः प्रजापतिलोकसम्बन्धी, एवमग्रेऽपि। दैव इति। एतेषां देवयोनिविशेषत्वात्। सत्त्वबहुलानां सर्गमुक्त्वा तमोबहुलानामाह। तैर्यग्योनश्चेति। तिर्यग्योनौ भवः तैर्यग्योनः पञ्चप्रकारानाह। पशुपक्षिमृगेत्यादि। मृगः लोमवल्लाङ्गूलवान्, पक्षिणःप्रसिद्धाः, सरीसृपाः सर्पादयः, स्थावरा तरुगुल्मादयः। यद्यपि पशुपदस्य लोमवल्लाङ्गूलवानेवार्थः इति मृगपदं व्यर्थं उक्तविभागश्चानुपपन्नः, तथापि पशुपदं उक्तचतुष्पयभिन्नतिर्यग्योनिपरम् इति न विभागव्याघातः, तादृशाश्च वनमानुषादयः। ननु मनुष्याणामपि ब्राह्मणक्षत्रियादिभेदेन बहुविधत्वात् कथमेकविधत्वोक्तिरित्यत आह। ब्राह्मणत्वाद्यवान्तरभेदाविवक्षयेति। तदविवक्षायां प्रयोजनमाह। संस्थानस्येति। अवयवसंस्थानस्येत्यर्थः। अविशेषात् समानत्वात्। ननु घटपटादीनामविभजनान्न्यूनत्वमत आह। घटादयस्त्वति। स्थावरा एवेति। वृक्षादिशरीराणामेव स्थावरत्वेन घटादीनामशरीरत्वेन कथं तेषां स्थावरेऽन्तर्भाव इत्यत आह। अशरीरत्वेऽपीति। तथा च स्थावरपदं न स्थावरशरीरार्थकमपि तु स्थावरमात्रार्थकमिति नानुपपत्तिः।

चैतन्यं ज्ञानं तस्य सत्त्वकार्यत्वात् सत्त्वस्य लघुत्वात् सत्त्वबहुलानां ऊर्ध्वं स्थितिर्युक्तैव। ऊर्ध्वमित्यस्यार्थमाह। द्युप्रभृति सत्यान्तो लोक इति। सत्त्वविशाल इत्यस्य विवरणं सत्त्वबहुल इति। मूलतः सर्गः अधःसर्गः, तमेवाह। पश्वादिः स्थावरान्त इति। पशुमृगपक्षिसरीसृपस्थावररूपः। तस्य तमोविशालत्वे हेतुमाह। सोयमिति। सोयं पश्वादिरूपः सर्गः मोहमयत्वात् मोहप्रचुरत्वात् तेन मात्रया तत्र रजस्तमसोः सत्त्वेऽपि न क्षतिः। मध्यसर्गमाह। भूर्लोकस्त्वति। उक्तलोकस्य रजोविशा-

रजोविशालः", धर्माधर्मानुष्ठानपरत्वाद् दुःखबहुलत्वाच्च। तामिमां लोकसंस्थितिं सङ्क्षिपति "ब्रह्मादिस्तम्बपर्यन्तः," स्तम्बग्रहणेन वृक्षादयः सङ्गृहीताः।

तदेवं सर्गं दर्शयित्वा तस्याऽपवर्गसाधनवैराग्योपयोगिनीं दुःखहेतुतामाह—

**तत्र जरामरणकृतं दुःखम्प्राप्नोति चेतनः पुरुषः।**
**लिङ्गस्याऽविनिवृत्तेस्तस्माद्दुःखं स्वभावेन ॥ ५५ ॥**

"तत्र" इति। 'तत्र' शरीरादौ। यद्यपि विविधविचित्रानन्दभोगभागिनः प्राणभृद्भेदाः, तथाऽपि सर्वेषां जरामरणकृतं दुःखमविशिष्टम्। सर्वस्य खलु कृमेरपि मरणत्रासो—'मा न भूवम्' 'भूयासम्' इत्येवमात्मकोऽस्ति। दुःखं च भयहेतुरिति दुःखं मरणम्।

स्यादेतत्-दुःखादयः प्राकृता बुद्धिगुणाः, तत्कथमेते चेतनस-

लत्वे हेतुमाह। धर्माधर्मानुष्ठानपरत्वादिति। प्रवर्तकत्वस्य रजोधर्मतया धर्माधर्मानुष्ठानात्मकप्रवृत्तिप्रधानत्वेन उक्तलोकस्य रजःप्रचुरत्वमिति भावः। एवं रजसो दुःखहेतुत्वेन दुःखबहुलत्वेनापि उक्तलोकस्य रजःप्रचुरत्वं सिद्ध्यतीत्याह। दुःखबहुलत्वाच्चेति।

कारिकाचतुर्थभागं व्याचष्टे। तामिमामित्यादिना। लोकसंस्थिति ऊर्ध्वाधोमूलभावेन विद्यमानां लोकस्थितिं, ब्रह्मादिरिति। ब्रह्मणः सर्वस्मादूर्ध्वभावेनावस्थितत्वात् स्तम्बादीनां च तमोबहुलत्वादधोभावेनावस्थितिरित्यर्थः। अथ वृक्षादीनामपि स्तम्बवत् निरतिशयतमोवत्त्वेन तेषामनुक्त्या न्यूनत्वमित्यत आह। स्तम्बग्रहणेनेति। वृक्षादय इति। आदिना लतादीनां संग्रहः।

कारिकान्तरमवतारयति। तदेवमिति। उक्तप्रकारेणेत्यर्थः। सर्गं ऊर्ध्वाधोमध्यभावेनावस्थितम्, तस्य सर्गस्य। अपवर्गः मोक्षः तत्साधनीभूतं वैराग्यं तस्योपयोगिनीम्। तथाच शरीरादौ दुःखरूपताज्ञाने तद्विषयकं वैराग्यं सति च तस्मिन् निदिध्यासनादिना विवेकख्यात्यनन्तरं अपवर्गो भवेदित्यर्थः।

कारिकास्थं तत्रेति पदं व्याचष्टे। शरीरादौ इति। अथ पशुपुत्रादिवियोगादिजन्यं बहुतरं दुःखं प्राप्यते पुरुषेणेति तेषामिहोपादानं किमिति न कृतमित्याशङ्कायां तद्दुःखस्य न प्राणभृन्मात्रसाधारणत्वं इति तत्साधारणजरामरणदुःखमेवात्राभिहितमित्यभिप्रायेणाह। यद्यपीत्यादिना। विचित्रानन्दभोगभागिनः। विचित्राः ये आनन्दास्तेषां यो भोगः अनुभवः तद्भागिनः तच्छालिनः। प्राणभृद्भेदाः जीवविशेषाः। सन्तीति शेषः। अविशिष्टं समानम्। तदेवोपपादयति। सर्वस्यापीति। त्रासः भयं, तस्यवाकारमाह। मा न भूवं भूयासमिति। सर्वदा जीवित एव स्यामित्याकारक इत्यर्थः। भवतु मरणात्त्रासः तथापि मरणस्य दुःखरूपत्वं कथमित्यत आह। दुःखञ्च भयहेतुरिति। यद्भयहेतुः तदेव दुःखमिति मरणस्य भयहेतुत्वाद् दुःखरूपत्वं सिद्धमिति।

प्राकृताः सत्त्वरजस्तमोगुणात्मकप्रकृतिपरिणामविशेषाः, एते दुःखादयः। पुरुष इत्युक्त्या कथं तत्सम्बन्धः पुरुषे सिद्ध्यतीत्याशङ्कायां पुरुषशब्दस्य योगार्थनिर्वचनपुरः

म्बन्धिनो भवन्तीत्यत आह—"पुरुषः" इति । पुरि लिङ्गे शेते इति पुरुषः । लिङ्गं च तत्सम्बन्धीति चेतनोऽपि तत्सम्बन्धी भवतीत्यर्थः ।

कुतः पुनर्लिङ्गसम्बन्धि दुःखं पुरुषस्य चेतनस्येत्यत आह—"लिङ्गस्याऽविनिवृत्तेः"—पुरुषाद्भेदाग्रहाल्लिङ्गधर्मानात्मन्यध्यवस्यति पुरुषः ।

अथवा दुःखप्राप्तावधिराशङ्का कथ्यते, लिङ्गं यावन्न निवर्तते तावदिति ।

उक्तस्य सर्गस्य कारणविप्रतिपत्तीर्निराकरोति—

**इत्येष प्रकृतिकृतो महदादिविशेषभूतपर्यन्तः ।**
**प्रतिपुरुषविमोक्षार्थं स्वार्थ इव परार्थ आरम्भः ॥५६॥**

"इत्येष" इति । आरभ्यते इति "आरम्भः" सर्गः महदादिभूतान्तः प्रकृत्यैव कृतो नेश्वरेण, न ब्रह्मोपादानः, नाप्यकारणः । अका-

---

स्तरं तत्र तत्सम्बन्धं दर्शयति । पुरीत्यादिना । लिङ्गे लिङ्गशरीरे । तथाच यतः दुःखगुणबुद्ध्यादिसमुदायात्मके सूक्ष्मशरीरे चेतनः शेते अतः स दुःखाद्यात्मकबुद्धिधर्मसम्बन्धो भवतीत्याह । लिङ्गञ्चेति । ननु पुरुषस्य सूक्ष्मशरीरवर्तित्वेपि कथं दुःखादिरूपतद्गुणसम्बन्धः, नहि घटादि सम्बन्धि आकाशं तद्गतरूपादिगुणयोगि भवतीत्याशयेन पृच्छति । कुतः इति ।

भेदाग्रहादिति । तथाच रजतभेदाग्रहात् यथा शुक्तौ रजतधर्म रजतत्वादिकं अध्यवस्यति एवमेव लिङ्गधर्मान् दुःखादीनपि आत्मनि भेदाग्रहादध्यवस्यतीत्यर्थः । लिङ्गस्याविनिवृत्तेरित्यस्य लिङ्गभेदाग्रहादित्यर्थस्तु लिङ्गस्य लिङ्गप्रतियोगिका या निवृत्तिः भेदः तस्याभावात् तद्ग्रहाभावादित्यर्थः निवृत्तिपदस्य भेदग्रहे लाक्षणिकत्वेन एकदेशान्वयस्वीकारेण च कथञ्चिदुपपादनीयः । उक्तव्याख्यायां लक्षणाद्यङ्गीकरणापत्त्या व्याख्यानान्तरमाह । अथवेति । अवधिरिति । तथाच लिङ्गनिवृत्तिपर्यन्तमित्यर्थः । एतदेवाह । लिङ्गं यावदिति ।

उक्तस्य सर्गस्येति । प्रत्ययसर्गस्य भूतसर्गस्य चेत्यर्थः । कारणविप्रतिपत्तीः ईश्वरकारणकः प्रकृतिकारणको वा ब्रह्मोपादनको वा अकारणको वेत्यादिरूपाः, निराकारोति । प्रकृतेः कारणत्वव्यवस्थापनेनेत्यर्थः ।

आरम्भशब्दस्य सर्गार्थकत्वं दर्शयति । आरभ्यत इत्यादिना । प्रकृतिकृत इत्यस्य साधारणत्वमाह । प्रकृत्यैव कृत इति । तेन वेदान्तिभिः मायापरपर्यायप्रकृतिकृतत्वाङ्गीकारेण न तेषां मते सिद्धसाधनं तैर्ब्रह्मणोप्युपादनत्वाङ्गीकारेण प्रकृतिमात्रकृतत्वस्य तत्राभावात् । एवकारव्यवच्छेद्यमाह । नेश्वरेणेति । तत्र अकारणत्वाङ्गीकर्तृमतं निराकरोति । अकारणत्वे इति । अत्यन्तभावो नित्यत्वम् । नचेष्टापत्तिः सम्भवति, प्रत्यक्षादिना घटपटादीनां उत्पत्तिविनाशयोरनुभवसिद्धत्वेनापलपितुमशक्यत्वात् । अत्यन्ताभावो शशशृङ्गादिवदलीकत्वं, नचात्रेष्टापत्तिः सम्भवति, प्रपञ्चस्य प्रत्यक्षादिप्रमाणसिद्धत्वेन अलीकत्वासम्भवात् नचाकारणस्य उक्तोभयकोटिबहिर्भूतत्वं इष्टं तस्मात

रणत्वे ह्यत्यन्तभावोऽत्यन्ताभावो वा स्यात्। न ब्रह्मोपादानः, चितिशक्तेरपरिणामात्, नेश्वराधिष्ठितप्रकृतिकृतः, निर्व्यापारस्याऽधिष्ठातृत्वासम्भवात्। न हि निर्व्यापारस्तक्षा वास्याद्यधितिष्ठति।

ननु प्रकृतिकृतश्चेत्, तस्या नित्यायाः प्रवृत्तिशीलाया अनुपरमात् सदैव सर्गः स्यादिति न कश्चिन्मुच्येतेत्यत आह—"प्रतिपुरुषविमोक्षार्थं स्वार्थ इव परार्थ आरम्भः" इति। यथौदनकाम ओदनाय पाके प्रवृत्तः ओदनसिद्धौ निवर्तते,—एवं प्रत्येकम्पुरुषान् मोचयितुम्प्रवृत्ता प्रकृतिर्यं पुरुषं मोचयति तम्प्रति पुनर्न प्रवर्तते, तदिदमाह–'स्वार्थ इव,' स्वार्थे यथा तथा परार्थे आरम्भ इत्यर्थः।

स्यादेतत्–'स्वार्थे परार्थे वा चेतनः प्रवर्तते। न च प्रकृतिरचेतनैवं भवितुमर्हति, तस्मादस्ति प्रकृतेरधिष्ठाता चेतनः। न च क्षेत्रज्ञाश्चेतना अपि प्रकृतिमधिष्ठातुमर्हन्ति, तेषां प्रकृतिस्वरूपानभिज्ञत्वात्। तस्मादस्ति सर्वार्थदर्शी प्रकृतेरधिष्ठाता, स चेश्वरः' इत्यत

---

न तस्याकारणत्वमिति। वेदान्तिमतं निराकरोति। न ब्रह्मोपादान इति। चितिशक्तेः चैतन्यस्य, अपरिणामादिति। तथाच चेतनपरिणामाभ्युपगमे जगतोपि चेतनत्वापत्तिरिति न ब्रह्मोपादनत्वसम्भव इति। ईश्वराधिष्ठितप्रकृतिकृतत्ववादिपातञ्जलमतमपाकरोति। नेश्वराधिष्ठितेत्यादिना। निर्व्यापारस्येति। तन्मते ईश्वरस्य निर्व्यापारत्वेन प्रकृत्यधिष्ठातृत्वासम्भवात्। निर्व्यापारस्य अधिष्ठातृत्वं न सम्भवतीति दृष्टान्तेनोपपादयति। नहीत्यादि। तक्षा, काष्ठकारः।

प्रकृतिमात्रकृतत्वपक्षेपि दोषमुद्भावयति। नन्विति। तस्याः प्रकृतेः प्रवृत्तिशीलाया इति। सत्त्वरजस्तमोगुणात्मकतया रजसश्च प्रवर्तकत्वात्। स्वार्थ इवेत्यादि विशदयति। यथेत्यादिना। तथाच प्रतिपुरुषविमोक्षार्थं प्रवृत्तायाः प्रकृतेः तत्पुरुषमोक्षसिद्धौ सत्यां तं प्रति निवृत्तिर्युक्तैव। नच स्वार्थारम्भाय प्रवृत्तायाः स्वार्थसिद्धौ सत्यां निवृत्तिर्दृष्टचरा प्रकृतेस्तु स्वार्थाभावात् कुतस्तस्याः प्रवृत्तिः कुतो वा निवृत्तिरित्याशङ्कायामाह। स्वार्थ इवेति। तथाच यथा परमकारुणिकः कश्चित् परदुःखनिवारणार्थं प्रवर्तते दुःखनिवृत्तौ सत्यां च निवर्तते एवमेव प्रकृतिः परार्थं प्रवृत्तापि तदर्थप्राप्तौ सत्यां निवर्तते एवेति।

ईश्वराधिष्ठितप्रकृतिकर्तृत्ववादी आशङ्कते। स्यादेतदिति। प्रकृतेरचेतनायाः प्रवृत्त्यसम्भवमाह। नचेति। एवं प्रवृत्तिमती, नच तच्छरीरान्तर्वर्तिनो जीवा एव सन्तु प्रकृतेरधिष्ठातारःइत्यत आह। नचेति। क्षेत्रज्ञा जीवाः। जीवानां प्रकृत्यनधिष्ठातृत्वे हेतुमाह। तेषामिति। प्रकृतिस्वरूपानभिज्ञत्वादिति। प्रकृतिविषयकप्रत्यक्षज्ञानाभाववत्त्वादित्यर्थः। तेनानुमानादिजन्यज्ञानवत्त्वेपि न क्षतिः। तद्विषयकप्रत्यक्षज्ञानवत एव तदधिष्ठातृत्वात्। प्रकृतेः परमाण्वकत्वेन तद्विषयकप्रत्यक्ष ज्ञानस्य तेष्वसम्भवात्। सर्वार्थदर्शी सर्ववस्तुविषयकज्ञानवानित्यर्थः। सर्वार्थदर्शि-

आह—

**वत्सविवृद्धिनिमित्तं क्षीरस्य यथा प्रवृत्तिरज्ञस्य।**
**पुरुषविमोक्षनिमित्तं तथा प्रवृत्तिः प्रधानस्य ॥ ५७ ॥**

"वत्सविवृद्धिनिमित्तम्" इति। दृष्टमचेतनमपि प्रयोजनम्प्रति प्रवर्तमानम्, यथा वत्सविवृद्ध्यर्थं क्षीरमचेतनं प्रवर्तते। एवम्प्रकृतिरचेतनाऽपि पुरुषविमोक्षणाय प्रवर्तिष्यते।

न च—'क्षीरप्रवृत्तेरपीश्वराधिष्ठाननिबन्धनत्वेन साध्यत्वान्न साध्येनं व्यभिचारः'—इति साम्प्रतम्। प्रेक्षावतः प्रवृत्तेः स्वार्थकारुण्याभ्यां व्याप्तत्वात्। ते च जगत्सर्गाद्व्यावर्तमाने प्रेक्षावत्प्रवृत्तिपूर्वकत्वमपि व्यावर्तयतः। न ह्यवाप्तसकलेप्सितस्य भगवतो जगत् सृजतः किमप्यभिलषितम्भवति। नाऽपि कारुण्यादस्य सर्गे प्रवृत्तिः,

---

त्वादेव तस्येश्वरत्वमपि सिद्धयतीत्याह। स चेश्वर इति।।"तत्र निरतिशयं सर्वज्ञत्वबीजम्"। इति योगसूत्रोक्तरीत्या सर्वविषयकप्रत्यक्षज्ञानवत एव ईश्वरत्वप्रतिपादनात्।

चेतन एव प्रवर्तते नाचेतनः इति पूर्वोक्ते व्यभिचारं दर्शयति। दृष्टमित्यादिना। कुत्र दृष्टमित्याशङ्कायामाह। यथा वत्सविवृद्ध्यर्थमिति। तथाच क्षीरस्य अचेतनस्यापि वत्सविवृद्ध्यर्थं यथा प्रवृत्तिर्भवति इति दृष्टचरं, तथा अचेतनाया अपि प्रकृतेः परार्थप्रवृत्तिर्नानुपपन्ना। नचाचेतनं न प्रवर्तते इति व्याप्तिर्नास्माकमभिप्रेता, अचेतनस्य वास्यादेः क्षत्राद्यधिष्ठितस्य प्रवृत्तिदर्शनात्। अपि तु चेतनानधिष्ठितत्वे सत्यचेतनत्वं यत्र तत्र प्रवृत्त्यभाव इत्याकारकैव, तथा च क्षीरप्रवृत्तेरपि ईश्वराधिष्ठितत्वाङ्गीकारेण तत्र चेतनानधिष्ठितत्वे सत्यचेतनत्वरूपस्य हेतोः सन्दिग्धतया न व्यभिचार इत्याशयेनाशङ्कते। नचेति। साध्यत्वादिति। तथाच पूर्वोक्तव्यतिरेकव्याप्त्या प्रकृतिप्रवृत्तिः चेतनाधिष्ठिता प्रवृत्तित्वादितिरीत्या साध्यानुमितिर्भवतीति वक्तव्यं, तत्र च क्षीरप्रवृत्तौ न व्यभिचारः, तत्रापि ईश्वराधिष्ठितत्वरूपसाध्यसत्त्वादिति भावः। साम्प्रतम् युक्तम्। उक्तस्यायुक्तत्वे हेतुमाह। प्रेक्षावतः प्रवृत्तेरिति। हेयोपादेयविषयकविवेकवत्प्रवृत्तेरित्यर्थः। तेन उन्मत्तप्रवृत्तेः उक्तस्वार्थकारुण्याभ्यां व्याप्तत्वाभावेपि न क्षतिः। व्याप्तत्वादिति। तथाच प्रेक्षावत्प्रवृत्तिः यत्र यत्र तत्र तत्र स्वार्थकारुण्यान्यतरत् इति व्याप्तिसत्त्वादित्यर्थः। स्वार्थः स्वकीयसुखदुःखनिवृत्तिरूपोऽर्थः, कारुण्यं दया सा च परदुःखप्रहाणेच्छा। ते चेति। स्वार्थकारुण्ये चेत्यर्थः। व्यावर्तमाने इति। तथाच व्यापकाभावस्य व्याप्याभावव्याप्यतया व्यापकीभूतेन स्वार्थकारुण्योरभावेन जगत्सर्गे प्रेक्षावत्प्रवृत्तिपूर्वकत्वाभावोपि सिद्धयतीत्यर्थः। नचेश्वरे स्वार्थकारुण्योरभावे किं प्रमाणमित्याशङ्कायां तत्र तयोरभावं दर्शयितुं आदौ स्वार्थाभावं दर्शयति। अवाप्तसकलेप्सितस्येति। अवाप्तं प्राप्तं सकलं ईप्सितं येन तथाभूतस्येत्यर्थः। तथाच स्वेच्छाविषयीभूतत्वरूपं स्वार्थत्वं तदा सम्भवेत् यदा ईश्वरस्य क्वचिदिच्छा स्यात्, सा तु न सम्भवति इच्छां प्रति असिद्धत्वज्ञानस्य कारणत्वात् सिद्धे इच्छाविरहादिति भावः।

कारुण्याभावमपि ईश्वरे दर्शयति। नापीति। अस्य ईश्वरस्य। सृष्ट्युत्पत्तिपूर्वं

प्राक् सर्गाज्जीवानामिन्द्रियशरीरविषयानुत्पत्तौ दुःखाभावेन कस्य प्रहाणेच्छा कारुण्यम्? सर्गोत्तरकालं दुःखिनोऽवलोक्य कारुण्याभ्युपगमे दुरुत्तरमितरेतराश्रयत्वं दूषणम्, कारुण्येन सृष्टिः सृष्ट्या च कारुण्यमिति।

अपि च करुणया प्रेरित ईश्वरः सुखिन एव जन्तून् सृजेन्न विचित्रान्। 'कर्मवैचित्र्याद्वैचित्र्यम्' इति चेत् कृतमस्य प्रेक्षावतः कर्माधिष्ठानेन, तदनधिष्ठानमात्रादेवाऽचेतनस्याऽपि कर्मणः प्रवृत्त्यनुपप-

---

जीवेषु दुःखस्यासम्भवेन तत्प्रहाणेच्छारूपकारुण्याभावं वक्तुं तेषु दुःखाभावं दर्शयितुमाह। प्राक् सर्गादिति। सृष्टेः पूर्वमित्यर्थः। इन्द्रियशरीरेति। दुःखं प्रति इन्द्रियशरीरविषयाणां प्रयोजकत्वादिति भावः। तथाहि अवच्छेदकतासम्बन्धेन दुःखं प्रति तादात्म्यसम्बन्धेन शरीरस्य कारणत्वात् शरीरस्य दुःखकारणत्वं, अनिष्टशब्दादिप्रत्यक्षस्य दुःखकारणत्वेन तादृशप्रत्यक्षं प्रति च इन्द्रियस्य कारणत्वात् इन्द्रियाणामपि तथात्वमक्षतम्, एवमुक्तप्रत्यक्षं प्रति विषयविधया शब्दादीनां कारणत्वेन विषयस्यापि तत्प्रयोजकत्वं बोध्यम्। कस्य कीदृशस्य दुःखस्य। सर्गोत्तरकाले शरीरेन्द्रियविषयाणां सत्त्वेन तत्प्रयुक्तदुःखनिवृत्तिविषयकेच्छारूपकारुण्यात्प्रवृत्तिरित्याशङ्कां निराकरोति। सर्गोत्तरकालमिति। दुरुत्तरमिति। दुर्निवारमित्यर्थः। इतरेतराश्रयत्वम् अन्योन्याश्रयत्वम्, तदेव विशदयति। कारुण्येन सृष्टिरिति।

नच सर्गान्तरीयजीवानां दुःखप्रहाणेच्छया एतत्सर्गप्रवृत्तिः इति नान्योन्याश्रयोदोषः। नच सर्गान्तरोत्पत्तिः कथमिति वाच्यम्। तत्रापि तत्पूर्वकालीनसर्गान्तरस्थजीवदुःखप्रहाणेच्छायाः सम्भवादिति। नचानवस्था, संसारस्यानादित्वाभ्युपगमेन बीजाङ्कुरादिवददुष्टत्वात्, इत्याशङ्क्येत यदि तदा प्याह। अपि चेति। करुणया प्रेरितः, करुणाधीनसर्गप्रवृत्तिमान्। सुखिन एवेति। तथाच यदि परदुःखप्रहाणेच्छया ईश्वरस्य प्रवृत्तिः तदा सर्वेषामपि जीवानां सुखित्वमेव स्यान्नतु केषांचित् सुखित्वं केषाञ्चिद् दुःखित्वमिति वैषम्यं सम्भवतीत्यर्थः। ननु स्रष्टा पीश्वरः सृज्यमानप्राणिकर्मानुसारेणैव जगत्सृजति यथा न्यायाधीशः प्राणिकर्मानुसारेणैव कारागृहादिदण्डं ददाति। तथाच प्राणिकर्मणां वैचित्र्येण जगद्वैचित्र्यमुपपद्यत एवेत्याशङ्कते। कर्मवैचित्र्यादिति। जन्तूनामिति शेषः। भवन्मते कर्मणः जडतया न तत्स्वयमेव प्रवर्तते इति वक्तु शक्यम्, अपि तु ईश्वरः कर्माण्यधिष्ठाय जगत्सृजतीत्येव वक्तुं युक्तम्। तथाच प्रेक्षावतः परदुःखप्रहाणेच्छोरीश्वरस्य कर्माधिष्ठानमेव न युज्यते, केवलं कर्मानधिष्ठानेनैव शरीरेन्द्रियादीनामुत्पत्त्यसम्भवेन प्राणिनां दुःखानुत्पादस्यापि सम्भवादित्याशयेनाह। कृतमस्येति। कृतम् अलम्, अस्य ईश्वरस्य, तदनधिष्ठानमात्रात् कर्मानधिष्ठानमात्रात्, अचेतनस्यापीति। त्वन्मते अचेतनस्य चेतनाधिष्ठितस्यैव प्रवृत्त्यङ्गीकारात्। एतच्च भट्टपादैः स्पष्टमेव प्रतिपादितम्, तथाहि—

सृजेच्च शुभमेवैकमनुकम्पाप्रयोजितः।
अथाशुभाद्विना सृष्टिः स्थितिर्वा नोपपद्यते॥
आत्माधीनाभ्युपायं हि भवेत्किं तस्य दुष्करम्।
तथाचापेक्षमाणस्य स्वातन्त्र्यं प्रतिहन्यते॥

त्वेस्तत्कार्यशरीरेन्द्रियविषयानुत्पत्तौ दुःखानुत्पत्तेरपि सुकरत्वात् ।

प्रकृतेस्त्वचेतनायाः प्रवृत्तेर्न स्वार्थानुग्रहो न वा कारुण्यम्प्रयोजकमिति नोक्तदोषप्रसङ्गावतारः । पारार्थ्यमात्रन्तु प्रयोजकमुपपद्यते । तस्मात् सुष्ठूक्तम्—"वत्सविवृद्धिनिमित्तम्" इति ।

"स्वार्थ इव" इति दृष्टान्तितम्, ( का०५६ )। तद्विभजते—

**औत्सुक्यनिवृत्त्यर्थं यथा क्रियासु प्रवर्तते लोकः ।**

---

जगच्चासृजतस्तस्य किं नामेष्टं न सिध्यति ।
प्रयोजनमनुद्दिश्य न मन्दोपि प्रवर्तते ॥
एवमेव प्रवृत्तिश्चेच्चैतन्येनास्य किम्भवेत् ॥

इत्यादिना ( श्लो० वा० सू० ५ श्लो० ५२ )

अथ भवन्मतेपि प्रकृतेः कथं प्रवृत्तिः सम्भवति तस्यामपि स्वार्थकारुण्ययोरभावात् इत्याशङ्कां प्रेक्षावत्प्रवृत्तेः स्वार्थकारुण्याभ्यां व्याप्तत्वेपि अचेतनायाः प्रकृतेः या प्रवृत्तिः तस्याः तद्व्याप्तत्वाभावेन नोक्तदोष इत्याशयेन निराकरोति । प्रकृतेस्त्विति । नच प्रयोजनमनुद्दिश्येतत्यादिपूर्वोक्तरीत्या यदि प्रकृतेः स्वार्थकारुण्यात्मकं प्रयोजनं नास्ति तदा किं प्रयोजनमुद्दिश्य तस्याः प्रवृत्तिरित्याशङ्कां पारार्थ्यस्य तत्प्रयोजनत्वाङ्गीकारेण निराकरोति । पारार्थ्यमात्रमिति ।

यदपि "पयोम्बुवच्चेत्तत्रापि" ( ब्र० सू० अ० २-२-३ ) इति सूत्रे तद्भाष्ये च "तत्रापि पयोम्बुनोश्चेतनाधिष्ठितयोरेव प्रवृत्तिरित्यनुमिमीमहे उभयवादिप्रसिद्धे रथादावचेतने केवले प्रवृत्त्यदर्शनात् । शास्त्रं च, "योप्सु तिष्ठन्योऽन्तरो यमयति" एतस्य वा अक्षरस्य प्रशासने गार्गि प्राच्योऽन्या नद्यः स्पन्दन्त" इत्येवंजातीयकं समस्तस्य लोकस्य परिस्पन्दितस्येश्वराधिष्ठिततां श्रावयति । तस्मात्साध्यपक्षनिक्षिप्तत्वात्पयोम्बुवदित्यनुपन्यासः । चेतनायाश्च धेन्वाः स्नेहेच्छया पयसः प्रवर्तकत्वोपपत्तेः । वत्सचोषणेन च पयस आकृष्यमाणत्वात् । न चाम्बुनोप्यत्यन्तमनपेक्षा निम्नभूम्याद्यपेक्षत्वात् स्पन्दनस्य" इत्यादिना भाष्यकारेण ईश्वराधिष्ठितत्वं प्रसाधितम् । तदपि विचार्यमाणे न स्थितिं लभते, तथाहि पूर्वोक्तरीत्या प्रेक्षावत्प्रवृत्तेः स्वार्थकारुण्याभ्यां व्याप्तत्वेन ईश्वरस्य जगत्कर्तृत्वासम्भवात् । यच्चोभयवादिप्रसिद्धे रथादावचेतने प्रवृत्त्यदर्शनं प्रतिपादितम्, तत्र न तावत् प्रवृत्तिमात्रमचेतनस्यैव चेतनानधिष्ठितस्य भवतीत्यस्मदीयं मतं । अपि तु कस्यचिदचेतनस्य चेतनाधिष्ठितस्य प्रवृत्तिः, कस्यचित्तु चेतनानधिष्ठितस्यापीति, न तेन प्रवृत्तिमात्रस्य चेतनाधिष्ठिताचेतनीयत्वं वक्तुं शक्यम् । योप्सु तिष्ठन्नित्यादिशास्त्रमपि प्रकृतिकृतसृष्टेरनन्तरं जलाद्यधिष्ठातृदेवतात्मकजीवविशेषेण तेषां नियम्यत्वप्रतिपादनपरा । तदैक्षत बहु स्यां प्रजायेयमित्यादिवाक्यमपि नादिसृष्टिपरं, अपि तु मध्ये मध्ये सृष्टिपरमेव आदिसर्गस्याबुद्धिपूर्वकत्वप्रतिपादनात् । तथाहि कूर्मपुराणम् "इत्येष प्राकृतः सर्गः संक्षेपात्कथितो मया । अबुद्धिपूर्वकस्त्वेष ब्राह्मीं सृष्टिं निबोधत इति । तस्मादुक्तसर्गस्य प्रकृतिकृतत्वमेवेति । उपसंहरति । तस्मादिति । यस्मात् आदिसर्गः उक्तयुक्त्या बुद्धिपूर्वको न भवितुमर्हति तस्मादित्यर्थः ।

विभजते विशेषेण दर्शयति । मूले क्रियास्विति । पाकादिरूपासु क्रियासु लोकः

पुरुषस्य विमोक्षार्थं प्रवर्तते तद्वदव्यक्तम् ॥ ५८ ॥

"औत्सुक्य—" इति। औत्सुक्यमिच्छा, सा खल्विष्यमाणप्राप्तौ निवर्तते। इष्यमाणश्च स्वार्थः, इष्टलक्षणत्वात् फलस्य। दार्ष्टान्तिके योजयति—"पुरुषस्य विमोक्षार्थं प्रवर्तते तद्वदव्यक्तम्" इति।

ननु भवतु पुरुषार्थः प्रकृतेः प्रवर्तकः, निवृत्तिस्तु कुतस्त्या प्रकृतेः? इत्यत आह—

रङ्गस्य दर्शयित्वा निवर्तते नर्तकी यथा नृत्यात्।
पुरुषस्य तथाऽऽत्मानं प्रकाश्य विनिवर्तते प्रकृतिः॥५९॥

"रङ्गस्य" इति, स्थानेन स्थानिनः पारिषदानुपलक्षयति। 'आत्मानम्' शब्दाद्यात्मना पुरुषाद्भेदेन च प्रकाश्येत्यर्थः।

स्यादेतत्—'प्रवर्ततां प्रकृतिः पुरुषार्थम्। पुरुषादुपकृतात्प्रकृतिर्लप्स्यते कञ्चिदुपकारम्, आज्ञासम्पादनाराधितादिवाज्ञापयितु-

---

यथा इच्छानिवृत्त्यर्थं प्रवर्तते। एवं पुरुषस्य विमोक्षार्थं अव्यक्तं प्रवर्तते इत्यभिप्रायः। अथ पाकादिक्रियायाः सुखार्थत्वेन कथं तस्या निवृत्त्यर्थं प्रवृत्तिर्लोकस्येत्याशङ्कां निराकर्तुमाह। सा खल्विति। तथाच इच्छां प्रति इष्यमाणवस्त्वप्राप्तेः कारणत्वेन इष्यमाणवस्तुप्राप्तौ तस्या निवृत्तिर्युक्तिमत्येव। इष्टलक्षणत्वात् इष्टस्वरूपत्वात्। दार्ष्टान्तिके अव्यक्तप्रवृत्तौ, पुरुषस्य विमोक्षार्थमिति। लोकस्य स्वार्थप्रवृत्तौ अपि प्रकृतेः पुरुषविमोक्षात्मकपरार्थेव प्रवृत्तिरिति तु विशेषः।

कारिकान्तरमवतारयति। नन्विति। पुरुषार्थः पुरुषविमोक्षरूपः, निवृत्तिरिति। प्रकृतेरिति पूर्वोक्तमनुषज्यते। कुतस्त्या किंकारणिका, निवृत्त्यभावे च अनिर्मोक्षप्रसङ्गो बोध्यः। रंगस्य दर्शयित्वा इति कारिकायां रङ्गस्येति कर्मणि षष्ठी बोध्या। एवं पुरुषस्येत्यत्रापि। नच रङ्गं नाट्यस्थानं नवाचेतनस्य तस्य दर्शनं सम्भवति इत्यत आह। रङ्गस्येति। रङ्गस्येति पदमित्यर्थः। स्थानेन स्थानभूतरङ्गप्रतिपादनमुखेन, स्थानिनः तत्र स्थितान् पारिषदान् सभ्यान्, उपलक्षयति लक्षणया बोधयति। मञ्चाः क्रोशन्तीत्यादिवत्। आत्मानं पुरुषं प्रकाश्य अव्यक्तं निवर्तते इति कारिकायामुक्तं, तत्र च अव्यक्तस्य अनुमानमात्रगम्यत्वेन प्रत्यक्षात्मकः तत्प्रकाशो न सम्भवति। यदि च अव्यक्तपदं तत्कार्यभूतानां शब्दादीनां बोधकं तदा शब्दादिप्रकाशस्य पूर्वं सत्त्वात् निवृत्तिः स्यादित्याशङ्कां प्रकृतेः शब्दादिरूपाया एव शब्दाद्यात्मना पुरुषाद्भेदेन प्रकाशे एव प्रकृतिनिवृत्तिर्भवति न तु सामान्यतः प्रकाशेनेति निराकुर्वन्नाह। आत्मानमिति। तथाच प्रकृतेः पुरुषविमोक्षार्थमेव प्रवृत्तिसत्त्वात् पुरुषविमोक्षे सति इष्यमाणप्राप्तौ इच्छानिवृत्तिः तन्निवृत्त्या च प्रकृतेरपि निवृत्तिः सम्भवत्येवेति।

कारिकान्तरमवतारयति। स्यादेतदिति। पुरुषार्थं पुरुषप्रयोजनसिद्ध्ये. पुरुषात् पुरुषसकाशात्, नहि प्रत्युपकाराभावे उपकारकत्वं सम्भवतीति भावः। अत्रैव दृष्टान्तमाह। आज्ञासम्पादनेति। आज्ञायाः सम्पादनेन परिपालनेन, आराधितात्

भुजिष्या। तथा च न परार्थोऽस्या आरम्भः'-इत्यत आह—

**नानाविधैरुपायैरुपकारिण्यनुपकारिणः पुंसः।**
**गुणवत्यगुणस्य सतस्तस्यार्थमपार्थकश्चरति ॥६०॥**

"नाना-"इति। यथा गुणवानप्युपकार्यपि भृत्यो निर्गुणेऽत एवाऽनुपकारिणि स्वामिनि निष्फलाराधनः, एवमियम्प्रकृतिस्तपस्विनी गुणवत्युपकारिण्यनुपकारिणि पुरुषे व्यर्थपरिश्रमेति पुरुषार्थमेव यतते न स्वार्थमिति सिद्धम् ॥ ६० ॥

स्यादेतत्—'नर्तकी नृत्यम्परिषद्भ्यो दर्शयित्वा निवृत्ताऽपि पुनस्तद्दृष्टकौतूहलात् प्रवर्तते यथा, तथा प्रकृतिरपि पुरुषायाऽऽत्मानं दर्शयित्वा निवृत्ताऽपि पुनः प्रवर्त्स्यति'-इत्यत आह—

**प्रकृतेः सुकुमारतरं न किञ्चिदस्तीति मे मतिर्भवति।**
**या दृष्टाऽस्मीति पुनर्न दर्शनमुपैति पुरुषस्य ॥ ६१ ॥**

"प्रकृतेः" इति। सुकुमारतरताऽतिपेशलता, परपुरुषदर्शनासहिष्णुतेति यावत्। असूर्यम्पश्या हि कुलवधूरतिमन्दाक्षमन्थरा प्रमादाद्विगलितशिरोऽञ्चला चेदालोक्यते परपुरुषेण, तदाऽसौ तथा प्रयतते, अप्रमत्तां यथैनां पुरुषान्तराणि न पुनः पश्यन्ति, इति। एवम्प्रकृतिरपि कुलवधूतोऽप्याधिका दृष्टा विवेकेन न पुनर्द्रक्ष्यत इत्यर्थः॥६१॥

---

सेवितात्, आज्ञापयितुरिति पञ्चमी आज्ञापयितृसकाशादित्यर्थः। भुजिष्या सेविका। अस्तु प्रकृतेः प्रत्युपकारलाभः किं तेनेत्यत आह। तथाचेति। अस्याः प्रकृतेः।

गुणवतां स्वभाव एवायं यदनुपकारिण्यपि उपकारकरणम्, अतः परार्थप्रवृत्तिः प्रत्युपकारं विना भवत्येवेत्याशयेनाह। यथेति। तपस्विनी दीना, व्यर्थपरिश्रमा निष्फलाराधना। सिद्धमिति। अस्याः स्वार्थं आरम्भो न, अपि तु परार्थं एवेति सिद्धमित्यर्थः।

तद्दृष्टकौतुहलात् नृत्यद्रष्टृकौतूहलात् कौतूहलं पुनर्दर्शनेच्छा, पेशलताशब्दस्य कोमलत्वार्थकतया यथा कस्यचित्कोमलस्य वस्तुनः स्पर्शासहिष्णुत्वं भवति एवमेव प्रकृतेरतिकोमलत्वेन परपुरुषदर्शनेऽप्यसहिष्णुत्वं भवतीत्याशयेनाह। परपुरुषदर्शनासहिष्णुतेति यावदिति। अत्रैव दृष्टान्तमाह। असूर्यम्पश्या हीति। सूर्यमपि न पश्यति तथाभूतेत्यर्थः। अतिमन्दाक्षमन्थरा अतिमन्दाक्षेण अतित्रपया मन्थरा आक्रान्ता। विवेकेन दृष्टा। विवेकेन भेदेन पुरुषप्रतियोगिकेन, दृष्टा सती पुनर्न द्रक्ष्यते पुनर्दर्शनपथं न प्राप्नोतीत्यर्थः। तथा च यावत्पर्यन्तं पुरुषाद्विवेकख्यातिर्न जाता तावत्पर्यन्तमहं परपुरुषेण दृष्टेत्याकारकज्ञानाभावात्सा प्रवर्तते विवेकख्यातौ सत्यां तु पुरुषे परत्वनिश्चयेन परपुरुषेणाहं दृष्टेत्याकारकज्ञानसत्त्वात् सा दर्शनपथं नागच्छति। विवेकख्यातेस्तत्प्रवृत्तिप्रतिबन्धकत्वाच्च तस्याः परपुरुषं प्रति प्रवृत्तिरिति तु परमार्थः।

स्यादेतत्—"पुरुषश्चेदगुणोऽपरिणामी, कथमस्य मोक्षः? मुचेर्बन्धनविश्लेषार्थत्वात्, सवासनक्लेशकर्माशयानाञ्च बन्धनसमाख्यातानां पुरुषेऽपरिणामिन्यसम्भवात्। अत एवाऽस्य न संसारः प्रेत्यभावापरनामाऽस्ति, निष्क्रियत्वात्। तस्मात् पुरुषविमोक्षार्थम्' इति रिक्तं वचः"—इतीमां शङ्कामुपसंहारव्याजेनाभ्युपगच्छन्नपाकरोति।

**तस्मान्न बध्यतेऽद्धा न मुच्यते नाऽपि संसरति कश्चित्।**
**संसरति बध्यते मुच्यते च नानाश्रया प्रकृतिः ॥६२॥**

"तस्मात्" इति। अद्धा न कश्चित् पुरुषो बध्यते, न कश्चित् संसरति, न कश्चिन्मुच्यते। प्रकृतिरेव तु नानाश्रया सती बध्यते संसरति मुच्यते चेति बन्धमोक्षसंसाराः पुरुषेषूपचर्यन्ते। यथा जयपराजयौ भृत्यगतावपि स्वामिन्युपचर्यते,

---

कारिकान्तरमवतारयितुं शङ्कते। स्यादेतदिति। अगुणः सत्त्वरजस्तमोगुणरहितः, अगुणत्वादेव तस्यापरिणामित्वमित्याह। अपरिणामीति। अपरिणामित्वेऽपि पुरुषस्य मोक्षः कुतो न भवतीत्याशङ्कां मोक्षपदार्थं दर्शयन् निराकरोति। मुचेरिति। मुच्धातोरित्यर्थः। बन्धनपदार्थमाह। सवासनेति। वासना संस्कारः, तत्सहितानां, क्लेशाः अविद्यास्मितारागद्वेषाभिनिवेशाः, कर्म धर्माधर्मात्मकम्, आशयः आशेरते इत्याशयः चेतः तेषामेव बन्धनपदार्थत्वम्। पुरुषेऽसम्भवादिति। तथाच पुरुषे उक्तस्य बन्धस्यासम्भवेन तत्समानाधिकरणस्य तद्विश्लेषस्यापि तत्रासम्भवः। अत एव अपरिणामित्वादेव, संसारस्य प्रेत्यभावापरनामधेयत्वात् प्रेत्यभावस्य तत्रासम्भवमाह। संसार इति। प्रेत्य मृत्वा भावो जन्म इति व्युत्पत्त्या मरणानन्तरं जन्म पुरुषस्य न सम्भवति तस्य निष्क्रियत्वात्। रिक्तम् अर्थशून्यम्, अभ्युपगच्छन् पुरुषस्य स्वतो बन्धाभावं स्वीकुर्वन्, उपसंहारव्याजेन उपसंहारं दर्शयन्नित्यर्थः।

अद्धा तत्त्वतः। संसरति प्रेत्यभाववान् भवति। यदि पुरुषे वस्तुगत्या बन्धमोक्षसंसारा न सन्ति चेत् ते वस्तुतः कुत्र सन्तीत्याशङ्कायामाह। प्रकृतिरेवेति। बुद्धितत्त्वमित्यर्थः, तस्याः साक्षात्संसाराभावात्। नानाश्रया नानापुरुषसम्बन्धिनी। ननु यदि प्रकृतिरेव बन्धमोक्षादिमती भवति तदा पुरुषस्य विमोक्षार्थं प्रवर्तते तद्वदव्यक्तमिति पूर्वोक्तं कथं संगच्छते इत्यत आह। पुरुषेषूपचर्यन्त इति। भेदाग्रहेण प्रकृतिगता बन्धादयः पुरुषसम्बन्धित्वेन व्यवह्रियन्त इत्यर्थः। अत्रैव दृष्टान्तमाह। यथेति। स्वामिन्युपचर्यन्त इति। अत्रोपचारप्रयोजकं सम्बन्धमाह। तदाश्रयेणेति। जयपराजयाश्रयेणेत्यर्थः। तत्फलस्य जयपराजयफलस्य शोकलाभादेः शोकः पराजयस्य, लाभश्च जयस्य फलं बोध्यम्। तथाच सेव्यसेवकभावरूपसम्बन्धसत्त्वात् स्वामिभृत्ययोर्भेदाग्रहात् भृत्यगतानां जयपराजयादीनां स्वामिनि प्रतीतिः तत्फलानुभवश्च यथा भवति, एवमेवात्रापि भेदाग्रहात् पुरुषे बन्धमोक्षादिव्यवहारो भवतीत्यर्थः। उपपादित इति। तस्मात्तत्संयोगादित्यादिकारिकायाम्। उक्तार्थे न निरोधो न चोत्पत्तिर्न बद्धो न च साधकः। न मुमुक्षुर्न वै मुक्त इत्येषा

तदाश्रयेण भृत्यानान्तद्भागित्वात्, तत्फलस्य च शोकलाभादेः स्वामिनि सम्भवात् । भोगापवर्गयोश्च प्रकृतिगतयोरपि विवेकाग्रहात् पुरुषसम्बन्ध उपपादित इति सर्वम्पुष्कलम् ।

नन्ववगतम् 'प्रकृतिगता बन्धसंसारापवर्गाः पुरुषेषु उपचर्यन्ते इति । किंसाधनाः पुनरेते प्रकृतेरित्यत आह—

रूपैः सप्तभिरेव तु बध्नात्यात्मानमात्मना प्रकृतिः ।
सैव च पुरुषार्थम्प्रति विमोचयत्येकरूपेण ॥ ६३ ॥

"रूपैः"इति । तत्त्वज्ञानवर्जं "बध्नाति-धर्मादिभिः, "सप्तभीरूपैः"-भावैरिति । "पुरुषार्थम्प्रति" भोगापवर्गौ प्रति । "आत्मनाऽऽत्मानम्" एकरूपेण—तत्त्वज्ञानेन विवेकख्यात्या विमोचयति, पुनर्भोगापवर्गौ न करोतीत्यर्थः ॥ ६३ ॥

अवगतमीदृशं तत्त्वम्, ततः किमित्यत आह—

एवं तत्त्वाभ्यासान्नाऽस्मि न मे नाऽहमित्यपरिशेषम् ।
अविपर्ययाद्विशुद्धं केवलमुत्पद्यते ज्ञानम् ॥ ६४ ॥

"एवम्" इति । तत्त्वेन विषयेण तत्त्वज्ञानमुपलक्षयति । उक्तप्रकारतत्त्वविषयज्ञानाभ्यासादादरनैरन्तर्यदीर्घकालसेवितात् सत्त्वपु-

---

परमार्थता। "विमुक्तश्च विमुच्यते" इत्याद्यागमो पि प्रमाणत्वेन द्रष्टव्यः, पुष्कलम् उपपन्नम् ।

किंसाधनका इति । प्रकृतेः प्रकृतिगताः, एते बन्धमोक्षसंसारा, किंसाधनकाः कानि साधनानि येषां तथाभूताः, तथाच प्रकृतिनिष्ठबन्धमोक्षसंसारसाधनानि कानीति प्रश्ननिर्गलितार्थः ।

ज्ञानेन चापवर्ग इति कारिकायां ज्ञानरूपस्य प्रकृतिधर्मस्य मोक्षसाधकत्वप्रतिपादनात् उक्तकारिकायां सप्तपदं ज्ञानातिरिक्तधर्मादिसप्तरूपपरमित्याशयेनाह । तत्त्वज्ञानवर्जमिति । रूपैरित्यस्यार्थः भावैरिति । बध्नातीत्यस्य आत्मनात्मानमित्यनेन सम्बन्धः । एकरूपेण एकभावेन,केन तेनेत्याकाङ्क्षायामाह । तत्त्वज्ञानेनेति। किमात्मकेनेत्यत आह । विवेकख्यात्या इति । प्रकृतिपुरुषविवेकग्रहात्मकेनेत्यर्थः । विमोचयतीति । पुरुषभोगार्थं आत्मानं न प्रवर्तयतीत्यर्थः । इममेवार्थमाह । पुनर्भोगेति । अनागतावस्थस्य तस्य पुरुषार्थत्वात् तस्य च कृतत्वादिति भावः ।

तत्त्वशब्दस्य प्रकृतिपुरुषविवेकार्थकतया तस्य अभ्यासासम्भवात् तत्त्वपदं तज्ज्ञानपरतया व्याचष्टे । तत्त्वेन विषयेणेति । तथाच तत्त्वं विषयः, तज्ज्ञानं विषयि, तत्र लक्षणायां विषयविषयिभावाख्यसम्बन्धसत्त्वात् शक्यसम्बन्धरूपा लक्षणा युक्तैव । तत्त्वज्ञानस्य द्वित्रिवारं अभ्यासेऽपि उक्तस्य साक्षात्कारस्याजननेन प्रकृते अभ्यासपदार्थं विशिष्य दर्शयति । आदरेत्यादि । उक्तरूपप्रकारेति । उक्तं रूपं यस्य तथाभूतः प्रकारो यस्य एवंभूतं यत्तत्वं तज्ज्ञानाभ्यासादित्यर्थः । नचोक्तप्रकारेण तत्त्वविषयक-

रूपान्यतासाक्षात्कारि ज्ञानमुत्पद्यते, यद्विषयश्चाऽभ्यासस्तद्विषयकमेव साक्षात्कारमुपजनयति, तत्त्वविषयश्चाऽभ्यास इति तत्त्वसाक्षात्कारं जनयति । अत उक्तम्—"विशुद्धम्"इति ।

कुतो विशुद्धमित्यत आह—"अविपर्ययात्" इति । संशयविपर्ययौ हि ज्ञानस्याऽविशुद्धी, तद्रहितं विशुद्धम्, तदिदमुक्तम्—"अविपर्ययात्" इति । नियतमनियततया गृह्णन् संशयोऽपि विपर्ययः, तेन 'अविपर्ययात्'इति संशयविपर्ययाभावो दर्शितः । तत्त्वविषयत्वाच्च संशयविपर्ययाभावः ।

स्यादेतत्-'उत्पद्यतामीदृशाऽभ्यासात् तत्त्वज्ञानम्, तथाऽप्यनादिना मिथ्याज्ञानसंस्कारेण मिथ्याज्ञानं जनयितव्यम् । तथा च तन्निबन्धनस्य संसारस्याऽनुच्छेदप्रसङ्ग इत्यत उक्तं-"केवलम्"इति ।

---

ज्ञानाभ्यासेपि कथं सत्त्वपुरुषान्यतासाक्षात्कारिज्ञानस्योत्पत्तिः इत्याशङ्कायामाह । यद्विषयश्चाभ्यास इति । यद्विषयकज्ञानाभ्यास इत्यर्थः । तेन अभ्यासस्य सविषयकत्वाभावेऽपि न क्षतिः । उक्तसाक्षात्कारस्य तत्त्वविषयकत्वादेव विशुद्धत्वमपि सिद्ध्यतीत्याह । अत उक्तमिति । यत उक्तज्ञानस्य तत्त्वविषयकत्वं अत इत्यर्थः । विशुद्धं विशेषतः शुद्धं, शुद्धं प्रमात्मकं, विशेषः अप्रमानात्मकत्वरूपः । तत्त्वविषयकत्वेनोक्तसाक्षात्कारस्य प्रमात्मकत्वेपि पीतः शङ्ख इत्याकारकज्ञानस्य धर्म्यंशे प्रमात्मकत्वेपि पीतत्वांशेऽप्रमात्मकत्वमिव अप्रमात्वमपि सम्भवतीत्याशङ्कामपनेतुमाशङ्कते । कुतोऽविशुद्धमिति । अविपर्ययात् विपर्ययभिन्नत्वात् । तदिदमुक्तमित्यादि । अविपर्ययादित्यनेन इदं संशयविपर्ययरहितत्वम् उक्तमित्यर्थः ।

ननु विपर्ययशब्दस्य तदभाववति तत्प्रकारकनिश्चयार्थकतया अविपर्ययादित्यनेन तथाविधनिश्चयभिन्नत्वमेव प्रतीयते, नतु संशयविपर्ययभिन्नत्वं इति विपर्ययभिन्नत्वस्य विशुद्धत्वव्याप्यत्वाभावेन कथं तेन हेतुना विशुद्धत्वसिद्धिरित्याशङ्कां निराकरोति । नियतमनियततयेत्यादिना । नियतं तथाभूतं वस्तु, अनियततया अतथाभूततया, गृह्णन् विषयीकुर्वन्, संशयोपि विपर्यय इति । तथाचोक्तस्थले विपर्ययपदं तदभाववति तत्प्रकारकज्ञानमात्रार्थकं नतु निश्चयत्वघटितमिति तदभाववति तत्प्रकारकज्ञानत्वं संशयविपर्ययात्मकनिश्चयसाधारणमेवेति अविपर्ययादित्यनेन संशयविपर्ययभिन्नत्वं दर्शितमिति नोक्तहेतोर्व्यभिचारित्वमिति भावः ।

केवलमिति कारिकांशं अवतारयितुमाशङ्कते । स्यादेतदिति । तत्त्वज्ञानोत्पत्त्यनन्तरं मिथ्याज्ञानसंस्कारस्य अनुवृत्तिं दर्शयितुं अनादिनेति । तथाच मिथ्याज्ञानसंस्कारस्यानादित्वेन तत्त्वज्ञानेन तस्य नाशासम्भवात् अनुवृत्तिर्युक्तैव । मिथ्याज्ञानसंस्कारसत्त्वेपि मिथ्याज्ञानस्याभावे न संसारः सम्भवति इत्यत आह । तेनेति । मिथ्याज्ञानसंस्कारेणेत्यर्थः । तन्निबन्धनस्य मिथ्याज्ञाननिबन्धनस्य, केवलमित्यस्य विवरणं विपर्ययेणासम्भिन्नमिति । विपर्ययेण सवासनमिथ्याज्ञानेन असम्भिन्नम् असमानाधिकरणम् ।

नन्वनादिभूतायाः मिथ्याज्ञानवासनायाः आदिमतोक्ततत्त्वज्ञानेन विनाशासम्भ-

विपर्ययेणाऽसम्भिन्नम् । यद्यप्यनादिर्विपर्ययवासना, तथाऽपि तत्त्व-
ज्ञानवासनया तत्त्वविषयकसाक्षात्कारमादधत्याऽऽदिमत्याऽपि श-
क्या समुच्छेत्तुम् । तत्त्वपक्षपातो हि धियां स्वभावः, यदाहुर्बाह्या अपि—

"निरुपद्रवभूतार्थस्वभावस्य विपर्ययैः ।
न बाधोऽयत्नवत्त्वेऽपि बुद्धेस्तत्पक्षपाततः—" इति ॥

ज्ञानस्वरूपमुक्तम्—"नास्मि, न मे, नाऽहम्" इति । 'नास्मि, इ-
त्यात्मनि क्रियामात्रं निषेधति । यथाऽऽहुः 'कृभ्वस्तयः क्रियासामा-
न्यवचनाः' इति । तथा चाऽध्यवसायाभिमानसङ्कल्पालोचनानि चा-
न्तराणि बाह्याश्च सर्वे व्यापारा आत्मनि प्रतिषिद्धा न बोद्धव्यानि ।
यतश्चात्मनि व्यापारावेशो नास्त्यतो 'नाहम्' । अहमिति कर्तृपदम्,
अहं जानामि, अहं जुहोमि, अहं ददे' इति सर्वत्र कर्तुः परामर्शात् ।
निष्क्रियत्वे च सर्वत्र कर्तृत्वाभावः । ततः सुष्ठूक्तम्—"नाहम्" इति

वात् कथं तस्य विपर्ययेणासम्भिन्नत्वमित्याशङ्कां निराकरोति । यद्यपीत्यादिना ।
अनादिरिति । संसारस्यानादित्वेन तत्कारणीभूतस्य विपर्ययस्य तद्वासनायाश्चानादि-
त्वावश्यकत्वात् । मिथ्याज्ञानस्य साक्षात्कारात्मकस्य साक्षात्कारात्मकतत्त्वज्ञानं वि-
ना निवृत्त्यसम्भवादाह । तत्त्वविषयसाक्षात्कारमादधत्या इति । आदधत्या उत्पा-
दयन्त्या, शक्येति विपर्ययवासनेति पूर्वेण सम्बन्धः । उक्तार्थे हेतुमाह । तत्त्वपक्षपातो
हीति । हि यतः, धियां बुद्धीनां तत्त्वपक्षपातः तत्त्वविषयीकरणे सति ततो वैमुख्या-
भावरूपः स्वभावः । यथा हि मरुमरीचिकादौ जलबुद्धौ बहुकालतः सत्यामपि सकृदेव
तत्समीपगमने सति तत्र मरीचिस्वरूपतत्त्वज्ञाने सति पुनर्न कदाचिदपि जलबुद्धिर्भव-
ति, एवमेव प्रकृतिपुरुषविवेकात्मकतत्त्वज्ञाने सति पुनर्न कदाचिदपि मिथ्याज्ञानं तद्वा-
सना वा समुन्मिषति अपि तु समूलघातं तन्नश्यत्येवेति न पुनः संसारस्यानुवृत्तिरिति
भावः । उक्तार्थे बाह्यानामपि सम्मतिमाह । यदाहुर्बाह्या अपीति । वेदबाह्यमतावल-
म्बिनो बौद्धाः बाह्याः । निरुपद्रवेति । उपद्रवो दोषः तद्रहितः अत एव भूतार्थस्वभावः
स्वभावतः सत्यभूतो योऽर्थः, तस्य विपर्ययैः मिथ्याज्ञानैः, यत्नवत्त्वेऽपि अनादिभिः
वासनारूपेण विद्यमानैः सत्यार्थं बाधितुं प्रयत्नवत्त्वेऽपि, बाधो न भवति । अत्र हेतुः
बुद्धेरिति । ज्ञानमात्रस्य तत्पक्षपाततः तत्त्वपक्षपातादित्यर्थः । 'तत्त्वपक्षपातो हि धियां
स्वभावः' इति सिद्धान्तात् । यद्यपि उक्तश्लोकस्तावत् बौद्धैः आत्मनास्तित्वसाध-
नावसरेऽभिहितः, तथापि बुद्धेस्तत्त्वपक्षपातोऽस्तीत्येतद्बौद्धानामपि सम्मतमस्तीत्ये-
तावन्मात्रे सा कारिका प्रमाणत्वेनोपन्यस्ता ।

द्वितीयपादं व्याचष्टे । ज्ञानस्वरूपमुक्तमिति । कारिकाकृतेति शेषः । अस्धातोः
वृत्त्यर्थकतया नास्मीत्यनेन कथं क्रियासामान्यनिषेध इति शङ्कां प्रकृतस्थले अस्धातोः
क्रियासामान्यार्थकत्वेन नास्मि इत्यनेन क्रियासामान्यनिषेधप्रतीतिसम्भवात् इ-
त्यभिप्रायेण परिहर्तुं अस्धातोः क्रियासामान्यार्थकत्वे वैयाकरणसम्मतिमाह । य-
थाहुरिति । कृभ्वस्तयः कृधातुः भूधातुरस्धातुश्चेत्यर्थः । आन्तराणि शरीराभ्यन्तरव-
र्तिना, बाह्याः बहिर्वर्तमानाः । आत्मनि व्यापारावेशाभावे तस्य कर्तृत्वं अहंपदार्थ-
भूतं न सम्भवति इत्याशयेनाह । अहमितीति । कर्तृपदं कर्तृबोधकं पदं । तस्य कर्तृबो-

अत एव "न मे"। कर्ता हि स्वामितां लभेत; तस्मात् कुतः स्वामाविकी स्वामितेत्यर्थः।

अथ वा "नाऽस्मि" इति, "पुरुषोऽस्मि, न प्रसवधर्मा"। अप्रसवधर्मित्वाच्चाकर्तृत्वमाह—"नाहम्" इति। अकर्तृत्वाच्च न स्वामितेत्याह—"न मे" इति।

ननु 'एतावत्सु ज्ञातेष्वपि कश्चित् कदाचिदज्ञातो विषयोऽस्ति, तदज्ञानं जन्तून् बन्धयिष्यति' इत्यत आह—"अपरिशेषम्" इति। नास्ति किञ्चिदस्मिन् परिशिष्टं ज्ञातव्यं, यदज्ञानं जन्तून् बन्धयिष्यतीत्यर्थः॥

किं पुनरीदृशेन तत्त्वसाक्षात्कारेण सिद्ध्यतीत्यत आह—

**तेन निवृत्तप्रसवामर्थवशात् सप्तरूपविनिवृत्ताम्।**
**प्रकृतिं पश्यति पुरुषः प्रेक्षकवदवस्थितः स्वच्छः॥६५॥**

"तेन" इति। भोगविवेकसाक्षात्कारौ हि प्रकृतेः प्रसोतव्यौ। तौ च प्रसूताविति नास्याः प्रसोतव्यमवशिष्यत इति निवृत्तप्रसवा प्रकृतिः। विवेकज्ञानरूपो योऽर्थस्तस्य वशः—सामर्थ्यम्, तस्मात्। अतत्त्वज्ञानपूर्वकाणि खलु धर्माधर्माज्ञानवैराग्यावैराग्यैश्वर्यानैश्व-

---

धकत्वे युक्तिमाह। अहज्ञानाम्यहमित्यादि। निष्क्रियत्वं निर्व्यापारत्वं। आत्मन अकर्तृत्वज्ञानेपि अन्यकर्तृकदुःखादिसम्बन्धसम्भवेन तादृशदुःखादिमत्त्वज्ञाने न मुक्तिसम्भवः इत्यतस्तस्यासङ्गित्वमप्याह। अत एव न मे इति। अत एव अकर्तृत्वादेव, मे मत्सम्बन्धि न किञ्चित् इत्याकारकज्ञाने सति आत्मनः दुःखादि सम्बन्धज्ञानाभावेन न बन्धसम्भवः। स्वामितां सम्बन्धिताम्।

नास्मि इत्यस्मिशब्देन कर्तृत्वस्यापि बोधसम्भवेन तन्निषेधेनैव कर्तृत्वनिषेधसम्भवात् पुनर्नाहमित्यनेन तन्निषेधे पौनरुक्त्यापत्तिरित्याशयेन व्याख्यानान्तरमाह। अथवेति। ना इत्यस्यार्थः पुरुष इति नृशब्दस्य प्रथमैकवचनान्तत्वात्। पुरुषत्वादेवाप्रसवधर्मित्वं तस्य सिद्ध्यतीत्याशयेनाह। न प्रसवधर्मेति। परिणामीत्यर्थः।

तदज्ञानं अज्ञातविषयाज्ञानं। नास्ति किञ्चिदिति। एकस्मिन् सुवर्णे ज्ञाते यथा कटककुण्डलादयः सर्वे एव ज्ञाता भवन्ति एवं सर्वविकारप्रकृतिभूतस्य प्रधानस्य अनुभयरूपपुरुषस्य च भेदसाक्षात्कारे सति सर्वं ज्ञातमेवेति न किञ्चिदज्ञातमवशिष्टं भवेत् यदज्ञानं जन्तून् बाधयिष्यतीति भावः।

कारिकान्तरमवतारयति। किं पुनरिति। कारिकायां तेनेति। तेन उक्ततत्त्वसाक्षात्कारेण निवृत्तप्रसवां निवृत्तः प्रसवो यस्याः इति विग्रहे कार्योत्पादात्मकप्रसवपदार्थघटकीभूतं कार्यं दर्शयति। भोगेति। प्रसोतव्यौ उत्पादयितव्यौ। प्रसोतव्यं प्रसवार्हं अर्थवशात् इति व्याचष्टे। विवेकज्ञानरूप इति। विवेकज्ञानात् कथं सप्तरूपविनिवृत्तिरित्यत्र अभिप्रायं विवृणोति। अतत्त्वज्ञानपूर्वकाणि खल्वित्यादि। सप्तरूपाण्याह। धर्माधर्मेत्यादि। न च धर्माधर्मादीनां

थाणि । वैराग्यमपि केवलतौष्टिकानामतत्त्वज्ञानपूर्वकमेव । तत्र तत्त्वज्ञानं विरोधित्वेनाऽतत्त्वज्ञानमुच्छिनत्ति । कारणनिवृत्त्या च सप्तरूपविनिवृत्ता प्रकृतिः । "अवस्थितः" इति निष्क्रियः, "स्वच्छः" इति रजस्तमोवृत्तिकलुषया बुद्ध्याऽसम्भिन्नः । सात्त्विक्या तु बुद्ध्या तदाऽप्यस्य मनाक् सम्भेदोऽस्त्येव, अन्यथैवम्भूतप्रकृतिदर्शनानुपपत्तेरिति ॥ ६५ ॥

स्यादेतत्—'निवृत्तप्रसवामिति न मृष्यामहे, संयोगकृतो हि सर्ग इत्युक्तम् , योग्यता च संयोगः, भोक्तृत्वयोग्यता च पुरुषस्य चैतन्यम् , भोग्यत्वयोग्यता च प्रकृतेर्जडत्वम् । न चैतयोरस्ति निवृत्तिः । न च करणीयाभावान्निवृत्तिः, तज्जातीयस्याऽन्यस्य करणीयत्वात्, पुनः पुनः शब्दाद्युपभोगवत्'—इत्यत आह—

**दृष्टा मयेत्युपेक्षक एको दृष्टाऽहमित्युपरमत्यन्या ।**
**सति संयोगेऽपि तयोः प्रयोजनं नास्ति सर्गस्य ॥६६॥**

"दृष्टा" इति । करोतु नाम पौनःपुन्येन शब्दाद्युपभोगम्प्रकृतिर्यया विवेकख्यातिर्न कृता कृतविवेकख्यातिस्तु शब्दाद्युपभोगं न

---

अतत्त्वज्ञानपूर्वकत्वेपि वैराग्यस्य कथमतत्त्वज्ञानपूर्वकत्वमित्यत आह। वैराग्यमपीति। केवलतौष्टिकानां अव्यक्तं वा अहङ्कारं वा इन्द्रियाणि वा भूतानि वा आत्मेत्यभिमन्यमानां यद्वैराग्यं तदतत्त्वज्ञानपूर्वकमेव। कारणनिवृत्त्या अतत्त्वज्ञानात्मककारणनिवृत्त्या, सप्तरूपाणि धर्माधर्मादीनि। स्वच्छपदार्थमाह असम्भिन्नः इति। अमिश्रितः गृहीतविवेक इति यावत्। रजस्तमोवृत्तिकलुषयेत्यत्र सत्त्वस्यानुपादाने बीजमाह । सात्त्विक्या इति । मनाक् स्वल्पः किञ्चित्कालावस्थायीत्यर्थः । तदानीमपि बुद्ध्या मनाक्सम्बन्धसत्त्वे प्रमाणमाह । अन्यथेति । एवम्भूता सप्तरूपविनिवृत्ता या प्रकृतिस्तद्दर्शनानुपपत्तेः, वृत्तिज्ञानरूपस्य दर्शनस्य पुरुषे आरोपानुपपत्तेरिति यावत् ।

सर्गात्मकस्य प्रकृतिपुरुषसंयोगात्मकप्रसोतव्यकारणस्य सत्त्वात् कुतो निवृत्तिः तथा च निवृत्तप्रसवामिति न संगच्छते इत्याशयेनाशङ्कते । स्यादेतदिति । न मृष्यामहे न सहामहे । असहने कारणमाह । संयोगकृतो हीति । प्रकृतिपुरुषसंयोगप्रयुक्त इत्यर्थः । उक्तम् "संयोगस्तत्कृतः सर्गः" इति कारिकायामित्यर्थः। भवतु संयोगः सर्गहेतुः, तथापि तत्त्वसाक्षात्कारेण तन्निवृत्तिः स्यादित्याशङ्कायां संयोगस्य भोक्तृत्वयोग्यताभोग्यत्वयोग्यतारूपत्वेन योग्यतायाश्च स्वाभाविकत्वेन तत्त्वज्ञानेन न तस्या निवृत्तिः सम्भवतीत्याशयेनाह । योग्यता चेति । योग्यताया नित्यत्वं दर्शयति । चैतन्यमिति । एतयोः योग्यतारूपयोः चैतन्यजडत्वयोः । संयोगात्मकस्य प्रसवकारणस्यानिवृत्तौ अपि प्रसवनीयात्मकस्य कारणान्तरस्याभावादेव न भोगोत्पत्तिः सम्भवतीत्याशयेनाशङ्कते । न चेति । तज्जातीयस्य भोगादिजातीयस्य । एकस्य तज्जातीयस्य कृतत्वेपि अन्यस्य करणीयत्वं सम्भवतीति दृष्टान्तपुरस्सरं दर्शयति । पुनः पुनरिति ।

जनयति। अविवेकख्यातिनिबन्धनो हि तदुपभोगः निबन्धनाभावे न भवितुमर्हति, अङ्कुर इव बीजाभावे। प्राकृतान् हि सुखदुःखमोहात्मनः शब्दादींस्तदविवेकात् 'ममैते' इत्यभिमन्यमान आत्मा भुञ्जीत। एवं विवेकख्यातिमपि प्राकृतीमविवेकादेवाऽऽत्मा 'मदर्थेयम्' इति मन्यते। उत्पन्नविवेकख्यातिस्तु तदसंसर्गाच्छब्दादीन्नोपभोक्तुमर्हति, नापि विवेकख्यातिम्प्राकृतीं ततो विविक्त आत्मा स्वार्थमभिमन्तुमर्हति। पुरुषार्थौ च भोगविवेकौ प्रकृत्यारम्भप्रयोजकौ, तावपुरुषार्थौ सन्तौ न प्रकृतिं प्रयोजयतः। तदिदमुक्तम्—"प्रयोजनं नास्ति सर्गस्य" इति। अत्र प्रयुज्यते सर्गे प्रकृतिरनेनेति प्रयोजनम्, तदपुरुषार्थे नास्तीत्यर्थः॥ ६६॥

स्यादेतत्—"उत्पन्नतत्त्वसाक्षात्कारान्मुक्तश्चेत्तदनन्तरमेव मुक्तस्य तस्य देहपातः स्यादिति कथमदेहः प्रकृतिम्पश्येत्। अथ तत्त्वज्ञानेऽपि न मुच्यते, कर्मणामक्षीणत्वात्। तेषां कुतः प्रक्षयः? 'भोगात्'

इतीति। कृतविवेकख्यातेः बुद्धेः शब्दाद्युपभोगाकरणे कारणमाह। अविवेकख्यातिनिबन्धनो हीति। अविवेकख्यातिः निबन्धनं कारणं यस्य तथाभूतः, तदुपभोगः शब्दाद्युपभोगः। निबन्धनाभावे निबन्धनस्य शब्दाद्युपभोगप्रयोजकस्य अविवेकग्रहस्याभावे, तत् शब्दाद्युपभोगाश्रयत्वम्, अत्रैव दृष्टान्तमाह। अङ्कुर इवेति। यथा बीजात्मकनिबन्धनाभावे अङ्कुरः न भवितुमर्हति एवमेवेत्यर्थः। शब्दाद्युपभोगस्य अविवेकख्यातिनिबन्धनत्वं विशदयति। प्राकृतान्हीत्यादिना। प्राकृतान् प्रकृतिपरिणामभूतान्, तदविवेकात् प्रकृतिविवेकाग्रहात्। भोगस्य निबन्धनत्वं दर्शयित्वा विवेकख्यातेरपि तत्त्वं दर्शयति। मदर्थेयमिति। मदुपकारिका इत्यर्थः। तथाच विवेकाग्रहदशायां आत्मा प्रकृतिसम्बन्धिनः शब्दादीन् ममैते इत्यभिमन्यते एवं प्रकृतिसम्बन्धिनीं विवेकख्यातिमपि मदुपकारकत्वेन मन्यते, इत्थरीत्या पुरुषार्थभूताया विवेकख्यातेरपि अविवेकख्यातिनिबन्धनत्वमेवेति भावः। ततो विविक्तः बुद्ध्यादिभ्यो भिन्नत्वेन गृहीतः। पुरुषार्थौ पुरुषेणार्थ्यमानौ। प्रकृत्यारम्भप्रयोजकौ प्रकृतेः सकाशाद् य आरम्भः कार्याणां तत्प्रयोजकावित्यर्थः। अपुरुषार्थाविति। ममेत्यभिमानाभावादित्यर्थः। प्रयोजनं नास्तीत्यत्र प्रयोजनशब्दस्य प्रयोजकत्वार्थकत्वमाह। प्रयुज्यते इति। प्रयोजकाभावेन प्रयोज्यस्याप्यभावादिति भावः। तत् प्रयोजकत्वं, अपुरुषार्थे अपुरुषार्थभूते, भोगादौ नास्तीत्यर्थः। कारिकार्थस्तु एकः द्रष्टा पुरुषः मया प्रकृतिः दृष्टा इति उपेक्षको भवति तत्तद्भोगाद्यपेक्षारहितो भवतीत्यर्थः। अन्या प्रकृतिः, अहं पुरुषेण दृष्टा इति मत्वा उपरमति न पुनः प्रसूते, इति तयोः प्रकृतिपुरुषयोः संयोगे सत्यपि सर्गस्य विवेकाग्रहरूपं प्रयोजकं नास्तीत्यर्थः।

कारिकान्तरमवतारयति। स्यादेतदिति। इष्टापत्तौ बाधकमाह। कथमदेहः प्रकृतिं पश्येदिति। दर्शनमात्रे शरीरस्य कारणत्वादित्यर्थः। तथाच प्रकृतिं पश्यति पुरुषः प्रेक्षकवदवस्थितः स्वच्छः इत्युक्तमसङ्गतमिति भावः। तत्त्वज्ञानस्य मोक्षकारणत्वेऽपि कर्मणः मुक्तिप्रतिबन्धकत्वात् कर्मक्षयानन्तरमेव मोक्ष इत्याशयेनाशङ्कते। अथेति। तेषां कर्मणाम्। भोगादिति। नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपीति वचनात्। रिक्तं अर्थ-

इति चेत्, हन्त भोः न तत्त्वज्ञानं मोक्षसाधनम्–इति 'व्यक्ताव्यक्तज्ञविज्ञानजन्मना तत्त्वज्ञानेनापवर्गः' इति रिक्तं वचः । 'भोगेन चापरिसङ्ख्येयः कर्माशयप्रचयोऽनियतविपाककालः क्षेतव्यः, ततश्चापवर्गप्राप्तिः' इत्यपि मनोरथमात्रम्" इत्यत आह—

**सम्यग्ज्ञानाधिगमात् धर्मादीनामकारणप्राप्तौ ।**
**तिष्ठति संस्कारवशात् चक्रभ्रमिवद्धृतशरीरः ॥६७॥**

"सम्यक्" इति । तत्त्वसाक्षात्कारोदयादेवानादिरप्यनियतविपाककालोऽपि कर्माशयप्रचयो दग्धबीजभावतया न जात्यायुर्भोगलक्षणाय फलाय कल्पते । क्लेशसलिलावसिक्तायां हि बुद्धिभूमौ कर्मबीजान्यङ्कुरं प्रसुवते । तत्त्वज्ञाननिदाघनिपीतसकलक्लेशसलिलायामूषरायां कुतः कर्मबीजानामङ्कुरप्रसवः ? तदिदमुक्तम्–"धर्मादीनामकारणप्राप्तौ" इति, अकारणत्वप्राप्तावित्यर्थः । उत्पन्नतत्त्वज्ञानोऽपि च संस्कारवशात् तिष्ठति, यथोपरतेऽपि कुलालव्यापारे चक्रं वेगाख्यसंस्कारवशात् भ्रमत् तिष्ठति । कालपरिपाकवशात्तूपरते संस्कारे निष्क्रियं भवति । शरीरस्थितौ च प्रारब्धकर्मपरिपाकौ धर्माधर्मौ संस्कारौ, तौ च भोगेन क्षेतव्यौ । तथा चाऽनुश्रूयते—

---

शून्यं । अपरिसंख्येयः असंख्यः, कर्माशयप्रचयः, कर्मणां आशयाः संस्काराः धर्माधर्मरूपाः तेषां प्रचयः समूहः, अनियतेति । अनियतः अनिश्चितः विपाकानां जात्यायुर्भोगानां कालो यस्य तथाभूतः । मनोरथमात्रमिति । अनियतकर्मकलापानां प्रक्षयार्थमपेक्षणीयकालस्यान्तरे पुनरपि कर्मणामुत्पत्त्या सर्वकर्मप्रक्षयकालस्य दुर्लभत्वापत्तेरित्यर्थः ।

अथ तत्त्वज्ञानानन्तरं कर्मणां प्रक्षयाभावे कुतस्तेषां न भोगोत्पादकत्वमित्यत आह । क्लेशेति । क्लेशा अविद्यास्मितारागद्वेषाभिनिवेशात्मकाः पूर्वोक्ताः त एव सलिलं तेन अवसिक्तायां, बुद्धिभूमौ बुद्धिरूपायां भूमौ, कर्माणि धर्माधर्मरूपाण्येव बीजानि, अङ्कुरं भोगाद्यात्मकं, प्रसुवते उत्पादयन्ति । तथाच कर्मभिः भोगे जननीये अविद्यायाः सहकारिकारणत्वेन तदभावात् तत्त्वज्ञानानन्तरं न भोगोत्पत्तिः कर्मभिः सम्भवतीत्यर्थः । तत्त्वज्ञानेति । तत्त्वज्ञानात्मको यो निदाघः तेन निपीतं निःशेषं यथा स्यात्तथा पीतं सलिलं अविद्यारूपं यस्याः तथाभूतायाम् अत एव ऊषरायां, बुद्धिभूमौ इति पूर्वोक्तमनुषज्जते ।

अकारणप्राप्तौ इति कारिकाघटककारणशब्दस्य भावप्रधानत्वमाह । अकारणत्वप्राप्ताविति । नच शरीरस्थितेरपि धर्मादिकारणकत्वात धर्मादीनां अकारणत्वप्राप्तौ उत्पन्नतत्त्वसाक्षात्कारस्य शरीरपातः स्यात इत्याशङ्कायामाह । उत्पन्नतत्त्वज्ञानोपि चेति । अत्रच दृष्टान्तमाह । यथेति। प्रकृतस्थले संस्कारः कः इत्याशङ्कायामाह । प्रारब्धपरिपाकाविति। प्रारब्धः परिपाको ययोस्तथाभूतौ तच्छरीरारम्भकाविति भावः । संस्कारोपरमे निष्क्रियं भवति शरीरामत्यस्मिन्नर्थे वैदान्तिकसम्मतं छान्दोग्यप्रमाणमाह । तथाचेति । भोगेनेत्यादि । सूत्रम् ( अ०४पा०१सू०१९ ) अस्यार्थः, इतरे आ-

"तस्य तावदेवं चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्ये" इति ( छा० ६। १४।२ )। प्रक्षीयमाणाविद्यासंस्कारावशेषश्च संस्कारस्तद्वशात्-तत्सामर्थ्याद् धृतशरीरस्तिष्ठति।

स्यादेतत्-"यदि संस्कारशेषादपि धृतशरीरस्तथाऽपि कदाऽस्य मोक्षो भविष्यति ?" इत्यत आह—

**प्राप्ते शरीरभेदे चरितार्थत्वात् प्रधानविनिवृत्तौ।**
**ऐकान्तिकमात्यन्तिकमुभयं कैवल्यमाप्नोति ॥ ६८ ॥**

"प्राप्ते"। अनारब्धविपाकानां तावत् कर्माशयानां तत्त्वज्ञानाग्निना बीजभावो दग्धः। प्रारब्धविपाकानां तूपभोगेन क्षये सति, "प्राप्ते शरीरभेदे" इति—विनाशे। "चरितार्थत्वात्" इति-कृतप्रयोजनत्वात् प्रधानस्य तम्पुरुषम्प्रति विनिवृत्तौ। "ऐकान्तिकम्"—अवश्यम्भावि "आत्यन्तिकम्"-अविनाशि-इत्युभयं "कैवल्यम्—" दुःखत्रयविगमम्प्राप्नोति पुरुषः ॥ ६८ ॥

प्रमाणेनोपपादितेऽप्यत्यन्तश्रद्धोत्पादनाय परमर्षिपूर्वकत्वमाह—

**पुरुषार्थज्ञानमिदं गुह्यं परमर्षिणा समाख्यातम्।**
**स्थित्युत्पत्तिप्रलयाश्चिन्त्यन्ते यत्र भूतानाम् ॥ ६९ ॥**

"पुरुष" इति। "गुह्यम्-" गुहानिवासि, स्थूलधियां दुर्बोधमिति

---

रब्धकार्ये पुण्यपापे, न ज्ञानमात्रेण किन्तु भोगेन क्षपयित्वा सम्पद्यते कैवल्यभाजनमिति शेषः। तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ सम्पत्स्ये इति। ( छान्दोग्य ६। १४-२ ) अयमर्थः, तस्य तत्त्वज्ञानिनः तावदेव चिरं तावत्कालमेव विलम्बः यावन्न विमोक्ष्ये प्रारब्धकर्मणा यावन्मोक्षो न भवेत। अथ कर्मणः संस्कारोपरमे सति, सम्पत्स्ये विदेहकैवल्यं प्राप्नोतीत्यर्थः। प्रक्षीयमाणेति। प्रक्षीयमाणः विनश्यमानः अविद्यासंस्काराविशेषः यत्र तथाभूतसंस्कारवशात् इत्यर्थः।

उक्त श्रुतिप्रतिपादितो मोक्षः कदा भविष्यतीत्यभिप्रायेणाशङ्कते। स्यादेतदिति। अनारब्धविपाकानां न आरब्धः विपाको जात्यायुर्भोगलक्षणो येषां तथाभूतानां। तथाच कर्मणां मध्ये यानि प्रारब्धकर्माणि तेषां विनाशस्तु भोगादेव भवति, तदभिप्रायेणैव 'नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपी'त्यादिवचनम्। यानि सञ्चितकर्माणि तेषां विनाशः ज्ञानाग्निनापि, तदभिप्रायेणैव 'ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुतेऽर्जुन। इति वचनम्। तदेतदभिप्रेत्याह। तत्त्वज्ञानाग्निना बीजभावो दग्ध इति। तथाचोक्तरीत्या सर्वेषामपि कर्मणां क्षये सति भविष्यकाले भोगस्यासम्भवात्, अनागतावस्थस्य भोगापवर्गस्य प्रकृतिप्रवर्तकस्याभावात् तम्प्रति प्रकृतिर्न पुनः प्रवर्तते इति उक्तव्यक्ताव्यक्तज्ञानां तत्त्वज्ञाने सति अवश्यम्भावि अविनाशिभूतं च कैवल्यं पुरुषः प्राप्नोतीति भावः।

श्रद्धोत्पादनायेति। श्रद्धाया ज्ञानाङ्गत्वात्, तत्र च श्रद्धावान्लभते ज्ञानं इत्या-

यावत्। "परमर्षिणा-" कपिलेन। तामेव श्रद्धामागमिकत्वेन द्रढयति-"स्थित्युत्पत्तिप्रलयाश्चिन्त्यन्ते यत्र भूतानाम्" इति। 'यत्र' ज्ञाने-यदर्थम्,-यथा 'चर्मणि द्वीपिनं हन्ति' इति। "भूतानाम्"-प्राणिनां "स्थित्युत्पत्तिप्रलयाः" आगमैः "चिन्त्यन्ते"।

स्यादेतत्-"यत् परमर्षिणा साक्षात्कथितं तच्छ्रद्दधीमहि, यत्पुनरीश्वरकृष्णेन कथितं, तत्र कुतः श्रद्धा?"-इत्यत आह—

एतत् पवित्रमग्र्यं मुनिरासुरयेऽनुकम्पया प्रददौ।
आसुरिरपि पञ्चशिखाय तेन च बहुधा कृतं तन्त्रम्॥७०॥

"एतत्" इति। "एतत् पवित्रम्"-पावनम्-दुःखत्रयहेतोः पाप्मनः पुनातीति, "अग्र्यम्"—सर्वेभ्यः पवित्रेभ्यो मुख्यम्. "मुनिः"—कपिलः "आसुरयेऽनुकम्पया प्रददौ, आसुरिरपि पञ्चशिखाय, तेन बहुधा कृतं तन्त्रम्।

शिष्यपरम्परयाऽऽगतमीश्वरकृष्णेन चैतदार्याभिः।
सङ्क्षिप्तमार्यमतिना सम्यग्विज्ञाय सिद्धान्तम्॥ ७१॥

"शिष्य" इति। आरात् याता तत्त्वेभ्य इत्यार्या, आर्या मतिर्यस्य सोऽयम्-'आर्यमतिः' इति।

एतच्च शास्त्रं सकलशास्त्रार्थसूचकत्वात्, न तु प्रकरणमित्याह-

सप्तत्यां किल येऽर्थास्तेऽर्थाः कृत्स्नस्य षष्टितन्त्रस्य।
आख्यायिकाविरहिताः परवादविवर्जिताश्चापि॥७२॥

"सप्तत्याम्" इति। तथा च राजवार्तिकम्—

---

द्विवचनं प्रमाणम्। परमर्षिणेति। कपिलस्य परमर्षित्वे "ऋषिं प्रसूतं कपिलं यस्तमग्रे ज्ञानैर्बिभर्ति इति श्वेताश्वतरीयमेव प्रमाणम्। यत्रेति। निमित्तसप्तमीत्याशयेन तस्या अर्थमाह। यदर्थमिति। सप्तम्या निमित्तार्थकत्वे प्रसिद्धं व्यवहारमुपदर्शयति। चर्मणीति।

साङ्ख्यकारिकायां श्रद्धोत्पादनाय कारिकान्तरमवतारयति। स्यादेतदिति। पापात् पुनातीति पावनमिति व्युत्पत्त्या पावनत्वं तस्य दर्शयति। दुःखत्रयहेतोः पाप्मन इति।

आर्यमतिनेत्यत्र आर्यपदार्थमाह। आरादिति। आरात्तत्त्वसमीपं याता गता मतिर्यस्य तथा भूतेन तत्त्वदर्शिनेत्यर्थः। अथवा अतत्त्वेतिच्छेदः आरात् दूरं याता गता अतत्त्वे मतिर्यस्य तथाभूतेन अविद्याविरहिणेत्यर्थः।

यदि सकलशास्त्रार्थप्रतिपादकत्वमस्य ग्रन्थस्य तदा पूर्वग्रन्थेनैव निर्वाहादस्य वैयर्थ्यं इत्यत आह। सूचकत्वादिति। तथाच पूर्वग्रन्थानामतिविस्तृतत्वेन अनायासेन न तैः शास्त्रप्रतिपत्तिः सम्भवतीत्यत एतस्य न वैयर्थ्यम्।

मूले सप्तत्यां सप्ततिसंख्यकायां कारिकायां येऽर्थाः प्रतिपादिताः त एव कृत्स्नस्य सम्पूर्णस्य षष्टितन्त्रस्य षष्टिपदार्थस्य। नच पूर्वग्रन्थेषु आख्यायिकानां परवादादेश्चसत्त्वात् कथं त एव षष्टितन्त्रस्येति प्रश्ने आह। आख्यायिकेति। आख्यायिकाः कथाः ताभिः विवर्जिता परवादैश्च विवर्जिताः येऽर्थाः षष्टितन्त्रस्य ते सर्वेपि अत्र निरूपिता एवेत्यर्थः।

"प्रधानास्तित्वमेकत्वमर्थवत्त्वमथाऽन्यता ।
पारार्थ्यं च तथाऽनैक्यं वियोगो योग एव ॥
शेषवृत्तिरकर्तृत्वं मौलिकार्थाः स्मृता दश ।
विपर्ययः पञ्चविधस्तथोक्ता नव तुष्टयः ॥
करणानामसामर्थ्यमष्टाविंशतिधा स्मृतम् ।
इति षष्टिः पदार्थानामष्टाभिः सह सिद्धिभिः" इति ॥

सेयं षष्टिपदार्थी कथितेति सकलशास्त्रार्थकथनान्नेदं प्रकरणमपि तु शास्त्रमेवेदमिति सिद्धम् । एकत्वमर्थवत्त्वं पारार्थ्यञ्च प्रधानमधिकृत्योक्तम् । अन्यत्वमकर्तृत्वं बहुत्वञ्चेति पुरुषमधिकृत्य । अस्तित्वं वियोगो योगश्चेत्युभयमधिकृत्य । वृत्तिः स्थितिरिति स्थूलसूक्ष्ममधिकृत्य ।

मनांसि कुमुदानीव बोधयन्ती सतां सदा ।
श्रीवाचस्पतिमिश्राणां कृतिः स्तात् तत्त्वकौमुदी ॥

इति षड्दर्शनटीकाकृच्छ्रीमद्वाचस्पतिमिश्रविरचिता
साङ्ख्यतत्त्वकौमुदी समाप्ता ॥

## समाप्तोऽयं ग्रन्थः ।

---

षष्टितन्त्रप्रतिपाद्यं राजवर्तिकं दर्शयति । तथाचेति । मौलिकार्थाः प्रधानभूता अर्थाः एतेषां विपर्ययकारणत्वात् । सेयं उक्तराजवार्तिकोक्ता, कथितेति । भेदानां परिमाणादित्यनेन प्रधानास्तित्वं, व्यक्तं विपरीतमव्यक्तमित्यनेनैकत्वं, प्रीत्यप्रीतिविषादात्मका इत्यनेन अर्थवत्त्वं, त्रिगुणमविवेकि विषय इत्यनेन पुरुषादन्यत्वं, नानाविधरूपायैरित्यादिना शेषवृत्तिः, जननमरणकरणानामित्यादि–पुरुषबहुत्वं सिद्धमित्यन्तेन पुरुषबहुत्वं, रङ्गस्य दर्शयित्वा इत्यादिना वियोगः, संयोगस्तत्कृतः सर्ग इत्यादिना सयोगः, सम्यग्ज्ञानाधिगमादित्यनेन स्थूलसूक्ष्मशरीरद्वयस्थितिरूपा शेषवृत्तिः, तद्विपरीतस्तथाच पुमानित्यनेन अकर्तृत्वं, पञ्च विपर्ययभेदा इतिकारिकायां विपर्ययतुष्टयशक्त्यादयश्च कथिता इत्यर्थः । मौलिकानां दशानामर्थानां विभागं दर्शयति । एकत्वमित्यादि ।

मनांसीति । यथा चान्द्रकौमुदी कुमुदानि बोधयति एवमेव तत्त्वकौमुदीयं रागद्वेषशून्यानां कुमुदानीव स्वच्छानि मनांसि बोधयन्ती भवतु । इति शम् ।

स्तुत्वा यद्गुरुपादपङ्कजमिमां व्याख्यां समारब्धवान् ।
तस्यैव कृपयाऽन्तरायरहितं सेयं समाप्तिं गता ॥
गूढार्थानपि कौमुदीविनिहितान्सद्दर्शयन्ती सतां ।
छात्राणामुपकारिणी च विदुषां भूयान्मनोमोदिनी ॥ १ ॥
श्रीराजेश्वरशिष्येण हरिरामेण निर्मिता ।
कौमुद्याः सुषमाव्याख्याऽनिशमातनुतां मुदम् ॥ २ ॥

इति श्रीन्यायाचार्यहरिरामशुक्लविरचिता सुषमाख्या साङ्ख्यतत्त्वकौमुदीव्याख्या समाप्ता ।